169.

पूर्व्वोक्तविधानेन पीत[1]भृँकारनिष्पन्नां चतुर्भुजैकमुखीं पीतां त्रिनेत्रां नवयौवनां वरदाक्षसूत्रधरदक्षिण[2]करां [3]त्रिदण्डीकमण्डलुधरवामकरां अमिताभमुद्रितां पद्म-चन्द्रासनस्थां भगवतीं ध्यात्वा मुद्रां बन्धयेत् । प्रसारित-हस्तद्वयाङ्गुष्ठाभ्यां कनिष्ठिका[4]नखद्वयं [5]पिधाय ततो मन्त्रं जपेत् ॐ भृँ[6] स्वाहा ।

॥ भृकुटीसाधनम् ॥

[1] AC भृँ०, B ऊं० ।
[2] ANC करधरां ।
[3] Repeated in Ba.
[4] Ba ०ष्ठिकां ।
[5] Ba omits from पिधाय to the end of the *Sādhana*.
[6] ANC भृकुटी ।

170.

[1]नमो भृकुट्यै ।

पूर्व्वोक्तविधानेन स्वहृदीन्दुमध्ये बीजं षष्ठस्य चतुर्थं प्रथमाष्टमेन पूरितं [2]शून्यदेवेनाक्रान्तं अर्द्धेन्दुना शिरसि भूषितं तेनैव निष्पन्नां भृकुटीं पीतवर्णां चतुर्भुजां जटामकुटधरां शान्तां दक्षिणे वरदां अक्षसूत्रधरां वामेन त्रिदण्डी[3]कमण्डलुधरां पद्मचन्द्रासनस्थां भावयेत् । ततो मुद्रां बन्धयेत् । [4]पूर्व्ववद् हस्तद्वयप्रसारितेनाङ्गुष्ठेन कनिष्ठिकानखं पिधाय पृथक् पृथक् शेषा वज्रलक्षणाः, [5]इयं भृकुटीमुद्रा । पश्चात् मन्त्रं जपेत् ॐ भृँ[6] स्वाहा ।

॥ भृकुटीसाधनम् ॥




END OF VOLUME ONE.

[1] This *Namaskāra* is found only in Ab.

[2] B सूच्य० । [3] ANC ०दण्ड० ।

[4] Ba omits पूर्व्वव०......भृकुटीमुद्रा ।

[5] A इति । [6] A भ, NBBa भृः ।

# GAEKWAD'S ORIENTAL SERIES.

**Critical editions of unprinted Sanskrit Works, edited by competent scholars and published by the Central Library, Baroda.**

Rs. A.

1. **Kāvyamīmāṃsā** by Rājaśekhara. Re-issue, 1924 .. 2-4

   *This book has been set as a text-book for the Acharya Examination of the Patna University.*

2. **Naranārāyaṇānanda** by Vastupāla, edited by C. D. Dalal, M.A., 1916 .. .. .. .. 1-4
3. **Tarkasaṃgraha** by Ānandajñāna or Ānandagiri, edited by T. M. Tripathi, B.A., 1917 .. .. .. 2-0
4. **Pārthaparākrama** by Prahlādanandeva, edited by C. D. Dalal, M.A., 1917 .. .. .. .. 0-6
5. **Rāṣṭrauḍhavaṃśa-Mahākāvya** by Rudrakavi, edited by E. Krishnamacharya. Introduction by C. D. Dalal, M.A., 1917 .. .. .. .. 1-12
6. **Liṅgānuśāsana** by Vāmana, edited by C. D. Dalal, M.A., 1918 .. .. .. .. 0-8
7. **Vasantavilāsa** by Bālachandrasūri, edited by C. D. Dalal, M.A., 1917 .. .. .. .. 1-8
8. **Rūpakāṣṭaka** by Vatsarāja, edited by C. D. Dalal, M.A., 1918 .. .. .. .. 2-4
9. **Mohaparājaya** by Yaśaḥpāla, edited by Muni Chatur-Vijayaji. Introduction and appendices by C. D. Dalal, 1918 .. .. .. .. .. 2-0
10. **Hammīramadamardana** by Jayasiṃhasūri, edited by C. D. Dalal, M.A., 1920 .. .. .. 2-0
11. **Udayasundarīkathā** by Soḍḍhala, edited by C. D. Dalal, M.A., and E. Krishnamacharya, 1920 .. 2-4
12. **Mahāvidyāviḍambana** by Bhaṭṭa Vādīndra, edited by M. R. Telang, 1920 .. .. .. 2-8
13. **Prāchīnagurjarakāvyasaṃgraha**: collection of old Gujarati poems—12th to 15th centuries, edited by C. D. Dalal, M.A., 1920 .. .. .. 2-4
14. **Kumārapālaprartibodha** by Somaprabhacārya, edited by Muni Jinavijayaji, 1920 .. .. .. 7-8
15. **Gaṇakārikā** by Bhāsarvajña, edited by C. D. Dalal, M.A., 1920 .. .. .. .. 1-4
16. **Saṅgītamakaranda** by Nārada, edited by M. R. Telang, 1920 .. .. .. .. .. 2-0

Rs. A.

17. **Kavīndrācārya's List:** List of works in the collection of Kavīndrācārya, a 17th century Pandit, edited by R. A. Shastry, with a foreword by Dr. Ganganatha Jha, 1921 .. .. .. .. 0–12

18. **Vārāhagṛhyasūtra,** edited by Dr. R. Shama Shastry, 1921 .. .. .. .. .. 0–10

19. **Lekhapaddhati:** Specimen Sanskrit letters, etc., 8th to 15th centuries, edited by C. D. Dalal, M.A. and G. K. Shrigondekar, M.A. .. .. (*Shortly*)

20. **Pañchamīkahā or Bhavisayattakahā,** by Dhanapala, edited by C. D. Dalal, M.A. and Dr. P. D. Gune, M.A., Ph.D., 1923 .. .. .. .. 6–0

21. **A Descriptive Catalogue of the palm-leaf MSS and Important Paper MSS in the Bhandars at Jaisalmere,** compiled by C. D. Dalal, M.A., and edited by L. B. Gandhi, 1924 .. .. .. 3–4

22, 23. **Parasurāmakalpasūtra:** with commentary by Rāmesvara and Paddhati by Umananda, edited by A. Mahadeva Shastry, B.A., Director, Adyar Library, 2 vols, 1923 .. .. .. .. 11–0

24. **Tantrarahasya,** edited by Dr. R. Shama Shastry B.A., Ph.D., Curator, Government Oriental Library, Mysore, 1923 .. .. .. .. .. 1–8

25. **Samarāṅgaṇa,** a work on architecture by King Bhojadeva, edited by Mahamahopadhaya T. Ganapati Shastri, Ph.D., M.R.A.S. 2 vols—vol. I, 1924 .. .. 5–0

26. **Sādhanamālā,** edited by Benoytosh Bhattacharyya, M.A., General Editor, Gaekwad's Oriental Series, 2 vols—vol. I, 1925 .. .. .. .. 5–0

## BOOKS IN THE PRESS.

1. **Tattvasamgraha:** a Buddhist philosophical work of the 8th century by Śāntarakṣita, with Pañjikā by Kamalaśīla: edited by E. Krishnamacharya. 2 vols.

2. **Nyāya-Praveśa:** earliest work on Buddhist logic, by Diṅnāga, with commentaries of Haribhadra Sūri and Pārśvadeva: edited by A. B. Dhruva, M.A., LL.B., Pro-Vice-Chancellor of the Hindu University, Benares.

3. **Sādhanamālā (Vol. II):** a Buddhist Tantric text of rituals, dated 1165 A.D. consisting of more than 300 small works composed by distinguished writers: edited by Benoytosh Bhattacharyya, M.A. (Illustrated.)

4. **Nāṭyaśāstra** of Bharata, with commentary by Abhinava-Gupta of Kashmir: edited by M. Ramkrishna Kavi, M.A. Illustrated 4 vols.

5. **Catalogue of Sanskrit Manuscripts** in the Central Library, Baroda. Vol. I (Vedic). Compiled by G. K. Shrigondekar, M.A. and K. S. Ramaswamy Sastri, assisted by other members of the Editorial Staff.

6. **Advayavajrasamgraha:** consisting of twenty smaller works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A.D.: edited by Mahamahopadhyaya Pandit Haraprasad Shastri, M.A., C.I.E., F.A.S.B.

7. **Kalpadrumakoṣa of Keśava:** a standard work on Sanskrit Lexicography: edited by Pandit Ramavatara Sarma Sahityacharyya M.A., of Patna.

8. **Mānava-Gṛhyasutrabhāṣya of Aṣṭāvakra:** edited by Pandit Rāma-Kṛṣṇa-Harshaji of Ahmedabad, with introduction by Prof. B. C. Lele, M.A., of Baroda.

9. **Nalavilāsa:** a drama by Rāmachandra Sūri, pupil of Hemachandra Sūri: edited by Messrs G. K. Shrigondekar, M.A., and L. B. Gandhi of the Central Library Department.

10. **Apabhraṃśa-Kāvyatrayī:** consisting of three works, the *Carcari, Upadeśarasāyana* and *Kālasvarūpa-Kulaka* by Jinadatta Sūri (12th century) with commentaries: edited by Pandit L. B. Gandhi of the Central Library Department.

11. **Mānasoliāsa** *alias* **Abhilasitārtha-Cintāmaṇi:** divided into one hundred chapters treating of one hundred different topics by Chalukya Someśvaradeva (12th century): edited by Mr. G. K. Shrigondekar, M.A., of the Central Library Department.

12. **A Descriptive Catalogue of MSS in the Jain Bhandars at Pattan** (in two volumes): edited from the notes of the late Mr. C. D. Dalal: by Pandit L. B. Gandhi of the Central Library Department.

13. **Samarāṅgaṇa** of King Bhoja (Vol. II): edited by Mm. Gaṇapati Śāstri of Trivandrum.

**Ready January, 1925.**

**Supplement (or Khatimae) to the Mirat-i-Ahmadi** translated from the Persian of Ali Mahamad Khan, the last Moghul Dewan of Gujarat, by Syed Nawabali, M.A., Professor of Persian, Baroda College, Fellow of Bombay University, author of Tarikh-i-Sofar, Tazkirat-ul-Mustafa, etc., and Charles Norman Seddon, I.C.S. (retired), late Revenue Minister, Baroda State, with notes, appendices and three illustrations. 270 pages demy 8vo, cloth. Price about Rs. 8.

This work gives an interesting description of the city of Ahmedabad and the Province of Gujarat in the middle of the 18th century.

## 103.

मृत्यु[1]दोषै[2]र्लिप्तः स्यात् ताराहृच्चक्र[3]भावकः ।
लाभी च सर्व्वसिद्धीनां षण्मासावधि तत्परः ॥
वागीश्वरकृतादेशात् मृत्युवञ्चनसंग्रहात् ।
उद्धृता सिततारायाः भावना भय[4]नाशनी ॥
तुर्य्यवर्गाद्यसाकारत्विषा विस्फुरिताऽम्बरे[5] ।
सिताब्जेन्द्वासनां दृष्ट्वा पुर[6]स्त्रिशरणं पठेत् ॥
मुहूर्त्तं शून्यतां पश्येत् प्राकृतारोपहानये ।
ततः प्रकृतिसामर्थ्याद् बोधिचित्ताक्षरं भवेत् ॥
सितारविन्दमध्यस्थचन्द्रबिम्बासनोपरि ।
आबद्धवज्रपर्य्यङ्कां वरदोत्पलधारिणीम् ॥
शरच्चन्द्रकराकारां पृष्ठचन्द्रसमाश्रिताम् ।
सर्व्वालङ्कारसम्पूर्णां षोडशाब्दवपुष्मतीम् ॥
सर्व्वसम्बुद्धतत्पुत्र[7]मातरं काम[8]रूपधाम् ।
ध्यात्वाऽऽर्य्यतारां हृदये तस्याश्चक्रं सितद्युति ॥
अष्टकोष्ठकमष्टाभिरक्षरैः परिपूरितम् ।
ॐह्राव्यञ्जनमध्यस्थसाध्यनामा[9]द्यनाभिकम् ॥
ध्यायादेकाग्रचित्तः सन् षण्मासान् दृढनिश्चयः ।
जपेदखिन्नचित्तः सन् मन्त्रमेनं दशाक्षरम् ॥

---

[1] ANC मन्त्र° ।
[2] Ab °र्न्निलिप्तः ।
[3] ANC हृच्चन्द्र° ।
[4] A भव° ।
[5] A °ताम्बरः, N °तानुते ।
[6] N पुनः ।
[7] A °माच° ।
[8] A °रंकार° ।
[9] B °घना° ।

ॐकारमादितो दत्वा पश्चात् तारे[1] प्रयोजयेत् ।
तुत्तारे स्यात् तुरे पश्चात् स्वाहान्तः [2]सार्व्वकामिकः ॥

ब्रह्मेन्द्रविष्णुचन्द्रार्करुद्रदिक्कालमन्मथैः ।
अप्यखण्डितरोमाग्रो मृत्युं जयति मुक्तवत् ॥

वलिपलितदौर्भाग्यव्याधिदारिद्र्यसंक्षयः ।
सिंहाद्यष्टमहाभीतिदुःखसन्दोहनाशनः ॥

[3]अयाचिताम्बरपानान्नहर्म्य[4]रत्नादिसङ्गमः ।
[5]खड्गाञ्जनपादलेपभद्रकुम्भादिसिद्धयः ॥

कविता [6]वक्तृता मेधा प्रज्ञा चैकान्तनिर्मला ।
अन्या च वाञ्छिता सिद्धिश्चक्रादस्मात्[7] प्रजायते ॥

साधनं सिततारायाः मृत्युव्याधिविनाशनम् ।
उद्धृत्य यच्छुभं तेन जगत् तारा[8] स्वयं भवेत् ॥

॥ मृत्युवञ्चन[9]सिततारासाधनम् ॥

---

[1] A पश्चारे ।
[2] A सार्थ० ।
[3] AC अयचिता० ।
[4] AC हर्म्मे बलादि० ।
[5] A खड्गाञ्जन ।
[6] A च क्ततो ।
[7] AC ०श्चक्रादस्मीन् ।
[8] A जगतस्तारा ।
[9] B सिततारा० ।

104.

पूर्ववच्छून्यताद्यनन्तरं[1] सुँकारपरिणतं नानारत्नमयं सुमेरुं तदुपरि पँकारेण श्वेतपद्मं तदुपरि [2]अकारेण चन्द्रमण्डलं तन्मध्ये शुक्लहुँकारनिष्पन्नां ताराभगवतीं शुक्लां त्रिनेत्रां चतुर्भुजां पञ्चतथागतमुकुटीं नानालङ्कारां भुजद्वयेनोत्पलमुद्रां दधानां दक्षिणभुजेन चिन्तामणि-रत्नसंयुक्तवरदां सर्व्वसत्त्वानामाशां परिपूरयन्तीं वामे नोत्पलमञ्जरीं बिभ्राणां ध्यायात्। तस्या दक्षिणपार्श्वे मारीचीं पीतां चन्द्राननां नीलाम्बरां द्विभुजां वामेन रक्ताशोकपल्लवधरां दक्षिणेन सितचामरधरां रक्तकञ्चुका-भरणां वामपार्श्वे महामायूरीं प्रियङ्गुश्यामां द्विभुजां वामेन मयूरपिच्छ[3]धरां दक्षिणेन चामरधरां एवं विचिन्त्य ॐ भगवति [4]तारे मम हृदये[5] प्रविश स्वाहा इत्यात्मान-मधितिष्ठेत्। ततो मन्त्रं जपेत्। ॐ नमस्तारे मनोहरे हुँ हरे[6] स्वाहा।

॥ सिततारासाधनम् ॥

---

[1] B ०भावनानन्तरं। [2] A सुंका, B अका०।
[3] A ०पुच्छ०। [4] A तारा।
[5] AC हृदयं। [6] B हर।

105.

तथैव शून्यताभावनानन्तरं रेफपरिणतसूर्य्यस्थहुँभव-विश्ववज्रपरिणतवज्रप्राकारादि विचिन्त्य तन्मध्ये [1]पँकारज-पद्मोपरि अकारजचन्द्रे सितहुँकारजं सबीजोत्पलं पश्येत्। [2]तत्स्फुरणादिपूर्व्वकं तत्परिणतां भगवतीं सिततारां त्रिमुखां षड्भुजां पीतनीलदक्षिणेतरमुखीं प्रतिमुखं त्रिनेत्रां वरदाक्षसूत्रशरधरदक्षिणत्रिकरां उत्पलपद्मचाप-धरवामपाणित्रयां अर्द्धपर्य्यङ्कनिषण्णां चन्द्रासनचन्द्रप्रभां जटामुकुटस्थितामोघसिद्धिं पञ्चमुण्डविभूषितमस्तकां अर्द्ध-चन्द्रकृतशेखरां नानालङ्कारधरां द्विरष्टवर्षाकृतिमष्ट-श्मशानमध्यस्थितां हृच्चन्द्रस्थितनिजबीजमात्मानं विचिन्त्य मन्त्रं जपेत् ॐ अचले अनिमित्तवरे हुँ हुँ फट् फट्[4] स्वाहा। पोषधेन पूजापुरःसरं चतुःसन्ध्यायां मासैकं [5]जपतः शान्तिकादि[6] भवतीति।

॥ षड्भुज शुक्लतारासाधनम् ॥

---

[1] A पंत्रच्छपद्मो०। [2] AB स्फुरणा०।
[3] B omits ०श्मर०। [4] One फट् is dropped in B.
[5] B जपेत्। [6] A शान्तिकारा हि, C शान्तिकारादि।
[7] B शुक्लतारा०।

106.

जाङ्गुलीतारायै नमः।

नत्वा भगवतीं तारां जाङ्गुलीरूपधारिणीम्।
सत्त्वानामनुकम्पार्थं लिख्यते तत्प्रसा[1]धनम्॥

प्रथमं तावन्मन्त्री शुचिः स्नातः शुक्लमाल्याम्बरधरो विजने सुलिप्ते प्रदेशे शुक्लसुगन्धि[2]तोयोपसिक्ते शुक्लपुष्प-प्रकरावकीर्णे सुखासनोप[3]विष्टो जगति मैत्रीं करुणां च विभाव्य ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽह-मित्युच्चारयेत्। ततः शून्यतामामुखीकृत्य चिन्तयेत् शुक्ल-पँकारजपद्मं[4] शतपत्रं शुक्लं तदुपरि अकारजचन्द्रमण्डलो-परि शुक्लह्रीःकारं स्फुरदनेकरश्मिनिकरं तद्भवां जाङ्गुलीं भगवतीं भावयेत् शुक्लवर्णां चतुर्भुजां जटामुकुटिनीं शुक्लां शुक्लोत्तरीयां सितरत्नालङ्कारवतीं शुक्लसर्पैर्भूषितां सत्त्व-पर्य्यङ्कासनासीनां मूलभुजाभ्यां वीणां वादयन्तीं द्वितीय-वामदक्षिणभुजाभ्यां सितसर्पा[5]भयमुद्राधरां चन्द्रांशु-मालिनीं ध्यायात्। शिरसि कण्ठे[6]स्तनान्तरे नाभौ चन्द्र-मण्डलस्थ-आः-ह्रीः-हुँकारान् विभावयेदाखेदं यावत्। तदनु मन्त्रं जपेत् ह्रीः। सप्तलक्षं जपेत्, सप्तायुतं जुहुयात् सितपुष्पं सितालङ्कारधरः सन्। ततो भवति गरुडेश्वर-प्रभावः कविः सर्व्वशास्त्रविशारद इति।

॥ आर्य्यजाङ्गुलीतारासाधनं समाप्तम्[7] ॥

---

[1] BN तस्य सा०।
[2] A ०तयो०।
[3] N ०सने उप०।
[4] ०पद्मं dropped in AN.
[5] A ०सर्प्प०।
[6] ANC स्तनान्ते चन्द्र०।
[7] AB omits.

107.

नम आर्य्यतारायै ।

[1]तारा हरितैकमुखी चतुर्भुजा द्विनयना स्तवतुष्टा[2] ।
यस्या मण्डलचक्रे द्वादश देव्यो द्विनयनाश्च ॥
भगवत्यार्य्यताराया विशिष्टमति दुर्लभम् ।
प्रवक्ष्यामि समासेन धनदाक्रमसाधनम् ॥

[3]प्रातः कृतबोधिचित्तोत्पादो योगी स्वहृच्चन्द्रे हरिततां-[4]कारं दृष्ट्वा कृतमुखशौचादिकः ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्युच्चार्य्य ॐ अमृते हुँ फट् इत्य[5]नेन नाना[6]च्छटाभिर्दशदिग्विघ्ना[7]नुत्सार्य्य स्वहृदि पँकारजरक्त-कमलोपरि अकारजचन्द्रस्थं स्वबीजं विभाव्य तत्किरणा-कृष्टगगनस्थगुरुबुद्धबोधिसत्त्वान् सम्पूज्य पापदेशनादिकं विधाय शून्यतां च ध्यात्वाऽधिष्ठ्य च पुरतो रक्तरेफपरिणत-सूर्य्यस्थकृष्णहुँकारजविश्ववज्रं विलोक्य तत्किरण[8]वज्रैर्वज्र-प्राकारं वज्रपञ्जरं वज्रभूमिं च ध्यायात् । अथ विश्ववज्र-वेदिकायां रक्तपँकारजकमलोपरि अकारजचन्द्रस्थशुभ्र-भ्रुँकारपरिणतं सितचक्रं भ्रुँकारमध्यं[9] दृष्ट्वा पद्मचन्द्रे चक्रबीजपरिणामजं सर्व्वरत्नमयं चतुरस्रादिगुणयुक्तं द्विपुटं गर्भपुटस्थकमलाष्टदलकर्णिकासु नवचन्द्र[10]रूपशोभितं चतु-

[1] ह्यारा in B.
[2] AB द्विनयनो स्तवतुष्टो ।
[3] A विशिष्टं मन्त्र० ।
[4] A पीतः ।
[5] A अमृतहुङ्गिन्य० ।
[6] BN drop नाना० ।
[7] A ०दिग्विग्मा०, N ०दिग्वि विघ्ना० ।
[8] A ०वज्रि वज्र० ।
[9] A ०मध्यस्थं ।
[10] N ०चन्द्रे ।

[illegible]भासुरं कूटागारं पश्येत्। ततो मध्यचन्द्रो-[illegible]मेव ताँकारम्,[1] ततः स्फुरणसंहरणम्, ततस्त-[2][illegible] ताराभगवतीमात्मानं भावयेत् चन्द्रासनप्रभां सौम्यां सत्त्वपर्य्यङ्कस्थां हरितश्यामामेकवदनां द्विलोचनां चतुर्भुजां अक्षसूत्रवरदोत्पलपुस्तकधरां विचित्रवस्त्रा-[illegible]ङ्कारवतीम्। ततः[3] ॐ शिरसि, ता[4] ललाटे, रे चक्षुषोः, तु कण्ठे, त्ता[5] बाह्वोः, रे हृदये, तु नाभौ, रे गुह्ये, स्वा जानुनोः, हा पादयोर्न्यस्येत्। ततो हृदये पद्म-चन्द्रस्थस्वबीजरश्मिसञ्चोदितलोचनादिभिर्देवीभिरभि-षिक्तमात्मानममोघसिद्धिमुकुटं ध्यायात्। अथवा पुटस्थ-चन्द्रेषु वज्रतारादिदेवीर्झटिति दृष्ट्वा पश्चाद् विभावयेत्। पूर्व्वे वज्रतारां कृष्णां वज्रहस्ताम्, दक्षिणे रत्नतारां पीतां रत्नहस्ताम्, पश्चिमे पद्मतारां रक्तकमलहस्ताम्, उत्तरे बुद्धतारां शुक्लां चक्रधारिणीम्, आग्नेयकोणे पुष्पतारां सितां पुष्पदामधराम्, नैऋत्यकोणे धूपतारां कृष्णां धूप-कटच्छूहस्ताम्, वायव्यकोणे दीपतारां पीतां दीपयष्टि-धराम्, ऐशानकोणे गन्धतारां रक्तां गन्धशङ्खधराम्। इमा विश्वपद्मपत्रस्थचन्द्रेष्वष्टौ शशिप्रभाः सत्त्वपर्य्यङ्कनिषण्णा वामे-नोत्पलधारिकाः स्मेरवदना नानालङ्कारवस्त्रधारिण्यः। पूर्व्वद्वारे वज्राङ्कुशीं कृष्णां वज्राङ्कुशकराम्, दक्षिणे वज्र-पाशीं पीतां वज्रपाशहस्ताम्, पश्चिमे वज्रस्फोटां रक्तां वज्रस्फोटधारिणीम्, उत्तरे वज्रघण्टां शुक्लां वज्रघण्टा-

---

[1] A भकारं।

[2] A तं तमबी०।

[3] C adds भुँ after ततः।

[4] C तो।

[5] AC ता।

हस्ताम्। एता[1]श्चतुर्द्वारस्थ्येषु पश्येत् सूर्य्यप्रभाः पिङ्गलोर्द्ध्वज्वलत्केशा आलीढपदस्थिता भुजङ्गभूषणा विकृतवदना व्याघ्रचर्म्माम्बरधरा वामकरेणोत्पलधारिकाः। ततो ज्ञानसत्त्वेन सहैकीकृत्य स्वहृत्कमलगतस्वबीजमतिसूक्ष्मं भावयेत् निश्चलेन मनसा। ततो मन्त्रं जपेत् ॐ तारे तुत्तारे तुरे धनं मे दद स्वाहा। तत उत्थानसमये ॐ अकारो मुखमित्यादिना मन्त्रेणोत्पलमुद्रया बलिं दत्त्वा प्रणिधिं [2]विधाय देवताचक्रं [3]स्वबीजे अन्तर्भाव्य स्वदेवताहङ्कारमुद्वहन् यथासुखं विहरेत्। मध्याह्नसायाह्नसन्ध्ययोस्तु स्वहृद्बीजात् झटिति देवताचक्रं संस्फार्य्य पूर्ववद् ध्यानजपादिकं कुर्य्यात्। सायाह्न[4]मध्याह्नसन्ध्यायां पुनरयं विशेषः। पुष्पादिना ज्ञानमण्डलं सम्पूज्य ॐ तारे तुत्तारे तुरे[5] मुरित्यनेन विसर्जयेदिति।

## ॥ धनदतारासाधनम् ॥

---

[1] A एतासु चतु०।

[2] A विध्यपदेवता०।

[3] A स्वबीर्य्यान्तं; C omits स्वबीजे...... ०जपादिकं।

[4] A मध्याह्नम् ध्यानसन्ध्या०।

[5] तुरे dropped in A.

## 108.

नमो रत्नत्रयाय ।

नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय नमस्तारायै, तद्यथा, ॐ तारे तारय हुँ हुँ हुँ समयस्थिते भर[1] सर्व्वाभरणभूषिते पद्मे पद्मे पद्मभुजे पद्मासनस्थे हस हस त्रैलोक्यवरदे सर्व्वदेवदानवपूजिते स्मराहि[2] भगवत्तथागतपुरतः समयं धर धर महासत्त्वावलोकिते मणिकनकविचित्राभरणे ॐ विलोकय भगवति तारे हुँ हुँ हुँ फट् स्वाहा। मूलमन्त्रः सधातुके चैत्ये अष्टोत्तरसहस्रं जपेत्। ततो हि पूर्णे सति भगवती[3]मार्य्यतारां पश्यति, यमिच्छति तं वरं लभते। ॐ मणितारे हुँ लक्षजापेनार्य्या अग्रत उपतिष्ठति, यदिच्छति तत् सर्व्वं ददाति। विना मण्डलकस्नानोपवासेन केवलं जापमात्रेण सिध्यति। सर्व्व[4]कार्य्यं च साधयति।

॥ लब्धा(म)मिताभगर्भतन्त्रे[5] भगवत्यार्य्यताराया: कल्पोद्देशः समाप्तः ॥

---

[1] A भरभु, C भरभ्र ।
[2] N स्मराहि ।
[3] A मार्य्या ।
[4] A ०कार्य्येति ।
[5] A ०ताभतन्त्रे ।

109.

नमस्तारायै[1] ।

स्रग्भाजो भगवत्यास्तारायाः कतिपयोपचारोऽयम् ।
सर्व्वाज्ञानविनाशनहेतोस्तज्ज्ञैस्सदा कार्य्यः ॥

स्थाने शुचौ मनोज्ञे स्नातो मन्त्राम्बुयोगतः स्थित्वा ।
पूजोपचारयुक्ते तदभावे भाविते वापि ॥

पूर्व्वाभिमुखो योगी परहितमनसा विभाविता देवीम् ।
अर्ज्जुननीरजचन्द्रे स्थानमुपेतामनेकगुणबहलाम् ॥

शरदिन्दुधामधवलीं नवयौवनमण्डिताङ्गलक्ष्मीकाम् ।
नीलोत्पलदलनयनां सीमान्ते भक्तनागसम्भूताम् ॥

कुण्डलरुचकाङ्गदकै रसनामञ्जीरघुर्घुरासहितैः ।
संशोभिगात्रयष्टिं मुक्ताफलमाल्यचारुकुचयुग्माम् ॥

मण्डितदुकूलवसनां कर्णोत्पलहारिचाप[व]ङ्कुकाम् ।
चिन्तावचनविलोकनहृत्पापां सर्व्वसत्त्वानाम् ॥

रत्नांशुजालबहलितजाम्बूनदपट्टशोभिमूर्द्धानम् ।
अमिताभबुद्धमध्यां जटिकां दधतीं मनोहरामेवम् ॥

या भगवती सोऽहं योऽहं सा भगवतीत्यहङ्कार-मुत्पादयेत् । सर्व्वत्र पूजाविधानस्य मन्त्राधिष्ठानमार्य्य-कर्म्मकेन मन्त्रनीतिप्रयोगेन न कर्त्तव्यम् । एतच्च त्रिसन्ध्यं सर्व्वदा च नित्यस्नातेन गृहीतब्रह्मचर्य्येण त्रिवेलपरि-वर्त्तनतत्परेण दशकुशलकर्म्मपरिहारवता सर्व्वाकुशलपक्ष-कर्म्मपरिक्षयायोद्यतेन मनसा साधकेन तावदविरतं भाव-

[1] This *Sādhana* is found only in B. See Fol. 79 A.

स्थितव्यं यावदसौ भगवती स्वयं न भवति। अत्र चोपदेशो वाऽर्हतमोजालपटलविघटनापकरणीयः। तद्यथाऽलिगु-[ह्य]मध्यहरिणाङ्कवलयोपरि मायाबीजं स्रवत्सुधाधारिणं गुञ्जार्कसन्निभं तदधो वातमण्डलीस्थाने तत्त्वबीजसूर्य्य-कोटिसमप्रभं देदीप्यमानं सर्व्वमोहान्धकारं दशदिग्गत-मामूलं शोधयन्तं मूर्द्धबीजक्षरितामृतधाराभिः स्रव(न्यस्र)-मानं स्थिरमना दीर्घं भावयेत्। खिन्नश्च ततो जिह्वा-रुणाम्बुजदले गुरूपदेशतो बीजं ध्यात्वा ततो मन्त्रमालां निश्चरन्तीं मणिमन्त्रौषधिबलं तथागतज्ञानामृतं चाकृष्य जठरकूपे प्रविश्य तान्यधो व्याप्य पुनरुद्वहन्तीं निरीक्ष-माणो योगी मन्त्रं जपेत्। यद्येवमयं करोति तदाऽस्य सपद्यनुभवो महान् भवति, एवमेव यदि सप्ताहोराचान् करोति दृढध्यानस्तदा महाप्राज्ञो वाग्मी पटुः पद्यमुखभाषी गणज्ञोऽविरतवाक्यगद्यपद्यं करोति(कुहेडि)। संस्कृतान्य-यत्नतो वक्तुमलं भवति, नात्र विकल्पः करणीय इति।

अथ स्तुतिविधानमभिधीयते। योऽभूत् महापण्डितः श्रीसर्व्वज्ञमित्रनामा भगवतीताराचरणेनाविष्टमानसः काश्मीरकविबुधजनचक्रवर्त्तितिलकस्तेन वक्ततोऽपि सङ्कट-गतेन तामेव भगवतीमार्य्यतारामाराध्य मरणाभिलाष-परायणेन मनसा कृतोर्द्धदृष्टिना कृतकरपुटाञ्जलिना नवनुतिकुसुममालया दरिद्रस्य मम मन्दकर्म्मणः स्रग्धरा भव मातः परस्मिन्नपि जन्मनि भगवतीचरणकमललाभी भवेयमिति कृतप्रणिधिना भगवत्यभिष्टुता तेन स्रग्धरेति नाम उपपन्नम्। स्रग्धरानाम्ना च वृत्तेन रचितत्वादस्याः स्तुतेः स्रग्धरेति नाम समुदितम्, तन्नाम्ना भगवत्याः

स्तुतित्वाद् वा, उभयथाऽपि वा तन्नामानयोरुत्पत्तिरिति वार्त्ता।

इह हि प्रज्ञापारमितां साक्षादधिगन्तुकामो योगी विद्याधरोऽर्धमासं कालत्रयं पूर्व्वोक्तविधानसमापन्नः पूर्व्वोक्तसकलव्रताचारानुपालक एकमना विजने भगवतीं स्तुयादजस्रमविच्छिन्नम्। तत्र चोपदेशः पठनवेलाया-मुच्चारणमातरिमूलावलग्नाग्रेषु यथाक्रमं तत्त्वबीजशक्ति-बीजमायाबीजानि विन्यस्य भगवतिविदा काल[च]यो-च्छलितरश्मिसुस्नातः सन्नहमिति—

कृत्वा विधिमतियुक्तं तारायाः स्रग्धराया यत् कुशलम्।
तेन समस्तं भूयाज्जगदाशु तारिणीसदृशम्॥

॥ स्रग्धरायाः स्तुतिविधिः समाप्ता॥

---

110.

प्रणम्य तारिणीं भक्त्या सर्व्वसम्पत्तिवर्द्धनीम्।
लिख्यते साधनं तस्या यथाम्नायं समासतः॥

प्रथमं तावत् योगी सुरभिगन्धपुष्पा[1]दिमनोहरध्याना-गारा[2]दिकं प्रविश्य सुखासने पर्य्यङ्कं बद्धा स्वहृदये अकारपरिणतं चन्द्रमण्डलं तस्योपरि पीततांकारबीजं तत्किरणाकृष्टमभिमुखमाकाशदेशे भगवतीचक्रमवलोक्य स्वहृद्बीजनिःसृत[3]पुष्पादिदेवीः संस्फार्य्य पुष्पादिभिः पूजां

[1] A ०दिभिर्म०।
[2] A ध्यानागारा०।
[3] N पुष्पादिभिर्दे०।

विदध्यात् । ततस्तस्यैव भगवतीचक्रस्याग्रतः पापदेशनादिकं कुर्य्यात् । सर्व्वमात्मनः पापं प्रतिदेशयामि, सर्व्वबुद्धबोधिसत्त्वार्य्यपृथग्जनानां सर्व्वकुशलमनुमोदे[1] सर्व्वं चात्मनः कुशलमनुत्तरायां सम्यक्सम्बोधौ परिणामयामि, एषोऽहमाबो[2]धेर्बुद्धं शरणं गच्छामि द्विपदानामग्र्यम्, धर्म्मं शरणं गच्छामि समग्रं महायानम्, सङ्घं शरणं गच्छामि अवैवर्त्तिकबोधिसत्त्वगणम्, अहो बताहमनुत्तरां सम्यक्संबोधिमभिसंबुद्धेयं सर्व्वं[4] सर्व्वसत्त्वानामर्थाय हिताय सुखाय यावदत्यन्तनिष्ठे निर्व्वाणधातौ बुद्धबोधौ प्रतिष्ठापनाय च, एषोऽहमनुत्तरसम्यक्संबोधिमार्गमाश्रयामि यदुत वज्रयानम् । ततस्त्रिशरणगाथां पठेत् । ततः सर्व्वसत्त्वेषु सुखोपसंहाराकारां[5] मैत्रीम्, सर्व्वदुःखापनयनाकारां करुणाम्, दिव्यसुखावियोगनियमाकारां मुदिताम्, क्लेशप्रति[6]पक्षमार्गोपसंहाराकारां उपेक्षां भावयेत् ।

ततः सर्व्वधर्म्मान् मनसाऽवलम्ब्य विचारयेत् । चित्तमेवैतत् तेन तेनाकारेण भ्रान्तं प्रतिभासते । यथा स्वप्ने नास्ति [7]चित्तात् बाह्यचित्तं बाह्यग्राह्याभावात् चित्तमपि ग्राहकं भवति । तस्माच्चित्तशरीराः सर्व्वधर्म्माः तेषां ग्राह्यग्राहकशून्यता परमार्थ इत्येवमेकान्तेन निश्चित्य भ्रान्तिसमारोपितं भ्रान्तिचिह्नं सर्व्वधर्म्माणामाकारमपहाय तेषां [8]प्रकृतिमेव केवला[9]मद्वयविज्ञप्तिलक्षणां

[1] A ०कुशलमाह ।

[2] A ०धिबु० ।

[3] A ०त्तरायां ।

[4] AN omit.

[5] C ०कारी ।

[6] A ०यक्षमामेय० ।

[7] N चित्ते ।

[8] AC प्रतिकृति० ।

[9] NC ०नामद्वय० ।

शुद्धस्फटिकसङ्काशां शरदमलमध्याह्नगगनोपमामनन्तां पश्येत्। इदमुच्यते लोकोत्तरं शून्यताज्ञानं निष्प्रपञ्चं निर्विकल्पम्। ततस्तन्मन्त्रेणाधितिष्ठेत् ॐ शून्यताज्ञान-वज्रस्वभावात्मकोऽहम्। सैव भगवती प्रज्ञापारमिता सैव परमा रक्षा। ततस्तस्य निष्यन्दभूतामाकारवतीं रक्षां शुद्धलौकिकज्ञानस्वभावां भावयेत्। ततो रेफेण सूर्य्यं पुरतो विभाव्य तस्मिन् रवौ[1] हुँभवं[2] विश्ववज्रं तेनैव वज्रेण विभावयेच्च प्राकारकं वज्रपञ्जरबन्धनं च विश्ववज्रकिरणैः प्रलयानलदुःसहैः सर्व्वतः स्फुरित्वा घनीभूय रचितं तिर्य्यक् चतुरस्रं ज्वलद्वज्रप्राकारं उप-रिष्टाच्च वज्रपञ्जरमधस्तात्[3] वज्रमयीं भूमिमारसातल-विरचितां पश्येत्। ततो रविविश्ववज्राभ्यां रश्मीभूय दशदिशि[4] स्फुरित्वा घनीभूय बहिर्द्वारे सीमाबन्धः कार्य्य इति श्लोकार्थः। तन्मध्ये आकाशमहाभूतस्वभावं धर्म्मो-दया[5]ख्यं महावज्रधरस्वभावं शरच्छशधरधवलमधः सूक्ष्मं उपरि विशालं त्रिकोणं अन्तर्गगनस्वरूपं तन्मध्ये विश्वदल-कमलकर्णिकावस्थितविपुलविश्ववज्रं तद्वेदिकायां चत्वारि महाभूतानि चतुर्मण्डलाकाराणि चतुर्द्देवीस्वभावानि उपर्य्युपरि पश्येत्। तत्रादौ यँकारेण वायव्यं धन्वाकारं धूमवर्णं कोटिद्वये चलत्पताकाङ्कम्, ततो रँकारेणाग्नेयं त्रिकोणं रक्त[6]कोणेषु रेफाङ्कम्, ततो वँकारेण वारुणं वर्त्तुलं सितघटाङ्कम्, ततो लँकारेण माहेन्द्रमण्डलं चतुरस्रं

---

[1] A तस्मिन्नधो।
[2] A ॐकारभवं।
[3] A पञ्जल०।
[4] AC दिशि दिशि।
[5] A adds ध्यानकोणं।
[6] A रक्त०।

पीतं कोणेषु त्रिशूचिक[1]वज्राङ्कम्, तदुपरि भ्रुँकारजं चक्रं भावयेत्तदानीं तदेव लोकोत्तरं ज्ञानं व्यापकत्वेन स्थितं ततो विश्ववज्रं वेदिकामध्ये चतुर्म्महाभूत[2]परिणामजं परि-चतुरुक्षेत्रं संक्षेपरूपं महामोक्षपुरं वैरोचनस्वभावं नानारत्नमयं कूटागारम्—

चतुरस्रं चतुर्द्वारं अष्टस्तम्भोपशोभितम् ।
चतुर्वेदीपरिक्षिप्तं चतुस्तोरणमण्डितम् ॥

हारार्द्धहारपट्टस्रग्वितानादर्शचामरैः रुचिरवज्रसूत्रैश्च स्फुरद्बुद्धबोधिमंशुभिः चलच्चित्रपताकाग्रघण्टामुखर[4]दिङ्मुखं पुरमैः पञ्चकामोपहारैश्च हर्षणं द्विपुटं किञ्जल्केन भावये-देवं त्रिकोणेनापरं स्मृतम् । तन्मध्ये द्विगुनालिपरि[5]णतं चन्द्रं तदुपरि ताँकारपरिणतं वज्रं तद्वराटके ताँकारं ततोऽपि द्विगुणोपेत[6]डढदधयलोपेतद्विगुणकालिपरिणतं सूर्यं द्वयोर्म्मेला महासुखं परमानन्दम् ।

आदर्शज्ञानवांश्चन्द्रः स ता वान् सममतिकः ।
बीजैश्चिह्नैः स्वदेव्याश्च प्रत्यवेक्षणमुच्यते ।
सर्व्वैरैक्यानुष्ठानं निष्पत्तिः शुद्धधर्म्मता ॥

इति पञ्चाकाराभिः सम्बोधिः । तद्बीजरश्मिभिः सत्त्वा-नाकृष्य स्वेष्टदेवताचक्रं तथैव प्रवेश्य च योगी चिह्नबीज-परिणतां तारादेवीं विभावयेत्—

---

[1] AC त्रिशूक० ।
[2] A ०भूतं ।
[3] ANC ०स्तम्भाव० ।
[4] AC मुख० ।
[5] A द्विगुणपरि०, N द्विगुणनालिपरि० ।
[6] A ०डमदधये० ।
[7] AC समता० ।

अष्टबाहुं चतुर्वक्त्रां सर्व्वालङ्कारभूषिताम् ।
कनकवर्णनिभां[1] भव्यां कुमारीलक्षणोज्ज्वलाम् ॥
चतुर्बुद्धमहामुकुटीं वज्रसूर्य्याभिषेकजाम् ।
नवयौवनलावण्यां चलत्कनककुण्डलाम् ॥
विश्व[2]पद्मसमासीनां रक्तप्रभाविभूषिताम् ।
वज्रपाशं तथा शङ्खं मच्छरो[3]द्य तदक्षिणाम् ॥
वज्राङ्कुशोत्पलं चैव वामे कार्मुकतर्ज्जनीम् ।
वज्रतारात्मको योगी सर्व्वसत्त्वार्थ[4]पारगः ॥
वज्रपर्य्यङ्कयोगेन साधयेद् भुवनत्रयम् ।
पूर्व्वेण पुष्पतारां तु सितवर्णां मनोरमाम् ॥
ॐकारज्ञाननिष्पन्नां पुष्पदामकराकुलाम् ।
द्विभुजामेकवक्त्रां च सर्व्वालङ्कारभूषिताम् ॥
दक्षिणे धूपतारां तु कृष्णवर्णां सुरूपिणीम् ।
धूपशाखाकरव्यग्रां सर्व्वालङ्कारभूषिताम् ॥
पश्चिमे दीपतारां च दीपयष्टिकराकुलाम् ।
पीतवर्णां महाभूषां चलत्कनककुण्डलाम् ॥
उत्तरे[5] गन्धतारां तु गन्धशङ्खकराकुलाम् ।
रक्तवर्णनिभां देवीं भावयेद् गर्भमण्डले ॥
द्वारपालीस्ततो ध्यायात् अङ्कुश्यादिप्रभेदतः ।
अङ्कुशं दक्षिणे हस्ते वामेन दुष्टतर्ज्जनीम् ।
सूर्य्यमण्डलमध्यस्थां शुक्लवर्णां मनोरमाम् ॥
अङ्कुशी ।

---

[1] AN देवीं । [2] N ॰पद्मासना॰ । [3] AN शरोद्यत॰ ।
[4] A ॰परागः । [5] A omits गन्धतारां तु ।

पाशदक्षिणहस्ते तु वामेन दुष्टतर्ज्जनीम्।
रक्तमण्डलमध्यस्थां गौररूपां मनोरमाम्॥

[1]पाशिनी।

दक्षिणे तु [2]करे स्फोटां वामहस्तेन तर्ज्जनीम्।
वज्रमण्डलमध्यस्थां रक्तवर्णां विभावयेत्॥

वज्रस्फोटा।

वज्रघण्टाकरव्यग्रां वामेन दुष्टतर्ज्जनीम्।
रश्मिमण्डलमध्यस्थां रक्तउत्पलसन्निभाम्॥

वज्रघण्टा।

कोणभागेषु चिह्नानि चत्वारि विधियोगतः।
बोधिचित्तघटो मेरुर्वह्निकुण्डं महाध्वजः॥
ऊर्द्ध्वे चोष्णीषविजयां शुक्लवर्णां सुरूपिणीम्।
[3]वज्रं दक्षिणहस्ते च वामेन दुष्टतर्ज्जनीम्॥
नागपाशं दक्षिणे हस्ते वामेन दुष्टतर्ज्जनीम्।
कृष्णवर्णां महाघोरामधः सुम्भां विभावयेत्॥

ततो ध्यात्वा मन्त्रं स्फुरन् जपेत् ॐ तारे तुत्तारे तुरे स्वाहा।

दशाक्षरैर्दश देवत्यो[4] दशपारमिताश्रयाः।
भावनीयाः प्रयोगेन सर्व्वकर्म्मप्रसिद्धये॥
मोहवज्रां न्यसेन्नेत्रे द्वेषवज्रां च कर्णतः।
ईर्ष्यावज्रां तथा घ्राणे वक्त्रे तु रागवज्रिकाम्॥

---

[1] AN योगिनी। [2] AC करस्फोटां।
[3] C चक्रं। [4] AC ०देवेभ्यो।

स्पर्शो मात्सर्य्यवज्रा वै सर्व्वक्लेशतमोऽपहाम्[1]।
आयतनेषु विज्ञेया हृद्या नैरात्म्ययोगिनी ॥
इति चक्षुराद्यधिष्ठानम्।

द्विभुजाश्चैकवक्त्राः स्युर्नाना[2]रूपा हि योषितः।
कर्त्रिकपालकरव्यग्रा गतप्राणोर्द्धसंस्थिताः ॥
ततः कायवाक्चित्ताधिष्ठानम्।

ॐकारोऽयं महावज्रो[3] कायवज्रविभूषणः।
(हुँकारः) चित्तवज्रो मोहवज्रो[4] वज्रसत्त्वपदे स्थितः॥
आःकारं परमं तत्त्वं वाह्यं चोद्घाटकं[5] मतम्।
सर्व्वासामेव मातॄणां हृदि ज्ञानमयं न्यसेत् ॥
सत्त्वज्ञानप्रयोगेन बुद्धबोधिमवाप्नुयात्।
स्वमन्त्राक्षरसम्भूता मुद्राचिह्नस्य कल्पना ॥
स्फुरणं संहरणं कृत्वा माण्डलेयानां तु सम्भवः।
आकाशधातुमध्यस्थं भावयेद् ज्ञानमण्डलम्[6] ॥
पञ्चज्ञानगुणाकीर्णं नानारूपं समन्ततः।
पूजयेत् सर्व्वपूजाभिर्मानयेच्च न हापयेत् ॥
द्वारपालीप्रयोगेन ज्ञानोदधिं प्रसाधयेत्।
समयचक्रे समावेश्य ज्ञानचक्रं महोज्ज्वलम्।
सर्व्वबुद्धसमो योगी अद्वयी[7] भवति क्षणात् ॥

ॐ वज्राङ्कुशी आकर्षय जः, ॐ वज्रपाशी प्रवेशय

---

[1] A स्पर्शमान् सर्पवज्राम्वै। [2] A वक्राम्बुर्नाना०, N वक्रा[illegible]०
[3] A महाराजा। [4] A महाराजा।
[5] A वाक्पथोद्यातकं, N वाह्यचोद्योतकं।
[6] AC ०मण्डले। [7] A [illegible]।

हुँ, ॐ वज्रस्फोट बन्धय वँ, ॐ वज्रावेशे वशीकुरु होः । वज्रवैरोचननिःसृतरश्मिभिरङ्कुशाकारैस्त्रैधातुकस्थितान् बुद्धानाकृष्याष्टमातृभिः संपूज्यानुनाथ्यते । अभिषिञ्चन्तु मां सर्व्वतथागताः—

बोधिवज्रेण बुद्धानां [1]यथा दत्तो महामहः ।
ममापि त्राणना[2]र्थाय [3]स्ववज्राद्यं ददाहि मे ॥

इत्यभिषेकयाचनम् ।

अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्व्वबुद्धानां त्रिगुह्यालयसम्भवम् ॥

इति पठद्भिर्बुद्धैर्हेरुकरूपैः पञ्चामृतभृतपञ्चतथागतात्मकैः कलशैः पञ्चभिरभिषिच्यते । अभिषिच्यमाने पुष्पवृष्टिर्भवति, दुन्दुभिशब्दश्चोच्छलति, कुङ्कुमवृष्टिर्भवति, रूपवज्रादिभिः पूज्यते, वज्रगीत्या लोचनादिभिः स्तूयते, अभिषिच्यमाने मूर्द्ध्नि वज्रसत्त्व उत्पद्यते । मकुटस्य चतुर्दिक्षु वैरोचनाक्षोभ्यामिताभामोघ[4]सिद्धयस्तथागता मध्यपुटचतुर्देवीनां मुकुटेऽपि यथाक्रमं द्वारपालीनामपि, उष्णीषाया रत्नेशः, [5]सुम्भाया मुकुटे अक्षोभ्यः ।

द्वेषवज्रि नमस्तुभ्यं मोहवज्रि नमोऽस्तु ते ।
मात्सर्य्यवज्रि मां त्राहि रागवज्रि प्रयच्छ मे ॥

महामाये[6] महेर्ष्येति सर्व्ववज्रि प्रसीद मे ।
सर्व्ववज्रसमयनाथा सर्व्वकर्म्मप्रसाधिका ॥

स्तुतिः ।

---

[1] N omits यथादत्तो...सर्व्वबुद्धानां ।　[2] A त्राणा० ।
[3] A स्ववज्रायं, N स्ववज्रोऽयं ।　[4] AC ०सिद्धिस्त० ।
[5] A कुम्भाया ।　[6] A महामानेति ।

इमे पुष्पाः शुभा दिव्याः शुचयः शुचियोनयः[1] ।
मया निवेदिता भक्त्या प्रतिगृह्य प्रसीद मे ॥

पुष्पम् ।

वनस्पतिरसो हृद्यो गन्धाढ्यो धूप उत्तमः ।
मया निवेदितो भक्त्या प्रतिगृह्य प्रसीद मे ॥

धूपः ।

रक्षोघ्नश्च पवित्रश्च तमोभिदः मनःशुभः ।
मया निवेदितो भक्त्या प्रतिगृह्य प्रसीद मे ॥

दीपः ।

इमे गन्धाः शुभा दिव्याः शुचयः शुचियोनयः ।
मया निवेदिता भक्त्या प्रतिगृह्य प्रसीद मे ॥

गन्धः ।

तदनु नीलपँकारपरिणतधन्वाभध्वजाङ्कित वायुमण्डले रक्तरँबीजसम्भूतत्रिकोणाग्नेयमण्डलोपरि रक्तआःकार-सम्भूतपद्मभाण्डे वुँ-आँ-जौँ-खँ-हुँ-बीजपरिणतं तद्बीजा-धिष्ठितगन्धार्कचन्द्रभैषज्यवारिलक्षणं यथाऽसंख्येयं पञ्च-तथागतस्वभावं पञ्चामृतं गोकुटदहनाख्यं च पञ्चबीजं ध्यात्वा तदुपरि वितस्तिमात्रमतिक्रम्य चन्द्रस्थहुँकार-सम्भूतशुक्लपञ्चसूचिकमहावज्रं ध्यात्वा तदध ॐकारं विचिन्त्य वायुप्रेरिताग्नेयमण्डलाग्निना उपरि वज्राग्निना च तत् सर्व्वं परिणतं दृष्ट्वा तद्बाष्पस्पर्शेन प्रणवं वज्रविलीनं तस्मिन्नेवामृते [4]नवनीतवत् समरसीभूतं ध्यात्वा तदु-परि शुक्लताँकाररश्मिभिस्त्रैलोक्योदरवर्त्तिसर्व्वामृतमाकृष्य

---

[1] A शुचयोऽनयः ।
[2] A ०धन्वाभुजान्वित० ।
[3] AC ततः ।
[4] A omits नवनीतवत्...०ज्ञानामृत० ।

तथान्तर्भाव्य धर्म्मधातुसमतया सर्व्वतथागतहृदयवर्त्ति-ज्ञानामृतमाकृष्य तैरेव[1] सहैकीकृत्य तदुपरि[2] चितत्त्वं ध्यात्वा तेनैवाभिमन्त्र्य सर्व्वमाण्डलेय हृदये मण्डलचक्रं ध्यात्वा तज्जिह्वासु शुक्लहुँकारजं यवफलप्रमाणं शुक्लवज्रं ध्यात्वा तेन पञ्चामृतेन माण्डलेयानात्मानं च सन्तर्प्पये-दिति। एतेन मण्डलं निष्पन्नं त्रिसन्ध्यं भावनां कृत्वा तिष्ठेत्। सततं देवतामूर्त्त्या स्थातव्यम्। तत्रायं जपमन्त्रः ॐ तारे तुत्तारे तुरे स्वाहा।

एतन्मन्त्रवरं श्रेष्ठं सर्व्वबुद्धैर्नमस्कृतम्।
पठितसिद्धिकरं तीव्रं वज्रपञ्जरभाषितम्॥

अथापरोऽपि धारिणीमन्त्रः, नम आर्य्यावलोकितेश्व-राय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय, तद्यथा, ॐ तारे तुत्तारे तुरे सर्व्वदुष्टप्रदुष्टान् मम कृते जम्भय स्तम्भय मोहय बन्धय हुँ हुँ हुँ फट् फट् फट् सर्व्वदुष्ट-स्तम्भनि तारे स्वाहा।

दशाक्षरस्य विधानम्— अनेन मन्त्रेण पटाञ्चलं सप्ताभिमन्त्रितं कृत्वा ग्रन्थिं बद्धा विन्ध्यायामपि गच्छन् न केनाप्यवलीयते। व्याघ्रचौरनक्रसिंहसर्पदन्तिमहिषभल्लुक-गवयादयो नामस्मरणमात्रेण नश्यन्ति विलीयन्ते।

अनेन मन्त्रेण उत्पलानामष्टोत्तरशतं यावत् जुहुयात्। ॐ तारे तुत्तारे तुरे अमुकं मे वशमानय स्वाहा। पुनस्तेनैव मन्त्रेण काकपक्षं द्वात्रिंशद्वारान् परिजप्यारि-

[1] AC तेनैव।
[2] AN ०हृदय०।
[3] A बहुल०।
[4] A मत्यो।
[5] AC तं।

गृहे गोपयेत् सप्ताहेनोच्चाटयति। ॐ तारे तुत्तारे तुरे चल प्रचल शीघ्रगामिनि देवदत्तमुच्चाटय हुँ फट्।

अथापरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकाभिधानां कुमारीं मह्यमुद्वाहेन तस्याः पिता प्रयच्छतु स्वाहा।

मदनं चण्डबीजं च तथोन्मत्तकमेव च।
अशोकपत्रं पुष्पं च जुहुयात् पञ्चसहस्रकम्॥
घृतमधुगुडहोमं कन्यासिद्धौ प्रशस्यते।
सप्ताहेन तदा योगी लभेत् कन्यां स्ववाञ्छिताम्॥

अथापरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकाभिधानां स्वस्थानादाकर्षय ममान्तिके जः। अनेन मन्त्रेण [2]बदरकण्टकानां पञ्चसहस्राणि स्वयम्भूकुसुमाक्तानि होतव्यानि। अनेन कृतेन नृपाणामपि कन्यामाकर्षयति।

अथापरोऽपि प्रयोगो भवति। रजःस्वलाकर्पटे भगवतीं द्विभुजामेकवदनामङ्कुशोत्पलपाशहस्तां विलिख्य तस्याः पुरतः पूजां कृत्वा इमे पुष्पाः शुभा दिव्या इत्यादिना पूजयेत्। पश्चान्मन्त्रं जपेत् भावनान्वितः ॐ तारे तुत्तारे तुरे अमुकीं कन्यां ममेप्सितं स्वप्नं कर्णे कथय हुँ फट्। पञ्चसहस्रेणागच्छति। पाशेन गलके बद्धा अङ्कुशेन हृदि विदार्य च साध्यां पादतले ध्यात्वा दासीरूपेण भुञ्जयेत्।

अथापरोऽपि प्रयोगो भवति। ताराधारणीं सप्ताभिमन्त्रितां कृत्वा आत्मनोऽक्षिद्वयं अञ्जयेत्। राजकुलं प्रविशतः[3] स राजा शिष्यवद्[4] गौरवं करोति, [illegible] न

[1] A ०यन्त्र०।
[2] A बदनकाण्ठकानां।
[3] A प्रविशन्तः।
[4] AC शिष्येव।

[illegible] [illegible] च प्रयच्छति, प्रियालापं च कुरुते, दासतां [illegible], कुद्धोऽपि वशो भवेदिति दृष्टप्रत्ययश्च सद्भूतः ।

अथापरोऽपि प्रयोगो भवति । ताराधारणीं शतधा- [illegible] द्विवदनाशीविषं भस्म कृत्वा रक्तवर्णगो(गाभी)घृते- [illegible] वर्त्तिं कृत्वा प्रज्वाल्य कज्जलं पातयेत् । तत् [illegible] वज्रसूर्य्यवज्रधर्म्माभ्यां सम्मर्द्य परमान्नेन धूपयेत् । [illegible]ना सार्द्धमक्षि अञ्जयेत् । यां पश्यति चक्षुर्वज्रेण सा यदि पद्मनर्त्तेश्वरं न रक्षति तदाहं तारा न भवेयम्, [illegible]ताश्च मया बुद्धा भगवन्तो भवेयुरिति ।

अथापरोऽपि प्रयोगो भवति । अदशनशिशुलोलां गृहीत्वा ताराधारण्या सप्ताभिमन्त्रितां कृत्वा भृङ्गराज- मूलं गोरोचनया सार्द्धमेकीकृत्य ललाटे तिलकं परिधाय यां यां पश्यति, तां तां वशं कुरुते ।

अथापरोऽपि प्रयोगो भवति । उदरकीटं तारा- धारण्या सप्ताभिमन्त्रितं कृत्वा वज्रधर्म्मेण सार्द्धं कन्यायै ताम्बूलेन सह दद्यात् । अभ्यवहृतमात्रेण योगवरेण न मुञ्चति, नान्यं रमते, नान्यस्मिन् गच्छति, नान्यं पुरुष- मिच्छति, स्वपतिं त्यजति ।

अथापरोऽपि प्रयोगो भवति । महातैलेनात्मानमभ्यज्य ताराधारणीं जपेत् । अमितं जपेद् भावयेच्च । जपान्ते शालिपिष्टकेन कुड्मल्या शष्कुलिकां कृत्वा यस्यै यस्मै वा दीयते सा स पञ्चत्वं गता गतोऽपि न मुञ्चेदिति ।

---

[1] AC लब्धाश्च ।
[2] ANC ह्वरति ।
[3] A धारा० ।
[4] A कुकुट्टमलेन, N कुष्मलेन ।

अथापरोऽपि प्रयोगो भवति। चन्द्रोपरागसमये तारा-धारणीं जपमानः सेवां कृत्वा ततः समुद्धृतं लोकेश्वरं संगृह्य शङ्खचूर्णेन भावयेत्। ततः प्रमदायै दातव्यम्, पञ्चतां यावदनुवर्त्तते तमेव परमिच्छति नान्यम्।

अथापरोऽपि प्रयोगो भवति। ताराधारणीमन्त्रेण मदनफलमष्टोत्तरशतवारं परिजप्य तेन मदनफलेन हयग्रीवेण सार्द्धं यां स्प्रक्ष्यति सा वश्या भवति।

अथापरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकस्य बन्धनमुक्तिं कुरु मुः स्वाहा इत्यनेन मन्त्रेण अर्कदले साध्यनामविदर्भितं लिखित्वा कुलीरगर्त्ते गोपयेत्। तस्यावश्यं बन्धनमुक्तिर्भवति।

साधनं वज्रतारायाः संलिख्य यदुपार्ज्जितम्।
तेन पुण्येन लोकोऽयं व्रजतां सौगतीं गतिम्॥

॥ वज्रतारासाधनं समाप्तम्।

। कृतिरियं रत्नाकरशान्तिपादानाम्॥

---

111.

संपूज्य देवीं[1] करवीरपुष्पै-
रष्टौ शतान्येव जपेत् त्रिसन्ध्यम्[2] ।
इष्टं वरं याचित[3] मेकमेव
मासेन दद्याद् ध्रुवमार्य्यतारा ॥

ॐ जम्भे मोहे स्वाहा, नमस्तारायै, नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय, नमो भगवत्यै आर्य्यतारायै, ॐ तारे तुत्तारे तुरे वीरे दुर्ग्गादुत्तारय ह्रौँ ह्रौँ ह्रौँ सर्व्वदुःखान्मोचनि भगवति दुर्गोत्तारिणि महायोगेश्वरि ह्रौँ नमोऽस्तु ते स्वाहा । एतां भगवतीं दुर्गोत्तारिणीतारां मुहुः श्यामां चतुर्भुजां वामेन पाशं दक्षिणेनाङ्कुशधारिणीं भक्तमाश्वासयन्तीं दक्षिणेन वरदां दिव्यमाल्याम्बरधारिणीं वामेन नीलोत्पलहस्तां सितवस्त्रप्रावृतदेहां[4] पद्मासनस्थां त्रिकालं ध्यायेत् । सर्व्वदुःखेभ्य उत्तारयति । बन्धनात् मोचयति । शृङ्खलाविनिवेष्टितं पाशेन बद्धं ग्रहग्रस्तं वा उत्तारयति । बन्धस्थेन जप्तव्या । सहस्रमष्टशतं वा दिने[5] दिने जपेत् मोचयति । यदि न मुञ्चति तदा मूर्द्धानं[6] स्फुटति [भूम्यां] लुठति । स्वस्थो वदति अमुकं मुञ्चेति । तं यदि न मुञ्चति तदा शिरोवेदना भवति, ज्वरो महान् भवति, विषमा विसूचिका भवति, साधकस्य दर्शनं ददाति, सप्तमे दिवसेऽवश्यं मोचयति । एषा भगवती दुर्गोत्तारिणी

---

[1] N omits करवीर० ।
[2] AC जपन्ति सद्यं ।
[3] AC याभिमत० ।
[4] AC ०देही ।
[5] AC omit.
[6] AC स्फूयति ।

कयिता हूँ ह्रौँ[1] सप्त वारान् पुष्पमभिमन्त्र्य दातव्यम्। पूजा। सँमध्ये खँ ताँ[2] वामावर्त्तेन वुँ आँ जीँ हूँ। वामावर्त्तेन [4]लोँ माँ पाँ ताँ।

॥ इति दुर्गोत्तारिणीसाधनं समाप्तम् ॥

---

112.

उत्थाय पूर्व्वमन्ध्यायां भूप्रदेशे मनोहरे।
मृद्वासनोपविष्टः सन् स्वहृदि चन्द्रमण्डले ॥
पञ्चमस्य प्रथमं तु द्वितीयस्वरयोजितम्।
अर्द्धेन्दुबिन्दुसंयुक्तं सितरश्मिविभूषितम् ॥
तस्य शुक्लमयूखैस्तु तारामाकृष्य व्योमनि।
द्विभुजां सितदेहां तु वरदोत्पलधारिणीम् ॥
पञ्चोपचारपूजाभिः पूजयित्वा तु भक्तितः।
पापानां देशनां पश्चात् ततः पुण्यानुमोदनाम्।
तत्परिणामनां चैव त्रिशरणगमनं तथा ॥
ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति पठेत्।
इति स्वपरशून्यं वै ध्यात्वा योगी विधानवित्।
सितारविन्दमध्यस्थचन्द्रबिम्बासनोपरि ॥
पूर्व्वोक्तबीजनिष्पन्नां तारादेवीं मनोरमाम्।
आबद्धवज्रपर्य्यङ्कां वरदोत्पलधारिणीम् ॥

---

[1] A क्रं क्रोँ जः। [2] A खलां।
[3] A क्रौँ, C क्रौँ। [4] ANC लां।
[5] A ०च्चार०।

शरच्चन्द्रकराकारां पृष्ठचन्द्रसमाश्रिताम् ।
सर्व्वालङ्कारसम्पूर्णां षोडशाब्दवपुष्मतीम् ॥
[1]सर्व्वसंबुद्धतत्पुत्रमातरं कामरूपधाम् ।
ध्यात्वाऽऽर्य्यतारां हृदये तस्याश्चक्रं सितद्युति ॥
अष्टकोष्ठकमष्टाभिरक्षरैः [2]परिपूरितम् ।
[3]ॐह्राद्यव्यञ्जनमध्यस्थसाध्यनामाद्यनाभिकम् ॥
ध्यायादेकाग्रचित्तः सन् षण्मासान् दृढनिश्चयः ।
जपेदखिन्नचित्तः सन् मन्त्रमेनं दशाक्षरम् ॥
ॐकारमादितो दत्त्वा पश्चात् तारे प्रयोजयेत् ।
तुत्तारे स्यात् तुरे पश्चात् स्वाहान्तं सार्वकर्म्मिकम् ॥
ब्रह्मेन्द्रविष्णुचन्द्रार्करुद्रदिक्कालमन्मथैः ।
अप्यखण्डितरोमाग्रो मृत्युं जयति मुक्तवत् ॥
वलिपलितदौर्भाग्यव्याधिदारिद्र्यसंक्षयः ।
सिंहाद्यष्टमहाभीतिदुःखसन्दोहनाशनम् ॥
[4]अयाचितान्नपानादिहर्म्यवस्त्रादिसङ्गमः ।
खड्गाञ्जनपादलेपभद्रकुम्भादिसिद्धयः ॥
कविता वक्तृता मेधा प्रज्ञा चैकान्तनिर्म्मला ।
अन्या च वाञ्छिता सिद्धिश्चक्रादस्मात् प्रजायते ॥

॥ इति मृत्यु[5]वञ्चनोपदेशतारासाधनं समाप्तम् ॥

---

[1] A सर्व्वबुद्ध० ।
[2] A परितं ।
[3] A ब्रह्मामाधुरूढ० ।
[4] AN खवारिता० ।
[5] A omits मृत्यु० ।

## 113.

विश्वमातायै नमः ।

ध्यात्वा चन्द्रार्कमध्ये त्वलिकलिसहिते तोयबीजाज्जमेकं[1]
तेनोत्पन्नैकवक्त्रां यमकरकमलां देवतीं …द्रवर्णाम् ।
आरूढां श्वेतनागं सितजलज[2]करीं चाभ… श्वेतवस्त्रां
श्वेतालङ्कारयुक्तां प्रहसितवदनां प्रेषयन् साध्यवेश्म ॥

तस्मात् साध्यं गृहीत्वा पुनरपि च विभोर्म्मण्डले सम्प्रविष्टा
भर्त्तु[3]श्चाज्ञां प्रलब्धाः पुनरमृतघटैर्लोच…याः[4] प्रहृष्टाः ।
तं साध्यं स्नापयन्ति प्रवरदशविधाः शक्तयः …यन्ति
रूपाद्याः पोषयन्ति प्रकटदशबलास्याद्य[5]… यन्ति ॥

भूताख्याश्चाह्वयन्ति प्रवरदशविधाः क्रोधजाः पा… यन्ति
नागिन्यश्चुम्बयन्ति त्वमरयुवतयो द्वादशालिङ्…न्ति ।
[6]चण्डाः कुर्व्वन्ति रक्षां सकलभुवितले यान्ति पुष्प… हेतो[7]-
रेवं साध्यं च सर्व्वं परमसुखकरं योगिना[8] … नीयम् ॥

॥ विश्वमातासाधनं समाप्तम् ॥

---

[1] N ०बीजाज्ज एकं ।
[2] A जल० ।
[3] A इन्दो० ।
[4] A लोचनायै ।
[5] A ०भ्यादयः० ।
[6] A चन्द्राः ।
[7] A पुष्पेव्वहेतोः ।
[8] A योगीनां ।

## 114.

नमस्तारायै ।

पूर्व्वक्रमप्रयोगेन भगमध्ये शशिमण्डले ।
हेमवर्णां महाघोरां तारादेवीं महर्द्धिकाम् ।
त्रिनेत्रामष्टवदनां भुजषोडशभूषिताम् ॥
ऊर्द्धपिङ्गलकेशां सार्द्र[1]शतार्द्धमुण्डमालाकृतहाराम्—
प्रत्यालीढपदोपेतां जगत्त्राणां महाबलाम् ।
विचित्रवस्त्रनेपथ्यां हसन्तीं नवयौवनाम् ॥

प्रधानमुखं पीतं दक्षिणे[2] द्वितीयं नीलं तृतीयं श्यामं चतुर्थं गगनश्यामं वामे कुन्दसन्निभं द्वितीयं रक्तं तृतीयं गगनश्यामं ऊर्द्धास्यं [3]धूम्रवर्णाभं महाघोरं मध्यास्यं विकटोत्कटं दक्षिणकरेषु खड्गो[4]त्पलशरवज्रा[5]ङ्कुशदण्डकर्त्रि-अभयधरां वामभुजेषु सपाशतर्ज्जनिकपालधनुःखट्वाङ्गस-वज्र[6]पाशब्रह्मशिरोरत्नकलशधरां विश्वपद्मचन्द्रस्थां सूर्य्य-प्रभाविभूषितां वामपादेनेन्द्रं दक्षिणपादेनोपेन्द्रं पादद्वय-मध्ये रुद्रं ब्रह्माणं चाक्रम्य स्थितां सर्व्वावरणविनाशनीं[7] भावयेत् । योगी लघु सिद्धिमवाप्नुयात् । जपमन्त्रः ॐ प्रसन्नतारे[8] अमृतमुखि अमृतलोचने सर्व्वार्थसाधनि सर्व्वसत्त्ववशङ्करि हुँ फट् हुँ स्वाहा ।

॥ इति सर्व्वार्थसाधन्याः प्रसन्नतारायाः साधनं समाप्तम् ॥

---

[1] AC सार्द्ध० ।
[2] ANC दच्चिणं ।
[3] A ऊर्द्धात् प्रधु० ।
[4] N खट्वाङ्गो०, A खड्गदच्चिणकभुजो० ।
[5] A वज्रा० ।
[6] A ०सर्व्वत० ।
[7] A ०विरागिनीं ।
[8] A adds चमृते after this.

115.

नमस्तारायै।

ॐ तारे तुत्तारे तुरे स्वाहा। ॐ कुरुकुल्ले स्वाहा। मूलमन्त्रः शरीरे न्यस्तव्यः, हृदयमन्त्रेण जापः कर्त्तव्यः, ॐकारं शिरसि न्यस्तव्यम्, [1]कुकारं शिखायां न्यस्तव्यम्, रुकारं चक्षुषि युञ्जयेत्, कुकारं कवचं कुर्य्यात्।

लकारं मस्तकमूर्द्ध्नि[2] लेकारं हृदये न्यसेत्।
स्वाकारं नाभिदेशे तु हाकारं पादयोर्न्यसेत्।

एवं अक्षरविन्यास आत्मदेहे साधकेन कर्त्तव्यः।

ॐकारं श्वेतवर्णाभं कुकारं श्याममेव च।
रुकारं रक्तमेवोक्तं कुकारं श्वेतमेव च॥

लकारं पीतमुद्दिष्टं लेकारं श्याममेव च।
स्वाकारं रक्तमुद्दिष्टं हाकारं कृष्णमेव च॥

एवमेवाक्षराणां वर्णं कथितम्। ताराया मन्त्रमेवम्—एहि देवि भगवति, प्रसादं मे देवि[4] कुरु, पूजां गृहाण सन्निहिता भव आवाहनमन्त्रः। ॐ तारे तुत्तारे तुरे हुँ फट् स्वाहा अर्घमन्त्रः। पद्ममुद्रां बद्ध्वा सुगन्धपुष्पैरर्घो देयः। ॐ तारे तुत्तारे तुरे सर्व्वकर्म्मसु[5] योजयेत् ताँ-कारः। स एवंविधः ॐ ताँ ताँ ताँ ताँ ताँ इति। अनेन सर्व्वशत्रून् स्तम्भयति। अङ्गुलिषु न्यस्तव्यः। सर्व्वशत्रोरेवं दर्शयेत्, ततः [6]स्तम्भितो भवति। ॐ चाँ चाँ चाँ चाँ चाँ पुनः

---

[1] AN कुंका०।
[2] A मस्तकमुद्दीस्तं।
[3] N भवति।
[4] AC देवि।
[5] AC कर्म्मसंयो०।
[6] AC स्तम्भितो।

यस्य संप्रत्ययतो भवति। ताँकारं लक्षं जपेत्। ग्रामशतं लभते। ॐ चुँ चुँ चुँ चुँ [चुँ] अनेन सर्व्वरक्षा भवति। राजकुल[2]प्रवेशे गोरोचनां अष्टशताभिमन्त्रितां कृत्वा तिलकं दत्त्वा अष्टसु स्थानेषु योजयेत्। शिखायां ललाटे कण्ठे हृदये नाभौ जानुनोः(भ्यां) पादयोश्चेति एवं मन्त्रा न्यस्तव्याः। अनेनैव गोरोचनया अक्षिण्यञ्जयेत्। ततो राजकुल[3]प्रवेशे राजा सममिमुखमवलोक्य कथयति। शतसहस्रजापेन सर्व्वसत्त्वा वश्या भवन्ति। चुँ चुँ[4] चुँ चुँ [चुँ] ॐ अस्य मन्त्रस्य लक्षं जापयेत्। ग्रामसहस्रं लभते, भगवतीं तारां च पश्यति। दीपमन्त्रः। ॐ हुँ हुँ हुँ हः हः हुँ फट् स्वाहा शिखाबन्धमन्त्रः। ॐ ताँ ताँ ताँ ताँ ताँ बन्ध ता हा हः स्वाहा अधोर्द्ध्वमन्त्रः। अयं ताराजापविधिक्रमः— ॐ चुँ चुँ चुँ चुँ चुँ हृदयमन्त्रः। उपहृदयं [5]ता(ति ते। अनेन) अयं वशकर्म्मणि प्रयोजयेत्। वशीकरणमण्डलमालिख्य श्मशानाङ्गारेण प्रतिकृतिं कृत्वा शिखायां ताँ, ताँ [6]गुह्ये, ति पादयोरेवं विन्यस्य करवीरपुष्पैर्भगं ताडयेत्। अनेन मन्त्रेण सा वश्या भवति। आकर्षणे गोरोचनया भूर्जपत्रे स्त्रिया वा पुरुषस्य वा प्रतिकृतिं कृत्वा ति शिरसि, ति हृदये, ति गुह्यदेशे, ति पादयोः, तँ ललाटे एवं अक्षरविन्यासं कुर्य्यात्।

अथ पटविधाने भगवतीं तारां लिखेत् चतुर्भुजां रक्तश्यामकृष्णशुक्लवर्णां विश्वरूपां एकहस्तेन पाशं अपरेण

---

[1] A लक्ष्यां।
[2] A ०प्रदेशे।
[3] AC ०प्रदेशे।
[4] चाँ चाँ in C.
[5] A तातादिते।
[6] A सुहृति, C तुहेति।

वज्रं उत्पलं तथा [1]अङ्कुशहस्तां अङ्कुशेनाकर्ष[2]यन्तीं चिन्तयेत्। योजनशतसहस्राद्प्याकर्षयति। लक्षजापो देयः। यं इच्छति तं वशमानयति। ततोऽङ्गुलिं विन्यसेत्। ततः शत्रोर्नामाभिलिख्य हस्तेनावष्टभ्य तावद् जपेत् यावत् तत्कालग्रहः। कृष्णवर्णां विचिन्तयेत्। ॐ चाँ चाँ चाँ चाँ चाँ ॐ अस्य लक्षजापेनाभिषेकबन्धो भवति। अथ नीलोत्पलपुष्पैर्भगवतीं तारां दशसहस्रैरर्च्चयित्वा अस्य जापो देयः। एकैकेनार्च्चयित्वा जपेत्। अस्यानुशंमात् सर्व्वजनप्रियो भवति त्रिकालमष्टशतिको जापः[3]। एव[4]मेव सेवा। राजकुले वा व्यवहारे वा देवागारे वा अरण्ये वा सर्व्वत्र भगवती तारा रक्षां करोति इति।

आर्य्यता[5]राभट्टारिकायाः कल्पः समाप्तः।

---

## 116.

महाश्रीतारायै नमः।

आदौ तावन्मन्त्री [ॐ] स्वभावशुद्ध इत्यादिमन्त्रेणाधितिष्ठ[6] शून्यतां विभाव्य तदनन्तरं शुभ्राकारोद्भूत[7]चन्द्रमण्डलं तदुपरि हरिततांकारबीजसम्भूतां महाश्रीतारां चन्द्रासनस्थां श्यामवर्णां द्विभुजां हस्तद्वयेन व्याख्यान-

---

[1] अङ्कुशहस्तां dropped in A. [2] ॰कट्टु॰।

[3] A कोपः। [4] A एवं सेवा।

[5] MS Ba begins here again after a long break.

[6] Nb ॰तिष्ठेत्। [7] Nb सूत्रकारोद्भवन॰

मुद्राधरां एकवक्त्रां सर्व्वालङ्कारभूषितां पार्श्वद्वयेनोत्पल[1]-शोभां सुवर्णसिंहासनोपरि अपाश्रयादिशोभां नाना-पुष्पाशोकचम्पकनागेश्वरपारिजातकादिभीराजिताममोघ-सिद्धिमकुटिनीम् ।

महाश्रीतारायाः पार्श्वे एकजटामर्द्धपर्य्यङ्कोपविष्टां नीलवर्णां कर्त्रिकपालधरां सक्रोधां लम्बोदरां पिङ्गलजटा-विभूषितां व्याघ्रचर्म्माम्बरधराम्, दक्षिणे पार्श्वे अशोक-कान्तां पीतवर्णां रत्नमकुटिनीं वज्राशोकधराम्, पुनर्वामे आर्य्यजाङ्गुलीं श्यामवर्णां सर्पवरदहस्ताम्, दक्षिणे महा-मायूरीं मयूरपिच्छवरदहस्ताम् । भावनावसानसमये उत्पलमुद्रां बन्धयेत् । ततोऽलातचक्राकारं पश्यन् मन्त्रं जपेत् ॐ तारे तुत्तारे तुरे धनं ददे[2] स्वाहा ।

राजलीला[3]स्थिता देवी महाश्रीः करुणान्विता ।

इति महाश्रीतारिण्याः साधनं समाप्तम्[4] ।

---

[1] ०द्वयं ।

[2] Nb ददः ।

[3] B ०ललिता० ।

[4] This *Sādhana* is found in Nb and B only; *see* for instance, B Fol. 81 A.

117.

पूर्व्वोक्ते[न] विधानेन स्वहृदि रक्तमण्डले ।
जाँकारज्ञाननिष्पन्ना[1] विद्या नाम्ना तु जाङ्गुली ॥
पीतमत्तफणाभोगा ज्वलत्सन्मणि[2]भूषणा[3] ।
[4]त्रिनेत्रा तु त्रिमुखा कुमारीलक्षणोज्ज्वला ॥
सरोषहसिता[5] चैव सर्पमण्डितमेखला ।
षड्भुजा ललिताक्षेपाऽक्षोभ्यावष्टब्धमस्तका ॥
दक्षिणे तु करे वज्रं द्वितीये खड्गमुद्यतम्[6] ।
तृतीये नृत्याभिनयं[7] मारत्रासिशरोद्यता ॥
वामे तर्ज्जनिकापाशौ[8] द्वितीये विषपुष्पकम्[9] ।
तृतीये धनुर्हस्ता[10] च पुष्पमण्डितमेखला ॥
पद्मासनस्था कनकवर्णा रक्त[11]प्रभामण्डला
स्फुरन्तीन्द्रायुधनिर्म्माणज्वालापरिकरच्छदा ।
स्फुरदुड्डौघबिम्बांस्तु[12] चन्द्रकलशान्[13] स्वहस्तकान्
सेकयन्ती विषसुप्तांस्तु जाँकारमुखरञ्जिता ॥
भावयेद् विषपाते तु[14] त्रिकायां जाङ्गुलीं सदा ।
एवं हि भाव्यमानेन चिराद् बोधिरवाप्यते ॥
हस्तद्वयेन सर्प्पभोगाकारेण मूर्द्ध्नि फटच्छत्रं प्रयच्छ

---

[1] A ०त्तिध्यन्ना ।
[2] Ba ०त्सन्मणि० ।
[3] NB ०भूषिता ।
[4] B त्रिमुखा त्रिनेत्रा तु
[5] ABa सरोषसहिता ।
[6] AC ०मुद्यतां ।
[7] A ०नयनं ।
[8] A ०पाशौ ।
[9] A ०पुस्तकं ।
[10] B गन्धहस्ता ।
[11] N ०मण्डलप्रभा, Ba ०मण्डला ।
[12] A ०बिम्बां, N बिम्बाद् ।
[13] A ०त्ताकान्ताद् Ba ०त्तासन् ।
[14] ANC ०पातस्तु ।

नेन जाङ्गुलीमुद्रा । मन्त्रं जपेत् ॐ नमः शबरकुमारि ये चूर्णचाडि[1] चालय [2]चुचालय संघट्टनि [3]मत्तमातङ्गि पर्वतिनि अहे[4] ॐ जः स्वाहा ।

॥ आर्य्यजाङ्गुलीसाधनम् ॥

---

118.

ॐ इलिमित्ते तिलिमित्ते इलितिलिमित्ते दुम्बे दुम्बालीए [5]दुम्मे दुम्मालीए[6] तर्क्के तर्क्करणे मर्म्मे मर्म्मरणे कश्मीरे कश्मीरमुक्ते अघे अघने अघनाघने इलि इलीए [7]मिलीए इलिमिलीए[8] अक्वा[9]इए अप्याइए श्वेते श्वेततुण्डे अननुरक्ते[10] स्वाहा ।

इयमस्माकं भिक्षवो विद्या सर्व्वश्वेता सुदक्षिणा । य इमां विद्यां सकृत् शृणोति स सप्त वर्षाणि अहिना न[11] दश्यते, न चास्य काये विषं संक्रमिष्यति । य इमां विद्यां भिक्षवो धारयिष्यति स यावज्जीवं अहिना न दश्यते, न चास्य[12] काये विषं संक्रामति ! यश्चैनमहिर्दशेत् तस्य[13] सप्तधा स्फुटेत् मूर्द्धा [14]अर्ज्जकस्येव मञ्जरी ।

॥ आर्य्यजाङ्गुलीधारणी ॥

---

[1] NC चूर्णचाड़ि, Ba चुर्ब्बचाड़ि । [2] Ba चुचारय ।
[3] A मित्रमातङ्गि, Ba ०मातगिं । [4] A अह ।
[5] B दुम्मे । [6] दुम्मा ।
[7] B ०लिये । [8] B ०लिये ।
[9] ०AC क्षया०, N अकखा० । [10] ANCBa अनन्तरक्ते ।
[11] न dropped in A. [12] ANCBa चास्य ।
[13] AC सप्तस्य । [14] B आर्य्यकस्येव ।

119.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं रक्तकमल-चन्द्रे पीतजाँकारपरिणतामार्य्यजाङ्गुलीमात्मानं झटिति निष्पादयेत् पीतां त्रिमुखां षड्भुजां नीलसितदक्षिणे-तरवदनां खड्गवज्रबाणदक्षिणहस्तत्रयां सतर्ज्जनीपाश-विषपुष्पकार्म्मुकवामकरत्रयां स्फीतफणामण्डलशिरःस्थां सर्वदिव्यवस्त्राभरणभूषितां कुमारी[1]लक्षणो[2]ज्ज्वलां अक्षो-भ्याक्रान्तमस्तकां ध्यात्वा मन्त्रं जपेत् ॐ जाङ्गुलि[3] सर्व्व-विषप्रशमनि हुः स्वाहा ।

॥ आर्य्यजाङ्गुलीसाधनम् ॥

---

120.

एवं मया श्रुतमेकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवने अनाथपिण्डस्यारामे महता भिक्षु-सङ्घेन सार्द्धं अर्द्धत्रयोदशभिर्भिक्षुशतैः सम्बहुलैश्च बोधिसत्त्वै-र्महासत्त्वैरनेकैश्च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहो-रगमनुष्यामनुष्यैश्च सार्द्धम् । तत्र खलु भगवान् भिक्षूना-मामन्त्रयते स्म । भूतपूर्व्वं भिक्षवो बोधिसत्त्वभूतो विहरामि । हिमवन्तस्योत्तरपार्श्वे पर्व्वते गन्धमादने तस्य पर्व्वतराजस्य प्राग्भारे कुमारीशतपुण्यलक्षणा—

[1] Ba ०णोत्तर० ।
[2] B कुमारीं ।
[3] AC जाङ्गुली ।

[illegible]चर्म्मवसना सर्पमण्डितमेखला ।
आशीविषसुम्भलिका[1] दृष्टिविषा[2]वतंसिका ॥
खादन्ती विषपुष्पाणि पिबन्ती मालुतालताम् ।
सांमालरुति लारुति (?) एहि वत्स शृणोहि मे ॥
जाङ्गुलीनामाहं विद्या उत्तमा विषनाशनी ।
यत्किञ्चित् मम नाम्ना हि तत्सर्व्वं नश्यते विषम् ॥

तद्यथा, ॐ इलिमित्ते तिलिमित्ते इलितिलिमित्ते दुम्बे दुम्बालीए[3] दुम्मे[4] दुम्मालीए तर्क्के तर्क्करणे मर्म्मे मर्म्मरणे कश्मीरे कश्मीरमुक्ते अघे अघने अघनाघने इलि[5] इलीए मिलीए इलिमिलीए अक्याइए अप्याइए[6] श्वेते श्वेततुण्डे अननुरक्ते स्वाहा ।

इयमस्माकं भिक्षवो विद्या सर्व्वश्वेता[7] सुदक्षिणा । य इमां विद्यां सकृत् शृणोति स सप्त वर्षाणि अहिना न[8] दश्यते । न चास्य काये विषं संक्रमिष्यति । य इमां विद्यां भिक्षवो धारयिष्यति स यावज्जीवमहिना न दश्यते, न चास्य काये विषं संक्रामति । यश्चैनमहिर्दशेत्[9] [10]तस्य सप्तधा स्फुटेत् मूर्द्धा अर्जकस्येव मञ्जरी ।

इमानि च मन्त्रपदानि सर्पस्य पुरतो न वक्तव्यानि यत्कारणं सर्पा म्रियन्ते । तद्यथा, इर्णा[11] चिर्णा चक्को वक्को[12]

---

[1] A ०दुम्भलिका, Ba ०चुम्भरिका ।
[2] Ba ०वदंष्ट्रिका ।
[3] Ba दुम्ले ।
[4] Ba दुम्ला० ।
[5] ANC add इली after this.
[6] Ba श्वेति ।
[7] N सर्व्वश्च एता ।
[8] Ba दंश्यते ।
[9] AC ०र्दंश्येत् ।
[10] ANC एतस्य ।
[11] Ba इर्ला ।
[12] ANC omit.

[illegible]ोडा कोडेति मोडा मोडेति कुरुडा कुरुडेति [illegible] निकुरुडेति पुरुडा पुरुडेति निपुरुडा निपुरुडेति [illegible] फुट्टरहे फुट्टटुटुण्डरहे[5] नागे नागरहे नागटुटु[illegible] सर्पे सर्प्परहे सर्प्पटुटुण्डरहे अच्छे अच्छले [illegible]-विषे[10] शीते शीतवत्ताले हले हलले तुण्डे तुतुण्डे त[illegible] तण्डितट्टे तट्ट स्फुट [11]स्फुटतु [12]विषं स्वाहा।

इति हि भिक्षवो जाङ्गुल्या महाविद्यायाः सर्व्वदेवासुर-नागयक्षभूतसमागमे भाषितलपितमुदीरितं प्रव्याहृतं सर्व्वं तत् तथा अवितथा नान्यथाभूतं सत्यतथ्यम्। तथा यथावदविपरीतं अविपर्य्यस्तं बुद्धसत्यमनुस्मर धर्म्मसत्य-मनुस्मर सङ्घसत्यमनुस्मर सत्यवादिनां सत्यमनुस्मर। अनेन सत्येन सत्यवचनेन इदं विषं अविषं भवतु, दातारं गच्छतु, दष्टारं गच्छतु, अग्निं गच्छतु, कुड्यं गच्छतु, जलं गच्छतु, स्तम्भं गच्छतु, शान्तिं गच्छतु, स्वस्त्ययनं गच्छतु, भूम्यां निपततु, विषं स्वाहा। इदमवोचत् भगवानात्तमना[illegible] च भिक्षवः सा च सर्व्वावती पर्षत् सदेवमानुषासुरगरुड-गन्धर्व्वकिन्नरमहोरगयक्षनागपर्षद् भगवतो[13] भाषितमभ्य-नन्ददिति।

॥ आर्य्यजाङ्गुलीमहाविद्या समाप्ता॥

---

[1] ANC कोड्डिति।
[2] Ba निरुडा।
[3] Ba निरुडे०।
[4] Ba फुट्ट।
[5] ANC फफट्ट फट्ट टुपठरहे।
[6] AC ०टुण्डहे०।
[7] A ०हरे, Ba ०रदे।
[8] A सर्प्पटुड०।
[9] N हलविख०।
[10] ०कलविषे found in N.
[11] स्फुटे।
[12] A विभूर्षं।
[13] भगवतो found in Ba.

121.

अथ भगवत्या हृदयकल्पं व्याख्यास्यामः। ॐ असिविषे शूलजिह्वे वज्रकाये ग्रस ग्रस ज्वल ज्वल महाज्वाले महायोगेश्वरि हुँ हुँ फट् फट् स्वाहा। दशसहस्रजापात् सर्व्वविषकर्म्मशमनसमर्थो भवति। जपस्थानेन विधिना कर्त्तव्यः। त्रिकालस्नायी मद्यमांसवमापन्नागडुतैललवणविवर्जितस्त्रिकालं जपेत् यावद् दशसहस्राणि। ततः सिद्धो भवति। पश्चात् कर्म्माणि कारयेदनेन विन्यासेन।

प्रथमं तावन्मन्त्री आत्मानमीदृशं चिन्तयेत् कुमार्य्याकारं हरितवर्णं सप्तफट्विराजितमूर्द्धजं चतुर्भुजं एकमुखं एकहस्तेन त्रिशूलं द्वितीयेन मयूरपिच्छं तृतीयेन सर्पं चतुर्थे प्रसारिताभयम्। सर्व्वाङ्गेन नूपुरमेखलावलयकुण्डलादीन् सर्पाकारान् चिन्तयेत्। एकैकस्मात् रोमविवरात् अग्निज्वालां समन्तान्निष्काशमानां विचिन्तयेत्। एवमात्मनि कल्पयेत् अहं तावद् देवता। ततः सर्पदष्टकं पुरतः[2] संस्थाप्य ताम्रादिभाजने उदकं प्रतिष्ठाप्यानया विद्यया सप्तवाराभिमन्त्रितं तं सप्त वारान् शिरःप्रभृतिविषमाक्रम्य ततो दक एव प्रक्षिपेत् पुनः पुनः। एतेन निर्व्विषो भवति। चलं च विषं यं यमेवाङ्गं मुञ्चति तस्मिन् तस्मिन् स्थाने मृत्तिकया सप्तजप्तया धारणीबन्धं सर्पाकारवलययोगेन कारयेत्। एतौ मुद्रौ सर्पाकारौ।

---

[1] AC दशशत०।  [2] N ०दष्टकयुतं।

हुंकारं मुञ्चेद्[1] दष्टकस्याङ्गे पिबन्त[2]मिव विषं चिन्तयेत् ।
एवं कर्म्मसिद्धिर्भवति नान्यथा ।

॥ इत्यार्य्यजाङ्गुल्या भगवत्याः कल्पः समाप्तः ॥

---

## 122.

[3]नमो भगवत्यै आर्य्यजाङ्गुल्यै ।

नत्वा भगवतीं तारामार्य्यजाङ्गुलिरूपिणीम्[4] ।
सत्त्वानामनुकम्पाय लिख्यतेऽस्याः प्रसा[5]धनम् ॥

प्रथमं तावन्मन्त्री शुचिः स्नातः शुक्लमाल्याम्बरधरः शुक्लगन्धानुलिप्तो[6] विजने सुलिप्ते प्रदेशे शुक्लसुगन्धि[7]तोयोपसिक्ते शुक्लपुष्पप्रकरा[8]वकीर्णे सुखासनोपविष्टो जगति मैत्रीकरुणामुदितोपेक्षां विभाव्य[9] ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्यु[10]च्चार्य्य जगद् ग्राह्यग्राहकरहितं पश्येत्[11] । तदनन्तरं चिन्तयेत् [12]पँकारं शुक्लवर्णं तत्परिणतं[13] पद्मं सितं विकसितशतपत्रं[14] तदुपरि(?)टके शुक्लाकारेण

---

[1] N मुञ्चेद० ।
[2] Ba पिबन्तो० ।
[3] This *Namaskāra* is found only in Ab.
[4] Ab जाङ्गुलीरूपधारिणीं ।
[5] ANCBa लिख्यते तत्प्रसा० ।
[6] शुक्लगन्धानुलिप्तो is found only in Ab.
[7] A ०गन्धिते ।
[8] Ab ०प्रकारा० ।
[9] Ab ०करुणां विभावयेत् ।
[10] ANC Ba ०च्चारयेत्ततो ।
[11] Ab पश्यति ।
[12] Ab वकारं ।
[13] Ab ०णतेन ।
[14] ANCBa omit विकसित०

चन्द्रमण्डलं दृष्ट्वा तदुपरि शुक्लवर्णह्रीःकार[1]जात्मानं आर्य्यजाङ्गुलीरूपां सर्व्वशुक्लां चतुर्भुजां एकमुखां जटा-मुकुटिनीं शुक्लां शुक्लनिवसनोत्तरीयां[2] सितरत्नालङ्कार-भूषितां शुक्लसर्पैर्व्विभूषितां सत्त्वपर्य्यङ्के उप[3]विष्टां मूलभुजाभ्यां वीणां वादयन्तीं द्वितीयवामभुजेन सित-सर्पधारिणीं अपरदक्षिणेनाभय[4]प्रदां चन्द्रांशुमालिनीं ध्यायात्। शिरसि कण्ठे स्तनान्तरे चन्द्रमण्डले आः [5]ह्रीः हुँकारान् विभावयेत्। तदनु ह्रीःकाररश्मिनाऽऽकृष्य गगनस्थान् ज्ञानसत्त्वसमयसत्त्वान् एकीकृत्य विभावयेत् जः हुँ वँ हो प्रयोगेणेति। पुनरपि ह्रीःकाररश्मिनाकृष्टाः [6]सर्व्वतथागता गगनस्थाः सत्त्वार्थोद्यतं मामभिषिञ्चन्तु। सुचिरं[7] बहलकायं चिन्तयेत्। एवं ध्यात्वा जपेन्मन्त्रम्। ह्रीः इति जापमन्त्रः सप्तलक्षं जपेत्, सप्तायुतं सितपुष्पं जुहुयात् सितालङ्कार[8]भूषितः। अनेन क्रमेण गरुडेश्वरत्वं कवित्वं सर्व्वशास्त्रविशारदत्वं सर्व्वविषहरत्वं भवति न सन्देहः।

॥ आर्य्यजाङ्गुलीसाधनं समाप्तम् ॥

---

[1] Ab ०वर्णा ०जाङ्गा०।   [2] ANCBa शुक्लोत्तरीयां।
[3] ANCBa ०पर्य्यङ्कमा०।
[4] Ab दक्षिणाभय०।   [5] Ab क्लौँ।
[6] Instead of सर्व्वतथा०......जपेन्मन्त्रम्, Ab has सर्व्वतथागतान् गगनस्थान् सितोदकेनाभिषिच्य स्वशिरसि सितवर्णकाये सञ्चिन्तयेत्।
[7] Ba सुचिरं।   [8] Ab भूषितां।

## 123.

नम एकजटायै ।

अतः परं प्रवक्ष्यामि यथाकल्पोपदेशतः ।
तारामेकजटाम्नायां[1] नत्वा तस्याः प्रसाधनम् ॥

ॐ हुं वज्राङ्के मम रक्ष रक्ष फट्[3] स्वाहा इत्यनेनात्मरक्षां कृत्वा प्रथमं तावद् योगी मुखशौचादिकं कृत्वा क्वचिद् विजने घनश्मशानचत्वरादौ सकलजगदभ्युद्धरणोत्साहवत्सलः परमसुखाभ्यासीनः स्वहृदि रक्तपद्मोपरि चन्द्रमण्डले कृष्णहुँकारं सरश्मिकं ध्यायात्। तस्य रश्मिनाऽऽकाशे गुरुबुद्धबोधिसत्त्वान् दृष्ट्वा पूजयेत्। पापदेशनापुण्यानुमोदनात्रिशरणगमनबोधिचित्तोत्पादादिकं कृत्वा आत्मभावनिर्य्यातनामार्गाश्रयणं चाशयविशुद्धिरहङ्कारममकारपरित्यागश्चेति मैत्रीकरुणामुदितोपेक्षां च भावयेत्। ततश्च—

चित्तमात्रं तु वै तिष्ठेत् बोधिसम्भारभावनैः ।

प्रतिभासमात्रं ज्ञानं ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं[5] स्वपरं विभाव्य शून्यं प्राक्प्रणिधिमनुस्मरेत्।[6] रेफेण सूर्य्यं पुरतो विभाव्य तस्मिन् रवौ[7] हुँभवविश्ववज्रं विश्ववज्रान्तर्गतं सूर्य्यमण्डलं सूर्य्यमण्डलस्योपरि चन्द्रमण्डले स्फुरद्रत्नप्रदीपमिव हुँकारं निश्चलं ध्यायात्। ततस्तस्माद् विनिसृत्य नीलपीतरक्तहरितनानावर्णरश्मिनिकरैः रोम-

---

[1] C ०जटाम्नाया।
[2] N [illegible]।
[3] Ab adds another फट्।
[4] Ba [illegible]।
[5] AC स्वमपरं।
[6] Ab ०स्मरत्।
[7] A तस्मिन् only।

विवरविनिर्गतैः रक्तपँकारजं रक्तकमलं रक्ततनु वैरोचनादिपरमाणुमयैः पूर्व्वादिदिक्षु चंक्रमणेन[1] यमान्तकादयस्तथानीय संपूज्य तत्त्वपूजादिभिः त्रिशरणगमनादिकं ध्यायात् तान्येव प्रवेशयेत् इति बुद्धोपसंहारो नाम समाधिः।

ततः करुणा[2]म्रेडितहृदयो यथाक्रमं नरकतिर्य्यक्गतमनुष्यासुरदेवतामवलोक्य तद्विनिर्गतनानारश्मिभिः संस्पृश्य वैरोचनादितथागतरूपेण निष्पाद्य तत्रैव प्रवेशयेदिति समयसत्त्वोपकारो नाम समाधिः।

तत आकाशदेशे रक्तपँकारजं रक्तकमलं विश्वदलं केशरान्वितं तन्मध्ये[4] रक्तरँकारपरिणतं सूर्य्यमण्डलं तस्योपरि कृष्णहुँकारजं[5] सूर्य्यम्, सूर्य्यस्थहुँकारोद्भवं करालवज्रं यव[6]प्रमाणं वज्रमयं रश्मिविकीर्णं सकलमारसैन्यविनाशयमानं विचिन्तयेत्। ततो भाभिरूर्द्ध्वंगताभिर्वज्रपञ्जरं पार्श्वगताभिर्वज्रप्राकारं वज्रवितानमधोगताभिर्वज्रमयीं भूमिं विदध्यात्। तन्मध्ये शरदिन्दुधवलां अन्तःसुषिरामूर्द्ध्वस्थितत्रिकोणां एकारजां धर्म्मोदयां भावयेत्। तद्गगनकुहरान्तर्गतं यँकारपरिणतं धन्वाकारं कृष्णाभं वायुमण्डलं ध्वजाङ्कितम्, तदुपरि रँकारजं पीतं त्रिकोणरेफाङ्कितं अग्निमण्डलं तस्योपरि वँकारपरिणतं श्वेतवर्णं चक्राकारं आपो[9]मण्डलं घण्टा[10]ङ्कितम्, तदुपरि लँकारजं

---

[1] A ०दिक्चंक्रमेण।
[2] A ०मुदि०, Ba ०मेडि०।
[3] ANC निष्पाद०।
[4] ANC तन्मध्य०।
[5] A ०कारं।
[6] ANC पर्व्वप्रमा०।
[7] सकल० dropped in A.
[8] Ba omits.
[9] Ba आप०, A अपा०।
[10] ANC घटा०।

श्यामवर्णं चतुरस्रं पृथ्वीमण्डलं विश्ववज्राङ्कितम्, तस्योपरि सुँकारपरिणतं महासुमेरुपर्व्वतराजं चतूरत्नमयं अष्ट-शृङ्गोपशोभितम्, तस्योपरि झटिति रक्तकमलं विश्वदलं यावदिच्छाविस्तरं[2] तत्किञ्जल्के रवि[4]शशिसंपुटयोर्म्मध्ये हुँकारं हुँकारेणात्मानं विभावयेत् कायवाक्चित्तात्मकं कृष्णहुँकारम्। पुनः कृष्णहुँकारपरिणतं विश्ववज्रं विश्ववज्रपरिणामजं कूटागारम्—

चतुरस्रं चतुर्द्वारमष्टस्तम्भोपशोभितम्।
हारार्द्धहारसंयुक्तं वज्रसूत्रैरलङ्कृतम्॥

तस्मिन् मण्डलचक्रान्तर्गतं रविशशिसंपुटयोर्म्मध्ये धर्म्मोदये[5] गगनकुहरान्तर्गतं कृष्णहुँकारं ध्यायात्। तत आ[6]कारेण सूर्य्यमण्डलं भावयेत् तदुपरि पीतहुँकार-परिणतं महावज्रधरं सितवर्णं ध्यायाद् एकवक्त्रं द्विभुजं त्रिनेत्रं वज्रघण्टाधरं ध्यानस्थमात्मानं तस्य हृदये कृष्ण-हुँकारं नानारश्मीन् निश्चार्य्य दशदिग[8]नन्तपर्य्यन्ताव-स्थितान् तथागतान् [9]बुद्धबोधिसत्त्वविद्यादेवता क्रोधादीन् सञ्चोद्य पुनरागत्य तस्मिन्नेव सूर्य्ये प्रविशन्तं चिन्तयेत्। तमेव महावज्रधरं तानेव तथागतादीन् एकलोलीभूतं सूर्य्ये प्रविशन्तं पश्येत्। ज्वलद्भासुराकाराश्च योजन-सहस्र[10]व्यापिनं तदुपरि कृष्णहुँकारं नानारश्मिसंयुतं ततो हुँकाराद् रश्मिं निश्चरन्तं पश्येत्। पुनस्तत्रैव प्रवेश्य

---

[1] A श्वश्या°। [2] दिच्छाविस्ताडं।
[3] A °ल्केन। [4] Ba विश्व°।
[5] All MSS read धर्म्मोदयायां। [6] AC आका°।
[7] ANC वज्रवज्र°। [8] N दशदिशा°।
[9] बुद्ध° dropped in N. [10] AC °व्यापिनं।

तदेवाक्षरं विनताखड्गस्थं महावज्रं श्वेतकपालस्थं नाना-रश्मिविस्फुरन्तं ध्यायात्। बुद्धबोधिसत्त्वक्रोधविद्यादेवत्यो-गगनतलपूरितलकबिम्बमिव सूर्य्यावस्थिताश्चिन्तयेत्। तैर्बुद्धा-दिभिः सत्त्वान् परिपाच्य पुनरागत्य वज्रबिम्बं प्रविशन्तं पश्येत्। तदेव वज्रबिम्बं द्वादशमुखां महाकृष्णवर्णां चतु-र्विंशतिभुजां चतुर्मारसमाक्रान्तां श्वेतकपालोपरि प्रत्या-लीढपदां महा[2]प्रलयाग्निसमप्रभां विवृतास्यां हाहाकारां ललज्जिह्वां सरोषां विकृतकोटिभीमभ्रुकुटीतटोद्धृ[3]नेत्र-चलद्वर्त्तुलां भयस्यापि भयङ्करीं कपालमाला शिरसि भूषितां व्याडैरलङ्कृतां षण्मुद्रो[4]पेतां प्रथममुखं महाकृष्णं तथा दक्षिणमुखपञ्चकं सितपीतहरितरक्तधूम्रवर्णं च वाममुखपञ्चकं रक्तसितपीतहरितसितरक्तं च ऊर्द्ध्व[6]मुखं धूम्रं विकृतं क्रुद्धं सर्व्वमुखानि दंष्ट्राकरालवदनानि त्रिनेत्राणि ज्वलितोर्द्ध्वपिङ्गलकेशानि, सरोषां खर्व्वलम्बो-दरीं पीनोन्नतपयोधरां व्याघ्रचर्म्मनिवसनां दक्षिणद्वादश-भुजेषु खड्ग-वज्र-चक्र-रत्नच्छटा-अङ्कुश-शर-शक्ति-मुद्गर-मुसल-कर्त्रि-डमरु-अक्षमालिकां च वामद्वादशभुजेषु धनुः-पाश-तर्ज्जनी-पताका-गदा-त्रिशूल-चषक[8]-उत्पल-घण्टा-परशु-ब्रह्मशिरः-कपालं च—

सुप्रहृष्टां शवारूढां नागाष्टकविभूषिताम्।
नवयौवनसम्पन्नां हाहाट्टहासभासुराम्।
पिङ्गोर्ध्वैकजटां ध्यायात् मौलावक्षोभ्यभूषिताम्॥

---

[1] Ba drops श्वेत०। [2] AC बलया०।
[3] A तटोद्वृत०। [4] AC षण्मुखो०।
[5] A ऊर्द्ध०। [6] A महाधूम्रं।
[7] A ०च्छना०। [8] AC ०चषक०।

ॐ आः हुँ कायवाक्चित्ताधिष्ठानं कुर्य्यात्। ॐ ह्रौं[1] चौं[2] हुँ वायुवरुणमाहेन्द्राग्निमण्डलेषु वीर्यं यथोपदेशतः एवम्भूतं भगवत्यात्मको मन्त्री पुनर्गगनकुहरे ज्ञानचक्रमाकृष्याग्रतः स्फुटीकृत्यावलीय स्वसमयचक्रे[5] प्रवेशयेत्। प्रवेश्य एकीकृत्य देवताह[6]ङ्कारमुद्वहमानः स्वकायविनिर्गतरश्मिसमूहं तथागतबोधिसत्त्वविद्यादेवतीक्रोधादिभिः पञ्चामृतपरिपूर्णकलशजलै[7]रभिषिच्यमानं विविधपूजाविशेषैः सम्पूजयेत् आत्मानं भावयेत्। उष्णीषे हुँ[8] ललाटे ॐ कण्ठे आः हृदि ह्रौं नाभौ चौं नाभितले हुँ गुह्ये चाँ पादयोः अँ अः फट् स्वाहा इत्यङ्गन्यासः। एवं समयी भूत्वा[9]ऽनेन विधिना यान्येव[10] मन्त्राक्षराण्युच्चार्य्यन्ते तानि देवतीमुखान्निर्गतानि सरश्मिकानि स्वमुखं प्रवेश्य कुलिशमार्गेण निश्चार्य्य देवीपद्मप्रविष्टानि पुनर्दे[11]वीमुखात् स्वमुखमनेन क्रमेणाविच्छिन्नं मन्त्रमावर्त्तयेत्। एवमाखेदपर्य्यन्तं परिजप्य ततः स्वहृदये रश्मिपुञ्जाकारं क्रमेण दीपशिखेव यावदनुपलब्धिकं कुर्य्यात्। यथोक्तां उत्पलमुद्रां बद्ध्वा [12]शिरसि ललाटकण्ठनाभिनाभितलगुह्यपादद्वयेषु विन्यस्य मन्त्रं जपेदनिमित्तयोगेन। तत्रायं मन्त्रः— ॐ ह्रौं चौं हुँ फट् मूलमन्त्रः, ॐ ह्रौं चौं हुँ हुँ फट् स्वाहा हृदयमन्त्रः, ॐ ह्रौं चौं हुँ उपहृदय-

---

1 C क्रौं। 2 A ह्रौं।
5 N omits; A has ज only. 4 A वैनग॰।
6 ABa ॰चक्रेषु। 6 A ॰ह्याहङ्ग॰।
7 ANC कलसैर॰। 8 A हूं।
9 AC समयभूतो। 10 AC विधिनान्ये च।
11 ANC ॰र्देवती॰। 12 AC बद्ध्वार॰।

मन्त्रः । एवं विचिन्त्य दृढीकृत्यात्मानं भावयेत् । अथवा पटगतां भगवतीं भावयेत् । पूर्व्वसेवालक्षं जपेत् । दशांशेन[1] होमं कुर्य्यात् । श्रीफल[2]पुष्पं पत्रं वा श्वेतार्कपुष्पं श्वेतकरवीरपुष्पं वा गव्यघृतेन होमं कुर्य्यात् । यथाविधिना पटं लिखापयित्वा पूजाध्यानजापं कुर्य्यात् । पञ्चानन्तर्य्यकारिणोऽपि कोटिजापेन सिध्यति । सर्व्वभावनिःस्वभावं कृत्वा झटिति हृदि कमलं कमलोपरि रविशशिमध्ये रक्तहुँकारं सूक्ष्मरूपं वालाग्रसहस्रभागं बिन्दुरूपं हुँकारान्वितं वज्रनलनासायां[3] ध्यायात् । हुँकारोद्भवां वज्रयोगिनीं रक्तवर्णां द्विभुजैकमुखां त्रिनेत्रां नग्नां मुक्त[4]केशां ललितक्रोधां[5] षण्मुद्रोपेतां धर्म्मोदयान्तर्गतां शवाक्रा[6]न्तां अध[7]ऊर्द्ध्वपादस्थितां कर्त्तिकपालधरां सरोषां भावयेदहर्न्निशम् ।

॥ विद्युज्ज्वालाकरालीनामैकजटासाधनं समाप्तम् ॥

---

[1] AC दशात्मेन ।
[2] N ०फलं ।
[3] A ०नाभ्रां ।
[4] ANC मुकुट० ।
[5] A ०स्फोटां ।
[6] AC सर्व्वाक्रा० ।
[7] AC अर्द्ध० ।

## 124.

नम एकजटायै ।

तारा मारभयङ्करी[1] सुरवरैः सम्पूजिता सर्व्वदा
लोकानां हितकारिणी जयति सा मातेव या रक्षति ।
कारुण्येन समायुता बहुविधान् संसारभीरून् जनान्
त्राची भक्तिमतां विभाति जगतां नित्यं भयध्वंसिनी ॥

एकजटोद्भवं सद्यः साधनं च भविष्यति ।
ज्ञाने[2]न चाधुना तेन सर्व्वकर्म्म प्रसिध्यति ॥

ओमित्यक्षरमुच्चार्य्य शून्यता क्रियते सदा ।
तदेवाक्षरमुच्चार्य्य विश्वपद्मस्य भावना ॥

विश्वपद्मस्य मध्ये तु टामि[3]त्यक्षरभावना ।
कपालं भाव्यते शुक्लं हुँकारं तस्य मध्यतः[4] ॥

नीलं चैतद्युक्तं च[5] नीलरश्मिसमन्वितम् ।
तत्परिणामयोगेन आत्मचित्तमयेन तु ॥

भाव्यते तत्क्षणाद् देवी नीलाञ्जनसमप्रभा ।
चतुर्भुजा त्रिनेत्रा च रक्तभीमसुलोचना ॥

व्याघ्रचर्म्मपरिधाना कपालाभरणोज्ज्वला ।
मौक्तिकेनैव हारेण शोभनेन विराजिता ॥

द्विरष्टवर्षाकारा च पीनोन्नतपयोधरा ।
सुपिङ्गैकजटा देवी लम्बोदरसुशोभना ॥

---

[1] AC ०ङ्करै ।
[2] A ज्ञाते० ।
[3] AC तामि० ।
[4] AC मध्ये तु ।
[5] AN ०मस्तक, Ba ०युक्तक ।

ईषद्दंष्ट्राकरालास्या ललज्जिह्वा भयङ्करी ।
नीलसर्पैः सुघोरैश्च मण्डिता तीव्ररश्मिभिः ॥
केयूरनूपुराद्यैश्च[1] किङ्किणीभिः प्रमण्डिता ।
वामहस्ते कपालं च दक्षिणे कर्त्तिशोभना ॥
उत्पलं चापरे हस्ते कलिकानाल[2]संयुतम् ।
पुनर्दक्षिणहस्ते च खड्गं विभाव्य यत्नतः ॥
खड्गपरिणामयोगेनाक्षमाला च दृश्यते ।
आलीढ[3]स्थानरक्ता च कपालमध्यदेशतः ॥
प्रलयानलपुञ्जाभा रश्मिज्वालासमन्विता ।
ध्यानं यः कुरुते नित्यं देव्या भक्तिसमन्वितः ॥
जापं च कुरुते यो हि [4]सार्धाक्षरचतुष्टयम् ।
तस्य वश्यं[5] जगत् सर्व्वं यथा बुद्धेन देशितम् ॥
पुनः कपालमध्ये च साध्यं प्रयात्य यत्नतः ।
शिरः पादौ च सम्पीड्य पद्भ्यां स्था[6]नेन तेन च ॥
निग्रहं क्रियते नूनं यदि ध्यानमयं मनः ।
मन्त्रश्च कथ्यते सम्यक् यथा देवीप्रबोधकः ॥
हान्तं हुताशनस्थं च चतुर्थस्वरभेदितम् ।
बिन्दुमस्तकसंभिन्नं खण्डेन्दुसहितं पुनः ॥
एतद् बीजं[7] महद्बीजं द्वितीयं शृणु साम्प्रतम् ।
तान्तं[8] वह्निसमायुक्तं पुनस्तेनैव भेदितम् ॥

---

[1] A केयूराद्यै० ।
[2] AC ०कानन० ।
[3] A ०नररक्ता च, NBa ०स्थानरक्ताश्च ।
[4] AC सार्द्धाक्षर०, Ba सार्द्धाक्षर० ।
[5] Ba वश्यं ।
[6] A पट्टस्था० ।
[7] AC एकबीजं ।
[8] A क्षान्तं ।

नादबिन्दुसमायुक्तं द्वितीयं भवति स्थिरम्[1] ।
तृतीयं तु पुनर्बीजं कथयामि प्रयत्नतः ॥
ह्रान्तं षष्ठ[2]स्वराक्रान्तं नादबिन्दुसमन्वितम् ।
एतद् बीजवरं श्रेष्ठं त्रैलोक्यदहनात्मकम् ॥
कथयामि चतुर्थं च यथा बुद्धेन भाषितम् ।
[3]फान्तं शुद्धं सुतेजाढ्यं सर्व्वसिद्धिप्रदायकम् ॥
शृणु अर्द्धाक्षरं सम्यक् मन्त्रनिष्पत्तिकारणम् ।
टान्त[4]मविहीनं तु उच्चारेण तु रक्षणम्[5] ॥
देव्या एकजटायास्तु मन्त्रराजो महाबलः ।
अस्य श्रवणमात्रेण निर्व्विघ्नो जायते नरः ॥
सौभाग्यं जायते नित्यं विलयं यान्ति शत्रवः ।
धर्म्मस्कन्धो भवेन्नित्यं बुद्धतुल्यो न संशयः ॥

॥ इदमेकजटायास्तु साधनं [6]सुष्ठु समाप्तम् ॥

---

[1] AC विस्तरं ।
[2] ANC ह्रान्तषष्ठ० ।
[3] A या कं ।
[4] A टान्तमविच्छिनास्तु ।
[5] NCBa ०चारयस्य तु लक्षणं ।
[6] AC कष्टं, Ba क्लिष्टं ।

125.

नम एकजटायै ।

प्रथमं तावन्मन्त्री मनोऽनुकूले[1] ध्यानालये सुखासनोपविष्टो गुरुबुद्धबोधिसत्त्वान् [2]बाह्याध्यात्मपूजाभिः सम्पूज्य त्रिशरणगमनं पापदेशनादिकं विधाय दृढं बोधिचित्तमुत्पाद्य आमित्यक्षरमुच्चार्य्य सर्व्वधर्म्मशून्यतामामुखीकृत्य पुनः आँकाराक्षरमुच्चार्य्य तत्परिणतं विश्वपद्मं विभावयेत्। तन्मध्ये टाँ[3]कारजं पद्मभाजनं चन्द्रकान्तसमप्रभं तन्मध्ये स्फुरन्मयूखाव[4]भासितानन्तलोकधातुं इन्द्रनीलप्रभं हुँकारं विचिन्त्य तत्परिणतां इन्द्रनीलमहारत्नद्युतिव्याप्तजगत्त्रयां चतुर्भुजां महा[5]भीमां [6]रक्तभीमत्रिलोचनां व्याघ्रचर्म्माम्बरधरां पद्मभाण्डैरलङ्कृतां नैरंशुकेन हारेण मण्डितां चण्ड[7]रूपिणीं द्विरष्टवत्सराकारां पीनोन्नतपयोधरां आपिङ्ग[8]कजटां क्रूरनागाभरणविभूषिताम्—

ईषद्दंष्ट्राकरालास्यां ललज्जिह्वां भयङ्करीम् ।
लम्बोदरीं महामैत्रीकरुणाविष्टमानसाम् ॥
हारनूपुरकेयूरकिङ्किणीमेखलादिभिः ।
मण्डितां च हुँकारजितमारमहाचमूम् ॥
वामपाणिधृताम्भोजभाजनं दक्षिणे करे ।
प्रोल्लसन्मारसन्त्रा[9]सिवज्रवत्कर्त्रिधारिणीम् ॥
उत्पलं च पुनर्वामे सनालकलिकाङ्कितम् ।
दक्षिणे तु करे खड्गं दृष्ट्वा तत्परिणामतः ॥

---

[1] A adds ध्यात्वा ।
[2] B बाह्यपूजा० ।
[3] N दाँ० ।
[4] A फलं समुखाव० ।
[5] AC ०भैमां त्रिलो०, N भीमत्रिलो० ।
[6] रक्तभीम० found only in Ba.
[7] AC चन्द्र० ।
[8] AC ०जटाकुल० ।
[9] AC ०तन्त्रा० ।

स्फुरत्तारावलीकान्तां[1] भावयेदक्षमालिकाम् ।
रक्तपूर्णकपालस्य मध्य आलीढसंस्थिताम् ॥
प्रलयानलवद्दीप्तज्वालान्तर्वर्तिविग्रहाम् ।
ध्यायादेकजटां देवीं स्फुरन्[2] मन्त्रं जपेत् ततः ॥
मन्त्रस्त्वचिन्त्यसामर्थ्यः[3] साधक[4]स्यचतुष्टयः ।
[5]जगत्क्षोभवशावेशः चास[6]कृद् बुद्धभाषितः ॥
आलीढपद्मामाक्रम्य साध्यं मूर्ध्नि पदद्वये ।
पद्मभाण्डे विभाव्यैवं[7] योगी मन्त्रं [8]स्फुरन् जपेत् ॥
मन्त्रस्तु कथ्यते सिद्धः[9] सम्यग् देवीप्रबोधकः ।
आद्यमग्निर्[10]थारूढं हान्तमीश्वर[11]भेदितम् ॥
उद्धरेदर्द्धचन्द्रार्द्धबिन्दुभूषितमस्तकम् ।
द्वितीयं तु तथा किन्तु [12]तान्तरूपेण भेदयेत् ॥
हान्तमेव तृतीयं च[13] षष्ठस्वर[14]समन्वितम् ।
पूर्व्ववच्छीर्षशोभं च चतुर्थं स्यात् [15]फडन्तकम् ।
जपेन्मन्त्र[16]मिमं मन्त्री ह्रीं [17]त्रीं हुं फडितीदृशम्[18] ॥

॥ आर्य्यैकजटासाधनं समाप्तम् ॥

---

1 A ॰ताराचक्रान्तो ।
2 AC स्तवं ।
3 A ॰चिन्तमावेष्य ।
4 ACBa साधकस्य॰ ।
5 A जगत्क्षौ भवमावेशः ।
6 ANC ॰सबुद्ध॰ ।
7 Ba विभाव्येयं ।
8 A स्फुरं ।
9 AC सिद्धिः ।
10 A ॰रग्निमथा ।
11 Ba ॰वेदितं ।
12 ANC थान्त॰ ।
13 A तृतीयपञ्च ।
14 AC ॰समितं ।
15 AC फुदन्तकं ।
16 Ba ॰मविधिना ।
17 A क्रौं ।
18 N ॰दृशं ।

126.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं विश्वपद्मोपरि टांकारं परिणतकपालमध्ये हुँकारं स्फुरणसंहरणपूर्व्वकं तत्परिणामेन भगवतीमेकजटां सर्व्वाङ्गलक्षणां चतुर्भुजैकमुखीमारक्तत्रिनयनां व्याघ्रचर्म्मवसनां कपालमालाशिरःपिङ्गोर्द्ध्वकेशां दंष्ट्राकरालललज्जिह्वां लम्बोदरीं नीलभुजगविचित्राभरणां द्विरष्टवर्षां पीनोन्नतपयोधरां हारकेयूरकिङ्किणीस्रग्दामाञ्चितमितसकलावयवां दक्षिणभुजाभ्यां खड्गकर्त्रिधारिणीं वामभुजाभ्यां उत्पलकपालधारिणीमात्मानं झटिति निष्पाद्य मन्त्रं जपेत् ॐ ह्रीँ [त्रीँ] हुँ फट् ।

॥ इत्येकजटासाधनम् ॥

---

127.

ॐ आः हुँ ॐ[3] वज्रयोगिनि प्रतीच्छेमं बलिं ह्रीँ हुँ हहहह[4] हं हः फट् मम शान्तिं कुरु स्वाहा, ॐ आः [5]अरलि होः[6] इत्यादीनुच्चारयेत् ।

अथातः संप्रवक्ष्यामि द्विभुजैकजटासाधनम् ।
पिङ्गोर्ध्वैकजटां देवीं कर्त्रिकरोटधारिकाम् ॥

---

[1] A ता[का]र० ।
[2] A नीलङ्ग० ।
[3] A omits.
[4] AC ०हेः, N ०हैः ।
[5] N अरले, AC अरलिड ।
[6] A होमि० ।
[7] ANC ०दिभुजा० ।

तथा चतुर्भुजां देवीं कल्पोक्तां च ब्रवीम्यहम् ।
शर[1]शङ्खधरां सव्ये वामे चापकरोटकाम् ॥

तथा चाष्टभुजायास्तु वक्ष्यामि क्रमसंगतम् ।
सव्ये[2] खड्गशरं[3] वज्रं कर्त्रिकां च तथैव च ॥

चापोत्पल[4]परशुं च वामे करोटधारिकाम् ।
कृष्णवर्णा मताः सर्व्वा व्याघ्रचर्म्मावृताः कटौ[5] ॥

एकवक्त्राः त्रिनेत्राश्च पिङ्गोर्द्ध्वकेशमूर्द्धजाः ॥
खर्व्वा लम्बोदरा रौद्राः प्रत्यालीढपदस्थिताः ॥

सरोषकराल[6]वक्त्रा मुण्डमालाप्रलम्बिताः[7] ॥
कुणपस्था महा[8]भीमा मौलावक्षोऽभ्यभूषिताः ।

नवयौवनसम्पन्ना घोराट्टहासभास्वराः ॥
टाँकारबीजसम्भूताः सद्यः प्रत्ययकारिकाः ।

विश्वपद्मोपरि सूर्य्ये चिन्तनीयाः प्रयत्नतः ॥

ह्रीँ त्रीँ[9] हुँ फट् ।

[10]निरंशुमालिकां ध्यात्वा खड्गस्थाने विचक्षणः ।
पूर्व्वोक्तं यथाक्रमेण संजपेत् मन्त्रमुत्तमम् ॥

भावनाबलनिष्पत्तौ भवेद् योगी महाकविः ।
लभते मञ्जुवाणीं तु लक्षमन्त्रस्य जापतः ॥

---

[1] Ba खड्ग० ।
[2] ABa सव्वे, N मध्ये ।
[3] A ०धरं ।
[4] AC चापसूल० ।
[5] कटिं in all MSS.
[6] A सरोषाकार० ।
[7] AC ०बलाम्बिताः, N ०वलम्बिताः ।
[8] A मदा ।
[9] ANC त्रीं ।
[10] Ba omits निरंसु० ...... जापतः ।

तारायाः साधनं कृत्वा पुण्यमासादितं मया।
तेनैव प्राणिनः सर्व्वे भवन्तु तारिणीसमाः॥

॥ एकजटासाधनं समाप्तम्।
। [2]आर्य्यनागार्ज्जुनपादैः भोटेषु उद्धृतमिति॥

---

## 128.

[3]नमः शुक्लैकजटायै।

पद्मावस्थितपद्मभाजनवरे हुँकारजाता सिता
साध्यालीढपदस्थिता गुरुकुचा संरक्तचक्षुर्द्वया।
सत्पिङ्गैकजटा निरंशुसहिता सव्येऽक्षमालाधरा
वामे नीलपयोजकोरकधरा देवी सदा पातु वः॥
भीमाष्टनागसहिता करुणावशेन
पूर्णातिलोलरसना भयकारिहासा।
चित्तेशशोभितशिरा मृगशत्रुचर्म्म-
वस्त्रा भवस्य[4] च निहन्तु तमांसि तारा॥
श्रीमदद्वयवज्रस्य गुरोर्नत्वा पदाम्बुजम्।
श्रीमल्ललित[5]गुप्तेन तारासाधनमुच्यते॥

---

[1] ANC तेन प्राणिजनाः।
[2] This part of the Colophon is not to be found in ACBa.
[3] This *Sādhana* is found only in B, *see* Fol. 82 ff.
[4] MS वभस्य। [5] MS ०गुप्तेन।

प्रथमं तावन्मन्त्री कृतमुखशौचादिकः सुविशदोपलिप्ते सुरभिकुसुमनिकरावकीर्णे प्रदेशे विभवानुरूपतः पूजां विधाय स्वहृदये शुक्लवर्णं हुँकारं पश्येत्। हुँकारादात्मनो रोमविवरेण मुखादिद्वारेण पञ्चाकारान् रश्मीन् निश्चरतश्चिन्तयेत्। तैश्च रश्मिभिरनन्तापर्य्यन्तगङ्गानदी-वालुकासमालोकधातवोऽवभासिताः। ततोऽकनिष्ठभुवन-स्थिता भगवती वक्ष्यमाणवर्णादिसहिता कोऽपि सत्त्वो मामध्येषयति तमधिष्ठामि इत्युक्त्वा झटिति पुरतोऽव-स्थिता चिन्तयितव्या पश्चात्। तत एवं हुँकारान्नानापुष्प-धूपगन्धमाल्यादीनि निश्चार्य्य ततो मैत्रीकरुणामुदितो-पेक्षापापदेशनापुण्यानुमोदनापुण्यपरिणामनात्रिशरण-गमनादिकं कुर्य्यात्। ॐ वज्रपुष्पे ॐ आः हुँ इत्यनेन मन्त्रितं पुष्पं एवं नामचिह्नितमन्त्रेण धूपादीन्यपि दद्यात्। तत आमित्यक्षरमुच्चारयेत्। आद्यनुत्पन्नाः सर्व्वधर्म्मा इत्युक्त्वा सर्व्वस्वभावशून्यं भावयेत्। मन्त्रमुच्चारयेत् ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहम्, ॐ शून्यता-ज्ञानवज्रस्वभावात्मकोऽहम्।

ततः प्रणिधिसामर्थ्यात् अँकारपरिणतं शुक्लवर्णं पद्मं तन्मध्ये टाँकारेण करोटकं चन्द्रकान्तिमणिप्रभं रुधिरपरि-पूर्णं तत्र मध्ये हुँकारं पञ्चरश्मिकं पञ्चात्मकं सुन्दरं शुक्लं तत्परिणतां नीलोत्पलकलिकां हुँकाराधिष्ठितां पश्येत्। सर्व्वमेकत्र परिणम्यात्मानं भगवतीरूपं विभावयेत् शुक्लां द्विभुजामेकाननां दक्षिणे निरंशुकाक्षमालाधरां वामे नीलोत्पलकलिकां बिभ्रतीं अतिपिङ्गैकजटां व्याघ्र-चर्म्मखण्डाम्बरां क्रूरनागाभरणभूषिताम्; त्रिलोचनां

[illegible] नीलः, कण्ठा(वा)भरणं तक्षको रक्तः, नन्दोपनन्दौ कर्णकुण्डलौ पीतौ, ब्रह्मसूत्रं अनन्तो सितः, कटिसूत्रं वासुकी शुक्लः, दक्षिणभुजे वलयं कुलिकः पारावतवर्णः, इतरभुजे वलयं शङ्खपालो धवलः, नूपुरौ पद्ममहापद्मौ रक्तौ; हारनूपुरकेयूरकिङ्किणीमेखलादिमण्डितां शवोपरि प्रत्यालीढपदस्थितां अत्यन्तभीमरूपां ईषद्दंष्ट्रालललज्जिह्वां श्रीमदक्षोभ्यालङ्कृतमुकुटां महामैत्रीकरुणाविष्टमानसाम्। ततः स्वहृदये शुक्लहुँकारं तद्रश्म्याकृष्टज्ञानमण्डलं पश्येत्। पश्चात् जः हुँ वँ होः इत्यनेन क्रमेणाकृष्य प्रवेश्य बद्ध्वा तोषयेत्। ततो नीरक्षीरवत् ज्ञानसत्त्वसमरसं भावयेत्।

ततो भट्टारिकाहृदये कमलोपरि चन्द्रे ह्रौँकारं शुद्धस्फटिकसंकाशं रश्मिकोटिशतसहस्रं (रश्मीन्) निश्चरन्तं पश्येत्। भावनातः खिन्नो मन्त्रं जपेत्। पुनर्मन्त्रमहासामर्थ्यमण्डलं न द्रुतं न विलम्बितं नास्पष्टं न मात्राहीनं मनसाभिलिख्यम्। तत्रायं मन्त्रोद्धारः—सप्तमस्य चतुर्थं वह्निसंयुक्तं ईकारभेदितं अर्द्धेन्दुबिन्दुभूषितं इत्थं जपेत्। नाभिमध्ये अष्टदलकमलं तदुपरि चन्द्रे देदीप्यमानं ह्रौँकारं जिह्वोपरि अकारेण चन्द्रमण्डलं तदुपरि ह्रौँकारं पश्येत्। अक्षसूत्रगुलिकं च ह्रौँकारेण ग्रन्थिकाः ताश्चाविच्छिन्नं मुखान्निःसृत्य नाभिमार्गेण प्रविशन्ति च स्वमुखान्निर्गच्छन्ति चिन्तयेत्। एकाक्षरोऽयं मन्त्रराजश्चिन्तामणिकल्पः पापव्याधिनाशनो विशेषेण जगदक्षोभ्यबुद्धभाषितं मन्त्रमावर्त्तयेत्। दृढमतिः एवं मन्त्रं जपेत्। लक्षजापेन महाकविर्भवति श्रुतिधरो वाग्मी च, वज्रवाणीं च लभते। महाधनो दीर्घायुः सर्व्व[शास्त्रवि]शारदो

गरुडेश्वर इव त्रिभुवनं निर्विषं करोति। शीघ्रं च बोधि-मभिसम्भोत्स्यते नास्ति अत्र सन्देहः। ॐ आः ह्रीँ हुँ हँ हः अयं मन्त्रराजो बुद्धत्वं ददाति किं पुनरन्याः सिद्धयः। ॐ आः ह्रीँ हुँ घातय घातय सर्व्वदुष्टान् हुँ फट् स्वाहा इमं बलिं दद्यात् सर्व्वमारविनाशनम्।

॥ शुक्लैकजटासाधनं समाप्तम्।

। कृतिरियं ललितगुप्तपादानाम् ॥

---

129.

[1]नमश्चुन्दायै।

नत्वा [2]सम्यग् जिनांस्तांश्च चुन्दा[3]देवीं महर्द्धिकाम्।
तस्या आराधनं वक्ष्ये संक्षेपात् क्षिप्रसाधनम् ॥

प्रथमं तावन्मन्त्री स्वहृदीन्दु[4]मध्ये बीजं तृतीयवर्गाद्यं प्रथमपञ्चमेन पूरितं अर्द्धेन्दुबिन्दुभूषितं शरच्चन्द्रांशु-मालिनं सर्व्वबुद्धैरधि[5]ष्ठितं दिव्यं ततो रश्मिभिर्निष्पन्नां भगवतीं गुरुसंबुद्धादींश्च दृष्ट्वाऽभिवन्द्यानेन मन्त्रेण पूजयेत्। ॐ वज्रधूपे हुँ, ॐ वज्रपुष्पे हुँ, ॐ वज्रदीपे हुँ, ॐ वज्रगन्धे हुँ, ॐ वज्रनैवेद्ये हुँ। ततो—

---

[1] This *Namaskāra* is absent in N. A omits नमः ......पूरितं। चुन्दा is uniformly spelt as चुण्डा in Ba.

[2] N सर्व्वान् जि०, Ab सर्वान् जिनानां।

[3] NC चुन्दां।

[4] Ba ०मध्यबीजं।

[5] A ०तिष्ठितं।

एवमयं मे शरणं सर्व्वं प्रतिदिशाम्यघम्।
अनुमोदे[1] जगत्पुण्यं बुद्धबोधौ दधे मनः॥

इत्यादि पठेत्। ततः[2] खिधिपूर्व्वकंप्र सर्व्वधर्म्मनैरात्म्यं भावयेदनेन मन्त्रेण ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततो[3] —

बीजं मायोपमाकारं[4] त्रैधातुकमशेषतः।

ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहम्। ततः पूर्व्वोक्तबीजनिष्प[5]न्नश्रीचुन्दा[6]देवीरूपेणा[7]त्मानं भावयेत् शरच्चन्द्राभां चतुर्भुजां दक्षिणेन वरदां वामे पुस्तकाङ्कित-पद्मधरां करद्वये पात्रधरां सर्व्वालङ्कारभूषितां पद्मचन्द्रा-सनस्थां भावयेत्, पश्चात् मुद्रां बन्धयेत्। हृदूर्णाकण्ठ-मूर्द्ध[8]सु रक्षां कृत्वा जपं कुर्य्यात्। तत्रेयं मुद्रा, हस्तद्वयेन अञ्जलिं कृत्वा तर्ज्जनीद्वयं मध्यमामध्ये कुण्डलाकारेण लग्नं[9] अङ्गुष्ठौ पार्श्वतः। इयं चुन्दाया मुद्रा, मन्त्रश्चायम्— ॐ चले चुले[10] चुन्दे स्वाहा।

॥ चुन्दासाधनं समाप्तम्॥

---

[1] AC °मोद्य।
[2] ANCBa तत्प्रणिधि°।
[3] Ab adds विचिन्त्य।
[4] ANC adds विचिन्त्य।
[5] ANC °न्ना°।
[6] चुन्दा is differently spelt as चुन्द्रा, चून्द्रा, चुण्डा in different MSS.
[7] °रूपेण° found only in Ab.
[8] Ab मध्यकु°।
[9] AC पद्मं।
[10] चुले omitted in Ab only.

130.

प्रथमं हृदि चन्द्रे शुक्लचुँकारबीजं दृष्ट्वा तद्रश्मिभिर्बुद्धादीनभिपूज्य प्रणम्य संस्तुत्य च पापदेशनादिसप्तविधानुत्तरपूजानन्तरं त्रिशरणगाथां पठित्वा क्षमयित्वा चतुर्ब्रह्मविहारान् विभाव्य शून्यतां ध्यायात्। ततो विश्वदलपद्मचन्द्रे पुनः निजबीजं ध्यात्वा तत्परिणामेनार्य्यचुन्दां शरच्चन्द्राभामेकमुखां चतुर्भुजां वरददक्षिणभुजां पुस्तकाङ्कितपद्मवामभुजां पात्रधारिशेषभुजद्वयां नानाभरणविभूषितां वज्रसत्त्वमुकुटां अनेकसत्त्वार्थकारिस्फुरद्विग्रहां आत्मानं झटिति निष्पाद्य निजबीजं च हृदि विचिन्त्य मुद्रां त्रिषु स्थानेषु न्यसेत्। हस्तद्वयेनाञ्जलिं कृत्वा तर्ज्जन्यामध्ये कुण्डलाकारेण लग्नमङ्गुष्ठद्वयं पार्श्वतो विदध्यात्। मन्त्रः ॐ चले चुले चुन्दे स्वाहा।

॥ इति चुन्दासाधनम् ॥

---

[1] A ०भासामेक०।
[2] A ०काङ्कुत०।
[3] C ०वङ्कृत०।

131.

नमश्चुन्दायै।

प्रथमं हृदीन्दुमध्यस्थचुँबीजविनिर्गतविचित्ररश्मिभिर्निष्पन्नान् गुरुबुद्धबोधिसत्त्वान् दृष्ट्वा[2] पुरतः पूजादिकं कुर्य्यात् ॐ वज्रपुष्पे हुँ इत्यादिमन्त्रैः। ततः त्रिशरणगाथामुच्चारयेत्। तदनन्तरं शून्यतां विभाव्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्युच्चारयेत्। ततश्चुँ[3] निष्पन्नां चुन्दां शरच्चन्द्रप्रभां चतुर्भुजां सर्व्वालङ्कारभूषितां दक्षिणे वरदां वामे पुस्तकपद्मधरां शेषभुजाभ्यां पात्रधरां पद्मचन्द्रे सत्त्वपर्य्यङ्कासीनां भावयेत्। पश्चान्मुद्रया हृदूर्णाकण्ठमूर्धसु[4] संस्पृश्य रक्षां कृत्वा जपं कुर्य्यात् ॐ चले चुले चुन्दे स्वाहा। तत्रेयं मुद्रा— हस्तद्वयेनाञ्जलिं कृत्वा तर्ज्जन्योर्मध्ययोर्मध्ये कुण्डलाकारेण लग्नावङ्गुष्ठौ पार्श्वतः स्थितौ।

॥ इति चुन्दासाधनम् ॥

---

[1] A चुम्बीज०, B चुँविनि०। [2] AC पुनः।
[3] ANC तत्र चुँ०। [4] ACN ०मूर्द्धि सर्व०।

## 132.

नमो [1]मारीच्यै ।

पूर्व्वोक्तवि[2]धिना पँकारजविश्वपद्मोपरि चन्द्रे सितमाँकारजां मारीचीं श्वेतां पञ्चमुखीं दशभुजां चतुश्चरणां झटित्यात्मानं चिन्तयेत् । तत्र प्रधानमुखं श्वेतं दक्षिणं कृष्णं वामं वाराहं रक्तं पश्चान्मुखं हरितं मस्तकोपरि मुखं पीतं नानारत्नविरचित[3]चित्रशिखालङ्कृतजटामुकुटीं दक्षिणपञ्चभुजेषु सूर्य्यमण्डलवज्र[4]शराङ्कुशसूचीहस्तां वामपञ्चभुजेषु चन्द्रमण्डलचापाशोकपल्लवसपाशतर्ज्जनीसूत्रहस्तां विविधालङ्कारधरां कुमारीं नवयौवनां सितकञ्चुकोत्तरीयां चैत्यगर्भस्थां सप्तशूकररथारूढां विघ्नचन्द्रशङ्करब्रह्माक्रान्तचतुश्चरणाम् । तद्रथमध्यावस्थित[5]मकरसमाक्रान्ताऽन्यतमा भगवती कृष्णा शूकरमुखी वज्रतर्ज्जनीधरदक्षिणवामकरा ; दक्षिणदिशि अपरा भगवती रक्ता शूकरमुखी चतुर्भुजा अङ्कुशसूचीधरदक्षिणहस्तद्वया सपाशतर्ज्जनीसूत्रधरवामहस्तद्वया दिव्यालङ्कारधरा चेति ; वामदिश्यपरा भट्टारिका रक्ता शूकरमुखी आकर्णपूरितचापशरा[6] वज्राशोकपल्लवधारि[7]शेषदक्षिणवामभुजा विचित्राभरणा चेति । रथवाहकशूकराणामध आदित्यादिनव[8]ग्रहा नानेत्युप[9]द्रवरोगसङ्कुलाश्च मनुष्यरूपेणाधःपतिताश्चिन्तनीयाः । ततो हृच्चन्द्रस्थितमाँबीज-

---

[1] मारीची is also spelt as मारिचि, मारिची and मारीचि ।

[2] Ba ॰धानेन ।

[3] ANCBa ॰रत्नचित्र॰ ।

[4] AB ॰नीलवज्र॰ ।

[5] ॰कमल॰ in A.

[6] B ॰चापधरा॰ ।

[7] ॰शेष॰ found in Ba only.

[8] ॰आदिनव॰ in A.

[9] A नान्यं सूप॰, N नानाद्युप॰ ।

रश्मिभिस्तथागतानानीयाभिषेकं गृहीत्वा वैरोचनमुद्रिता भवति। ततो हृद्बीजादेवाक्षसूत्राकारेण मन्त्राक्षराणि निश्चार्य मुखान्नाभौ नाभेर्मुखे मुखात्[1] पुनरपि नाभावित्यादिकचक्रभ्रमणक्रमेण मन्त्र[2]मावर्त्तयेत्। तत्रायं मन्त्रः- ॐ मारीच्यै माँ हुँ हुँ फट् फट्[3] स्वाहा। स्वबीजाधिष्ठितं च सर्व्वभोजनादिकमनुष्ठेयम्। खेदे[4] च शताक्षरमन्त्रमुच्चार्य्य यथासुखं विहरेदिति।

॥ कल्पोक्त[5]दशभुजसितमारीचीसाधनम् ॥

---

## 133.

नमो मारीच्यै।

अथ शून्यताभावनानन्तरं चन्द्रे पीतमाँभवाशोकस्तवकं तदुपरि माँ तत्परिणता पीता द्विभुजैकमुखी वैरोचनसनाथरत्नमुकुटिनी कनकनिभशूकरपृष्ठविश्वपद्मचन्द्रे सलीलमूर्द्धस्थिता अशोकवृक्षशाखावलम्बवामकरा वरददक्षिणकरा हारादिभूषिताङ्गी नवयौवनकाम्या चेति। इत्थमेनां ध्यात्वा हृदि माँ[6]बीजस्फारित[7]रश्मिसनाथशूकरनिकरैर्दुष्टान्[8] सम्मर्द्य सत्त्वार्थमनेकविधं च विधाय ॐ मारीच्यै[9] माँ स्वाहा इति मन्त्रं[10] जपेत्।

॥ इति अशोककान्तामारीच्याः[11] साधनम् ॥

---

[1] ANC मुखादमेनापि। [2] ANC ०भ्रमणमन्त्र०।
[3] One फट् is dropped in ANC. [4] A खेदेन।
[5] कल्पोक्तसित० in B. [6] A मिबीज०।
[7] A ०स्फुरित०, B ०स्फारित०। [8] AC समर्च्चा, N समर्थ्य।
[9] A मारिचि। [10] AC लपयेत्। [11] Ba ०मारीचि०।

134.

नमो मारीच्यै ।

[1]निरुत्तरसुखासङ्गप्रज्ञापारङ्गतान् गुरून् ।
प्रणम्य कल्प[2]मारीच्याः साधनं लिख्यतेऽधुना ॥

तत्रादौ तावद् योगी सकलजगदभ्युद्धरणाध्याशयः ॐ फडिति[3] मन्त्रेण हृत्कण्ठोर्णामूर्द्धसु क्रोधमुष्टिं दत्त्वा ॐ मारीच्यै[4] विघ्ना[5]नुत्सारय हुँ फडित्यनेन च विघ्नान् विमर्द्य स्वहृदये [6]आँकारपरिणतसूर्ये पीतमाँकारं ध्यात्वा तद्विनिर्गतरश्मिनिवहैराकाशे स[7]मानीय भगवतीमग्रतः[8] स्थापयेत् गौरीं[9] त्रिमुखां त्रिनेत्रामष्टभुजां रक्तदक्षिणमुखां नीलविकृतवामवाराहमुखां वज्राङ्कुशशरसूचीधारिदक्षिणचतुष्करां अशोकपल्लवचापसूत्रतर्ज्जनीधरवामचतुष्करां वैरोचनमुकुटिनीं[10] नानाभरणवतीं चैत्यगर्भस्थितां रक्ताम्बरकञ्चुकोत्तरीयां सप्तशूकर[11]रथारूढां प्रत्यालीढपदां यँकारजवायुमण्डले हुँकारजचन्द्रसूर्यप्रातिष्ठितोग्रराहुसमधिष्ठितरथमध्ये देवीचतुष्टयपरिवृताम्; तत्र[12] पूर्वदिशि वर्त्ताली[13] रक्तां वराहमुखीं चतुर्भुजां सूच्यङ्कुशधारिदक्षिणहस्तां पाशाशोकधारिवामहस्तां रक्तकञ्चुकां चेति, तथा दक्षिणे वदाली पीतां अशोकपल्लव[14]सूचीवाम-

[1] Ab निरन्तर० ।
[2] ANC कल्पं ।
[3] A फटिति० ।
[4] N मारीचि ।
[5] Ba ०मुच्छारय ।
[6] A आंका०, N सांका ।
[7] A ०कारात्रीय० ।
[8] A ०मग्रतः ।
[9] Ab सुवर्णगौरां ।
[10] ANCAbB ०मुकुटी ।
[11] Ba ०रथामि० ।
[12] A तैव ।
[13] A वर्त्तारिं, Ab वेताली ।
[14] ०पल्लव० is found only in Ab.

दशभुजां वज्रपाशदक्षिणवामकरां कुमारीरूपिणीं नवयौवनालङ्कारवतीम्, तथा पश्चिमे वराली शुक्लां वज्रसूचीवद्दक्षिण[1]भुजां पाशाशोकधरवामकरां [2]प्रत्यालीढपदां सुरूपिणीं चेति, तथोत्तरदिग्भागे वराहमुखीं रक्तां त्रिनयनां चतुर्भुजां वज्रशरवद्दक्षिण[3]करां चापाशोकधरवामकरां दिव्यरूपिणीम्; ध्यात्वा पूजाप्रणामस्तुतिपापदेशनापुण्यानुमोदनापरिणामनायाचनात्रिशरणगमनबोधिचित्तोत्पादमार्गाश्रयणादिकं कृत्वा चतुर्ब्रह्मविहारांश्च[4] भावयित्वा ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति शून्यतासमाधिमालम्बयेत्।

ततः सूर्य्यमण्डले ॐकारजं वैरोचनं सिंहासनस्थं शुक्लं जटामुकुटधरं [5]बोध्यङ्गीमुद्राधरं[6] शान्तं सर्व्वालङ्कारभूषितं तस्य हृदि चन्द्रे पञ्चविंशत्यक्षरपरिवारमाँकारबीजपरिनिष्पन्नाशोकपल्लवं तदुपरि चन्द्रे माँबीजं एतत्सर्व्वपरिणामेन यथोक्तवर्णभुजादिलक्षणं मारीचीरूपमात्मानं झटिति ध्यात्वा ॐ मारीच्यै वर्त्तालि[7] वदालि वरालि वराहमुखि आकर्षय जः स्वाहेत्यनेन वर्त्तालीं पूर्व्वस्यां दिशि न्यसेत्। तथा ॐ मारीच्यै वर्त्तालि वदालि वरालि वराहमुखि सर्व्वदुष्टप्रदुष्टानां मुखं बन्ध बन्ध हुँ स्वाहेत्यनेन[8] दक्षिणस्यां वदालीम्। तथा ॐ मारीच्यै वर्त्तालि वदालि वरा[9]लि वराहमुखि सर्व्वदुष्ट-

---

[1] ANC ॰दक्षिणवाम॰।
[2] प्रत्यालीढपदां...... वामकरां omitted in A.
[3] NCB ॰शरदक्षिण॰। [4] A ॰विहारी मूलं।
[5] AC बोध्यङ्गी, N बोध्यग्री, Ba बोध्यं श्री।
[6] A मुद्रां, B मुद्रा। [7] Aa वेत्तालि, B वर्त्तालि।
[8] ANCB स्वाहेति। [9] A वरा॰।

प्र[1]दुष्टानां मुखं स्तम्भय वँ स्वाहेति पश्चिमायां वराहीम्। तथा ॐ[2] मारीच्यै वर्त्तालि वदालि वरालि वराहमुखि सर्व्वसत्त्वान् वशमानय ह्रोः स्वाहेत्यनेन चोत्तरस्यां वराहमुखीं चेति। ॐ मारीच्यै माँ हुँ हुँ फट् फट्[3] स्वाहेति भावनानन्तरं मन्त्रजापः। एवं सन्ध्याचयमधिष्ठाय देवतायोगेन विहर्त्तव्यमिति।

॥ कल्पोक्तमारीचीसाधनं समाप्तम् ॥

---

## 135.

नमो मारीच्यै।

प्रथमं तावत् स्वहृदि चन्द्रे शुक्लमाँकाररश्मिसमाकृष्टां भगवतीं नानोपहारेणाभि[4]पूज्य पापदेशनादिकं च कृत्वा चतुर्ब्रह्मविहारान् भावयेत्। ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्युच्चार्य्य पँकारजविश्वपद्मोपरि चन्द्रमण्डले पुनरपि सितमाँकारपरिणतां मारीचीं कुन्देन्दुसन्निभां पञ्चमुखीं दशभुजां चतुश्चरणां झटित्यात्मानं चिन्तयेत्। तत्र प्रधानमुखं शरीरवर्णं दक्षिणमुखं कृष्णं वाममुखं वाराहं रक्तं पश्चान्मुखं [5]हरितं मस्तकोपरि मुखं पीतं नानारत्नविचित्रचित्रशिखजटामुकुटिनीं दक्षिणपञ्चभुजेषु सूर्य्यमण्डलनीलवज्र[6]शराङ्कुशसूचिहस्तां वामपञ्चभुजेषु चन्द्रमण्डलचापाशोकपल्लवसपाश[7]तर्ज्जनीसूत्र-

---

[1] NCAb °दुष्टानां। A omits सर्व्वदुष्टा°......वराहमुखि।

[2] Ab omit.

[3] Ab omit.

[4] A नानोपहारैरभि°।

[5] A हरितवर्णं।

[6] AN °मयूखवज्र°।

[7] AC °तर्ज्जनीसूचां।

हस्तां विविधरत्नविरचितकुण्डलकेयूरचूडाकिङ्किणी[1] वस्त्रभूषितशरीरां नवयौवनां सितकञ्चुकोत्तरीयां चैत्यगर्भस्थां सप्तशूकररथारूढां विष्णुचन्द्रशङ्करब्रह्माक्रान्तचतुश्चरणाम्। तस्याश्च रथमध्ये स्थितमकरसमाक्रान्ता[2] अन्यतमा भगवती सा च कृष्णा शूकरमुखी वज्रतर्ज्जनीदक्षिणवामभुजा, दक्षिणदिशि अपरा भगवती सा च रक्ता शूकरमुखी चतुर्भुजा अङ्कुशसूचिदक्षिणद्वयहस्ता सपाशतर्ज्जनीसूचवामद्वयहस्ता दिव्यालङ्कारभूषिता चेति, वामदिश्यपरा[3] भट्टारिका सापि च रक्तवर्णा शूकरमुखी आकर्णपूरितचापशरवज्राशोकपल्लवदक्षिणवामभुजा [4]विचित्रवस्त्राभरणा चेति, रथवाहकशूकराणामध आदित्यादिनवग्रहा नानामृत्यूपद्रवरोगसङ्कुलाश्च पतिता मनुष्यरूपेण सन्ति। एवंरूपां भगवतीं ध्यात्वा हृच्चन्द्रे माँकारविनिर्गतरश्मिभिस्तथागतानानीयाभिषेकं गृहीत्वा शिरसि वैरोचनेनाङ्कयेत्। ततो हृद्बीजादेवाक्षसूत्राकारेण मन्त्राक्षरान्निश्चार्य्य मुखान्नाभौ नाभेर्मुखे मुखात्[5] पुनरपि नाभावित्यादिकचक्रभ्रमणक्रमेण[6] मन्त्रमावर्त्तयन् चिकोटितशतां मनसि कुर्य्यादिति। तत्रायं मन्त्रः— ॐ मारीच्यै माँ हुँ फट् स्वाहा। स्वबीजाधिष्ठितं च सर्व्वं भोजनादिकमनुष्ठेयम्। खेदे च शताक्षरमन्त्रमुच्चार्य्य यथासुखं विहरेदिति।

॥ कल्पोक्तविधिना सितमारीचीसाधनं समाप्तम् ॥

---

[1] A ०केयूरकाञ्चित०।
[2] AC स्थितकमले सर्व्वाक्रान्ता०।
[3] A वामदिशे भट्टा०।
[4] A ०चित्राभ०।
[5] AN omit.
[6] A omits ०क्रमेण०।

136.

नमो मारीच्यै।

ॐ आः ह्रीँ[1] स्वाहा इति शिरोललाटकण्ठहृदयजानुद्वयेषु आत्मनो विभाव्य ॐकारात् सर्व्वं पूर्व्ववत् मुद्रिपाठपर्यन्तं[2] विधिं विधाय ॐकारेण निष्पन्नां च वज्रधात्वीश्वरीं मारीचीं द्वादशभुजां रक्तां षण्मुखीं लम्बोदरां ज्वलत्पिङ्गलो[3]र्द्ध्वकेशां कपालमालिनीं सर्प[4]मण्डितमेखलां व्याघ्रचर्म्माम्बरधरां[5] चरणयुगनिपतितानेकविघ्नसन्ततिं चैत्यगर्भसूर्य्यमण्डले प्रत्यालीढस्थितां वैरोचनसनाथां नानावराहाकृष्यमाणरथां [6]रक्तकृष्णहरितपीतसितप्रथमादिपञ्चमुखीं ऊर्द्ध्वकृष्णवराहैकमुखीं दक्षिणे खड्गमुषलशराङ्कुशएकसूचिकवज्रपरशून् वामे सपाशतर्ज्जनीकपालअशोकपल्लवब्रह्मशिरश्चापत्रिशूलानि धारयन्तीं त्रिनेत्रां ललज्जिह्वां करालवदनामतिभयानकाकारां[7] चिन्तयेत्। रथमध्ये द्विभुजां तर्ज्जनीअशोकपल्लवहस्तां रथवाहिकां प्रत्यालीढासनां भीषणां चिन्तयेत्। स्फुरणादिकपूर्व्वकं स्तम्भयन् [8]मोहयन् घातयन् दुष्टसत्त्वान् ॐ वज्रधात्वीश्वरि सर्व्वदुष्टसत्त्वान् [9]हन हन दह दह पच पच ॐ मारीच्यै [10]हुँ फट् स्वाहेति मन्त्रं जपेत्।

॥ वज्रधात्वीश्वरीमारीची[11]साधनम् ॥

---

[1] B ह्रौं, Ab ह्रौः। [2] A पाठमन्तं।
[3] ANC ज्वलितपिङ्गो, B ज्वलितपिङ्गो। [4] Ab समय॰।
[5] Ab ॰म्बरां। [6] Ab रक्तहरितकृष्ण॰।
[7] B ॰कराकारां। [8] A मोहयेत्। B omits.
[9] ANC हर हर। [10] ANCAb हूँ हूँ।
[11] B रक्तमारीचीसाधनं, A ॰मारीच्याः साधनं, Ab मारीचीसाधनं।

137.

प्रथमं तावन्मन्त्री सुखासनोपविष्टो वामक्रोध[1]मुष्टिना हृदूर्णाकण्ठमूर्द्धसु[2] ॐ फट् इति मन्त्रेण संस्पृश्य दक्षिण-क्रोधमुष्टिमुत्थाप्य निर्विघ्नं चिन्तयेत्। ततो मुखशौचादिकं कृत्वा पुनरुपविश्य स्वहृदये रात्रिदिनभेदेन[3] अकारा-कारनिष्पन्नौ शशिसूर्य्यौ[4] दृष्ट्वा तदुपरि पीतं ॐकारं विभाव्य तद्रश्मिनिष्पन्नां भगवतीमग्रतो दृष्ट्वा यथालब्ध-पुष्पादिभिः सम्पूज्य तदग्रतः पापदेशनादिकं कृत्वा सकलं शून्यं विभावयेत्। तत ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्युच्चार्य्य तदाँकारपरिणतमष्टारचक्रं तन्मध्यस्थितमों[5]कारं परिणम्यात्मानं वैरोचनरूपं पीतवर्णं जटामुकुटधरं रक्ताम्बरं[6] शान्तं पद्मगर्भसिंहासने वज्र-पर्य्यङ्कस्थं सर्व्वाभरणभूषितं बोध्यङ्गी[7]बद्धमुद्रकं ध्यायात्। तस्य हृदये चन्द्रस्थमाँकारपरिणतं अशोकपुष्पं तदुपरि माँकारं तद्रश्मीन् निश्चार्य्य सकलसत्त्वार्थं कृत्वा तत्रैवा[8]नीय प्रवेशयेत्। ततोऽग्रत आकारपरिणतं सूर्य्यमण्डले माँका-रजां[9] भगवतीमष्टभुजां रश्मिमयीमुपदेशतो[10] ध्यायात्। तदनन्तरं ॐ मामिति मन्त्र[11]मुच्चारयन्नात्मानं चैत्यगर्भस्थां सप्तशूकररथारूढां मारीचीं विभावयेत्। रथस्याधस्तात् यँकारजवायुमण्डले हँकारनिर्म्मितो राहुः। तत्र भगवतीं

---

[1] A ०क्रोड़०  [2] Ab ०मूर्द्धसु।

[3] AB ०न्दिवस्य भेदेन, NC ०न्दिवभेदेन।  [4] A शशीरसूर्य्यं।

[5] Ab ०वात्मनात्मा०।  [6] NC ०म्बरधरं।

[7] A बाध्यो०, NC बोध्यग्री०।  [8] ANCAb तेनैवा०।

[9] Ab ०कारबीजं।  [10] A देशतौ, NC देशतो०।

[11] ANC ०मुच्चार्य्य चा०, Ab ०मुच्चारयेत्।

रत्नमुकुटां अष्टभुजां त्रिनेत्रां त्रिमुखां सुपीतां मूलमुखं पीतं बन्धूकजवाकुसुमसदृशाधरं दक्षिणं रक्तं वर्त्तुलं वामं वाराहं [1]सरोषं नीलं ललज्जिह्वं विकृत[2]वदनं भीषणं भृकुटीकरालं वामे तर्ज्जनिकापाशं धनुरशोकपल्लवं सूचं [3]च दक्षिणे सूच्यङ्कुशौ शरं वज्रं च नानावलयादिसर्व्वाभरणभूषितां विचित्ररक्तकञ्चुकोत्तरीयां प्रत्यालीढस्थां चतुर्द्देवती[4]परिवृतां चिन्तयेत्। पूर्व्वतो वर्त्ताली[5] [6]आलीढस्थितां चतुर्भुजां वराहैकमुखीं रक्तां दक्षिणे सूच्य[7]ङ्कुशधरां वामे पाशपल्लवौ[8], दक्षिणे वदाली प्रत्यालीढस्थितां चतुर्भुजां वराहैकमुखीं पीतवर्णां दक्षिणे सपुष्पाशोकपल्लवसहूच[9]सूचीधरां वामे पाशवज्रधराम्, पश्चिमे[10] वराली आलीढस्थां चतुर्भुजां [11]पीतवर्णां वराहैकमुखीं दक्षिणे वज्रसूचीधरां वामे पाशाशोकपल्लवधराम्, तथैवोत्तरे वराहमुखीं रक्तां उदितादित्यवर्णोज्ज्वलां प्रत्यालीढस्थितां चतुर्भुजां दक्षिणे शरवज्रधरां वामे चापाशोकपल्लवधराम्। सर्व्वा एताश्चैत्यकूटागारस्था नाना[12]लङ्काररत्नमुकुटरक्तकञ्चुकोत्तरीयास्त्रिनेत्रा[13] विचित्राभरणा ध्येयाः[14]। ततो जः हुँ वँ होः ज्ञानसत्त्वप्रवेश[15] मुद्रां बन्धयेत्।

---

[1] A सर्व्वं।
[2] A वृत०।
[3] B वामे।
[4] ANCB ०द्देवी०।
[5] Ab वेताली।
[6] C प्रत्यालीढ०, Ab ०लीढस्थां।
[7] A सूर्पा०।
[8] A ०यवौ।
[9] ANAb ०सूच।
[10] A omits पश्चिमे...पल्लवधरां।
[11] N omits.
[12] A नागारत्ना०।
[13] A ०त्तरीयास्त्रियाः।
[14] A श्वेताः।
[15] Ab ०प्रवेशः।

उभौ हस्तौ समौ कृत्वा अञ्जल्याकारमिश्रितौ[1]।
कुर्य्याद् विकसितावग्रा[2]वुभावङ्गुष्ठनामितौ॥
मध्यमा[3]ङ्गुलिसमाश्लिष्टौ कुण्डला[4]कारचिह्नितौ।
पर्य्यङ्केणोपविष्टेन[5] नाभिदेशे तदा[6] न्यसेत्॥

ततो भावनापूर्व्व[7]ङ्गमं मन्त्रं जपेत् ॐ[8] मारीच्यै स्वाहा। न्यूनाधिकं विधिं[9] शताक्षरमन्त्रेण पूरयेत् ॐ वज्रसत्त्वेत्यादि। विसर्ज्जनकाले तु ॐ मारी[10]च्यै मुरिति स्वमुद्रां मुञ्चेदिति[11]।

॥ अष्टभुजपीत[12]मारीचीसाधनम्॥

---

138.

ओडियानमारीचीसाधनं भवति। प्रथमं तावत् मन्त्री[13] स्वहृदि आकारपरिणतं सूर्य्यमण्डलं तस्योपरि प्रथमस्य त्रयोदशं बीजमर्द्धेन्दुबिन्दुभूषितं तथैव सर्व्वं पाप-देशनादिकं कृत्वा तेनैव निष्पन्नं माँकारं तत्सर्व्वपरिणतां मारीचीं रक्तवर्णां षण्मुखां द्वादशभुजां प्रथममुखं रक्तं द्वितीयं कृष्णं तृतीयं श्यामं चतुर्थं पीतं पञ्चमं सितं

---

[1] AC ०मण्डितौ।
[2] A ०सितागौड०।
[3] A अधमा०।
[4] A ०वर्त्तुला०।
[5] A ०विष्टा च।
[6] B तथा।
[7] A ०तमं, B ०ङ्गमो।
[8] This *Mantra* is omitted in Ab.
[9] N ०कर्म्मविधिं।
[10] A ०चि।
[11] N मुदिति।
[12] Ab संक्षिप्त०।
[13] ANC omit मन्त्री।

139.

पूर्वोक्तविधानेन पापदेशनानन्तरं शून्यतां विभाव्य निजहृदये रक्तमाँकारबीजपरिणतां ओड्डियानमारीचीं रक्तवर्णां पञ्चमुखीं द्वादशभुजां प्रतिमुखं त्रिनेत्रां रक्तकृष्ण-शुक्लहरितपीतदक्षिणावर्त्तपञ्चमुखां ऊर्द्धकृष्णशूकरमुखां प्रथमषड्दक्षिणभुजेषु यथाक्रमं खड्गचक्रमुषलशरपरशुएक-वृश्चिक[1]वज्राणि[2] वामभुजेषु तर्ज्जनीपाशखट्वाङ्गकपाल-अशोकपल्लवब्रह्मशिरश्चापत्रिशूलानि[3] चैत्यगर्भस्था[4]मष्ट-नागेन्द्रभूषणशरीरामूर्द्धपिङ्गलकेशां दंष्ट्राकरालवदनां शुष्क[5]पञ्चमुण्डमालामौलिकां विगल[6]न्मुण्डमालाप्रल-म्बितकन्धरां[7] अनेक[8]रत्नविरचित[9]रथाधोविचित्र[10]सप्त-शूकरारूढां[11] बहिरष्ट[12]श्मशानपरिवृतां रथमध्यस्थितां पर्य्यङ्कनिषण्णां वज्रवृश्चिकाशोकतर्ज्जनीधारिणीं(रीं) रक्त-वर्णमारीचीं पीतकञ्चुकां[13] नानारत्नाभरणां व्याघ्रचर्म्म-वसन[14]भूषितां रक्तप्रभां स्फुरत्पञ्चतथागतां झटिति ध्यात्वा तद्धृदयवृश्चिके माँबीजविनिःसृतरश्मिशतसमानीतैर्बुद्धबोधि-सत्वैरभिषेकं गृहीत्वा वैरोचनमुकुटिनीमात्मानं चिन्त-येत् । ततो निजबीजप्रसाधितयथालब्ध[15]समयद्रव्यसेवा-

---

[1] AC ०मा० ।  [2] B ०पमुखां ।
[3] N ०वृश्चिक० ; others read ०सूक० ।
[4] AC ०गर्भा० ।  [5] ABC सुक्त० ।
[6] A वङ्कल० ।  [7] AC ०कन्दरां ।
[8] A अकरे ।  [9] A रथो०, B रथाबोधि० ।
[10] N चित्र० ।  [11] ANA ०ररथाकढं ।
[12] AC ०रम० ।  [13] A पीतं कवं ।
[14] AC ०वितसनां ।  [15] A ०लघ, i.e., ०बौ० ।

पूर्व्वकं मन्त्री तद्बीजाच्च विनिर्गताक्षरसूत्रमालाकारेण हृदयान्निर्गत्य[1] नाभौ नाभेः[2] पुनः हृदय इत्यनेन[3] चक्र-भ्रमणयोगेन मन्त्रं जपेत् ॐ मारीच्यै माँ हुँ हुँ फट् फट् स्वाहा। उत्तरकाल[4]समाध्युप[5]संहारे [6]जप्त्वा तद्योगेनैव यथासुखं विहरेदिति।

॥ ओडियान[7]मारीचीसाधनम् ॥

---

140.

आदौ हृदि सूर्य्यासने हुँकारकिरणैरानीय भगवतीमनेकविधपूजाभिः सम्पूज्य पापदेशनादिकं कृत्वा शून्यताभावनानन्त[8]रं विश्ववज्राकारं चेतः[9] संचिन्त्य तत्परिणामेन वज्रभूमिं वज्रप्राकारादिकं ध्यात्वा तन्मध्ये श्रीओडियानपीठं[10] त्रिकोणमारक्तं तन्मध्ये सूर्य्यस्थपञ्चसूचिकवज्रं ॐकाराधिष्ठितवरटकं तत्परिणामेन बोधिचित्तरूपां महाप्रलयानलविस्फुलिङ्गदुर्द्धर्षामट्टाट्ट[11]हासां समाक्रान्तचतुर्मारां[12] प्रत्यालीढपदां द्वादशभुजां षण्मुखीं

---

[1] A ॰यनिर्ग॰।
[2] A omits.
[3] AC ॰दिनेन।
[4] A ॰कारं।
[5] AC समाधाय।
[6] A omits जप्त्वा......विहरे॰।
[7] Instead of ओडियान A reads रक्तवर्णद्वादशभुजा॰।
[8] A ॰तानन्त॰।
[9] A चित्तं चेतः।
[10] A ॰ओत्रयानं पीतं, B ॰ओड्डि॰।
[11] A ॰मत्ताट्टाट्ट॰, B ॰मट्टट्ट॰।
[12] ANC ॰मारां।

त्रिनेत्रां रक्तवर्णां प्रथमदक्षिणषड्भुजेषु [1]खड्गविश्व-
वज्रएक[2]सूचिकवज्रपरशुशरमुषलान् दधा[3]नां वाम-
भुजेषु मतर्ज्जनीपाशिका[4]त्रिशूलअशोकपल्लवचापपाश-
ब्रह्मशिरोधारिणीं नरशिरोमालाप्रलम्बित[5]सर्व्वाङ्गावयव-
शोभां व्याघ्रचर्म्मोत्तरीयवाससं मूलमुखं रक्तं सितकृष्णं
वाममुखद्वयं पीतकृष्णं दक्षिणमुखद्वयं कृष्णोर्द्ध्ववाराह[6]-
मुखं ललज्जिह्वामूर्द्ध्वज्वलितपिङ्गलकेशां वैरोचनमुकुटिनीं
भुजगाष्टा[7]भरणभूषितां निर्जकिरणैः सर्व्वतो मारविध्वं-
सिनीं दशदिक्प[8]लायमान[9]डाकिनीभूतवेताड[10]फेत्का[11]र-
हाहारव[12]भीषणपरिवेष्टितश्मशानाष्टकमण्डितां श्रीमदो-
ड्डि[13]यानमारीचीमात्मानं झटिति निष्पाद्य शिरःकण्ठ-
हृदयेषु ॐ आः हुँ मर्व्वाङ्गेषु फँकारं चिन्तयेत् । ततो
नाभेरुपरि विश्वकमले [14]चन्द्रसूर्य्यसम्पुटमध्ये हुँकारात्
मृणालतन्तु[15]स्वभावं विश्ववर्णमक्षरं चिन्तयेत् । ॐ वज्र-
सत्त्वेश्वरि[16] सर्व्वदुष्टान् [17]हन हन दह दह पच पच ॐ
मारीच्यै माँ हुँ हुँ [18]फट् स्वाहा हृदयमन्त्रः । ॐ आः हुँ
भावनामन्त्रः । ॐ वज्रवेतालि[19] हुँ फट् जापमन्त्रः । ॐ

---

[1] B reads ॰खट्वाङ्ग॰ ।
[2] N omits ॰सूचिक॰ ; other MSS read ॰सूक॰ ।
[3] B ॰लदधा॰ ।
[4] AB ॰सीपिका॰ ।
[5] AC ॰लालम्बित॰ ।
[6] B ॰वराह॰ ।
[7] A ॰जनस्था॰, NC ॰जगास्थ्रा॰ ।
[8] AC ॰दिग्वि प॰ ।
[9] A ॰लापमान॰ ।
[10] AC ॰ताल॰ ।
[11] AC हत्का॰ ।
[12] Ba ॰कार॰ ।
[13] AC ॰मन्लोभि॰, N ॰मन्नोभि॰ ।
[14] N omits चन्द्र॰ ।
[15] B ॰वर्णा॰ ।
[16] B ॰श्वरी ।
[17] A हर हर ।
[18] Ba फट् फट् ।
[19] A ॰वेतारि, B ॰वेताली ।

मारीचि ॐ माँ हुँ हुँ फट् द्वितीयजापमन्त्रः। तदनु चतुः[1]सन्ध्यासु बलिमन्त्रः ॐ [2]ञ्चलक्षि ह्रोः जः हुँ वँ ह्रोः ॐ वज्रडाकिनि समयस्त्वं दृश्यह्रोः ख ख खाहि खाहि सर्व्व-यक्षराक्षसभूतप्रेतपिशाचोन्मादा[3]पस्मारडाक[4]डाकिन्याद्य इमं[5] बलिं गृह्णथ पिबथ जिघ्रथ[6] मातिक्रमथ महासुख-विह[7]द्वये मम सहाय[8]का भवथ[9] हुँ हुँ फट् फट्[10] स्वाहा। भोजनादिकं च ह्रीःकारेण हुँकारादिना वा[11] संशोध्या-चरेदिति।

॥ [12]द्वादशभुजरक्तवर्णोड्डियानस्वाधिष्ठान-क्रम[13]मारीचीसाधनम् ॥

---

[1] A चन्द्र०।

[2] A ञ्चाचक्षिक्षि, B ०ञ्चारक्षि, N ञ्चारक्षि, C ञरक्षि। The *Mantra* given in Ba is here upheld.

[3] A ०च्युत्पादो।

[4] ०डाक० is found only in Ba.

[5] Ba इदं।

[6] जिघ्रथ found only in Ba.

[7] ANCBa प्रह०।

[8] A सर्व्वका।

[9] Ba भवन्तु।

[10] The second फट् is omitted in B.

[11] ANBa च।

[12] B omits द्वादशभुजरक्तवर्ण०।

[13] A ०कुङ्कुम०।

141.

स्वहृदि विश्वपद्मे चन्द्रोपरि पीतमाँकारं विन्यस्य तथैव सर्व्वं प्रतिभासमात्रमात्मानं चाकलय्य ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति पठेत् । ततस्तन्माँकारेण परिणतमशोकस्तवकं पुनर्म्माँकारं तत् सर्व्वं परिणमय्य भगवतीं पीतवर्णां द्विभुजां एकमुखां वैरोचनोपशोभितशिरोभागां[1] रत्नमुकुटिनीं देदीप्य[2]मानां कनकवर्णां शूकररूपां विश्वपद्मचन्द्रे लीलया स्थितां नवयौवनोद्गतां[3] ऊर्द्धस्थितां वामकरेणाशोकवृक्षशाखाविलग्नां दक्षिणेन वरदां हारादिविभूषिताङ्गां श्वेतवस्त्रनिव[4]सनां स्वहृदि माँकारादनेकशूकराकाररश्मिस्फुरणेन दुष्टान् निवार[5]यन्तीं विचिन्तयेत् । ॐ मारीच्यै स्वाहा । ततो यथावद् विसर्ज्य यथासुखं विहरेद् इति । देशान्तरगमने तु अनेन मन्त्रेणात्मीयोत्तरीयाञ्चलं गृहीत्वा सप्त वारान् परिजप्य सहायस्य[6] च वस्त्रान् गृहीत्वा यथावद् ग्रन्थिं कृत्वा गच्छेत् । चौरादिभिर्न मुष्य[7]ते । प्राप्ते अभिमते देशे ग्रन्थिं मोचयेदित्यु[8]पदेशः । यथावद् ग्रन्थिं कृत्वा सप्त वारानभिमन्त्रितमुत्तरीयाञ्चलं कृत्वा दिशो दश व्यवलोक्य दुष्टानां मुखचक्षुर्बन्धं करोमि इति विचिन्त्य श्वासं निवार्य्य अन्तर्ज्जल्पाकारेण मन्त्रमुच्चारयन् ग्रन्थिं बध्नीयादिति ।

॥ अशोककान्तामारीच्याः साधनं समाप्तम् ॥

---

[1] A ०भागोष्यां ।
[2] A देवय० ।
[3] AC ०द्गतवतां ।
[4] N ०विव० ।
[5] A विचार० ।
[6] A सदा मख्य ।
[7] A मुच्य० ।
[8] A चेत्यु० ।

142.

सम्यक् प्रणम्य मारीचीं वैरोचनकुलोद्भवाम् ।
कल्पोक्तविधिना तस्याः कथ्यते साधनक्रमः ॥

तत्र तावत् श्रीमारीच्युद[1]यमण्डलाभिषिक्तो मन्त्री स्व-स[2]मयसंवरपरिपालन[3]श्रुद्धचित्तः सकलसत्त्वाभ्युद्धरणाशय ॐ [4]फट् इत्युच्चारयन्[5] क्रोधमुष्टिं हृदूर्णामूर्द्धसु विन्यस्य मुखशौचादिकं कृत्वा देवगृहं प्रविश्य पटादिगतमूर्त्तिं भगवतीमवतार्य्य मारीचीविघ्नोत्सारणमन्त्रेण गन्धोदकं परिजप्यानेनैव पञ्चोप[6]हारादिकं प्रपूज्यम्। तत्रायं विघ्नोत्सारणमन्त्रः— ॐ मारीच्यै हुँ सर्व्वविघ्नानुत्सारय हुँ फट्। ततः [7]स्वहृदयाक्षरेण निशि[8] चन्द्रमण्डलं दिवा सूर्य्यमण्डलं आका[9]रेण ध्यात्वा तस्योपरि प्रथमत्रयोदशबीजं अर्द्धेन्दु-बिन्दुभूषितं तप्तचामीकराभम्। ततो विश्वरश्मीन् निश्चार्य्य तै रश्मिभिर्निष्पन्नां भगवतीं मूर्ध्नि गुरुबुद्धबोधिसत्त्वांश्च दृष्ट्वा पूजयित्वा अभिवन्द्य च अनेन मन्त्रेण, ॐ मारीच्यै पुष्पं प्रतीच्छ स्वाहा, ॐ मारीच्यै धूपं प्रतीच्छ स्वाहा, ॐ मारीच्यै स्वाहेत्यर्घं परिजप्य ॐ मारीच्यै अर्घं प्रतीच्छ स्वाहा, अभावे सति ध्यानेन वा। ततः—

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥

---

[1] A ०चीत्युद० ।
[2] AN स० ।
[3] A ०पारण० ।
[4] AC चृद्धि० ।
[5] A ०चारण० ।
[6] A ०पञ्चप्र० ।
[7] AN omit.
[8] A निमिषि ।
[9] AC ०मद्धाका० ।

आबोधेः शरणं यामि बुद्धं धर्म्मं गणोत्तमम्।
बोधौ चित्तं करोम्येष[1] स्वपरार्थप्रसिद्धये॥

उत्पादयामि[2] वर[3]बोधिचित्तं
निमन्त्रयामि बहु[4]सर्व्वसत्त्वान्।
इष्टां चरिष्ये[5] वरबोधिचारिकां
बुद्धो भवेयं जगतो हिताय॥

इति त्रिरुच्चार्य्य प्रणिधिपूर्व्वकं सर्व्वधर्म्मनैरात्म्यं भावयेद् अनेन मन्त्रेण। ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति पठित्वा—

बीजं मायोपमाकारं[6] [7]त्रैधातुं च[8] विशेषतः।
दृश्यते स्पृश्यते चैव यथा माया हि सर्व्वतः।
न चोपलभ्यते चैव सर्व्वस्य जगतः स्थितिः॥

इति पठित्वा[9] प्रतिभासमात्रमवगम्य[10] ततो अनादिकारणासत्कल्पनाबीजमपनीय स्वभावशुद्धोऽहमित्यधिमुच्येत्। स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति वारत्रयमुच्चार्य्य ततः पूर्व्वोक्तबीजनिष्पन्नं चन्द्रं तस्योपरि ॐ[11]कारं तत्सर्व्वं परिणम्य श्रीमद्वैरोचननाथं पद्मगर्भसिंहासनस्थं वज्रपर्य्यङ्कनिषण्णं सुवर्णचन्द्रे बोध्यग्री[12]-समाधिसमापन्नं जटामुकुटधरं शान्तं सर्व्वालङ्कारभूषितं ध्यायात्। ततः स्वहृदि चन्द्रमण्डलं तस्योपरि पञ्च-

---

[1] A चित्तान्तरोप॰। [2] AC add परमं after this.
[3] A omits वर॰। [4] AN बहं।
[5] MSS चरिष्यामि, which makes the metre faulty.
[6] A ॰माकारं। [7] AC read विचिन्त्य before त्रैधा॰।
[8] A तुकाच। [9] C omits. [10] A ॰समात्रमगम्य।
[11] AC ऊं॰। [12] AC बोध्यश्री॰, N बोध्ययी॰।

विंशतिकमक्षरं परमहृदयं प्रथमस्य द्वितीयेन समायुक्तं अर्द्धेन्दुबिन्दुभूषितं विभाव्य निष्पन्नमशोकस्तबकं तस्योपरि चन्द्रस्थमाँकारं ध्यात्वा तत्सर्व्वपरिणतमात्मानं मारीची-रूपेण भावयेत् अहमेव मारीची भगवती इति। सुपीतां जाम्बूनद[1]प्रभाकारां दीप्तदेहां चैत्यगर्भस्थां रक्ताम्बर-धरां रक्तकञ्चु[2]कोत्तरीयां नानावलयसर्व्वालङ्कारभूषितां कट[3]कुण्डलकटिसूत्रकिङ्किणीनूपुररवां[4] अष्टभुजां त्रिमुखां त्रिनेत्रां ज्वलत्स्फुरद्रश्मिमालिनीं बन्धूक[5]जवाकुसुमसदृशा-धरां वैरोचनकृतमूर्द्धजां अशोकमाला शिरसि भूषितां वामकरैरङ्कुशपाशाशोकचापधरां दक्षिणे स्फुरद्वज्रसूचिका-ङ्कुशशरोज्ज्वलन[6]प्रियां प्रथमं मुखं सौम्यं विकसिताननं सुपीतकनकावदातं[7] उत्फुल्ललोचनं[8] सिन्दूररेणु[9]रञ्जिता-धरं शृङ्गाररसविभ्रमं वाममुखं वाराहं सरोषविकृतं विकटोत्कटभीषणं इन्द्रनीलप्रभाकारं द्वादशार्क[10]समप्रभ-मुरु[11]भृकुटिकरालं ललज्जिह्वं भयस्यापि भयङ्करं दक्षिणमुखं सुरक्तं दिव्यज्वलद्भासुरमिव, हर्म्योत्थिता[12]अशोक[13]कुसुम-मालावकीर्णां तस्याः शिरसि वैरोचनं नाथं पूर्व्वोक्त-वर्ण[14]मुद्रोपेत[15]मधःस्तात् सप्तशूकररथगतां प्रत्यालीढस्थितां कुमारीं नवयौवनस्थाम्, रथवाहकशूकराणां अधस्तात्

---

[1] A ०नन्द०।

[2] AC ०पट्ट०।

[3] A कटक०।

[4] A ०रवां।

[5] AC जम्बुक०।

[6] A ०नाशन०।

[7] A ०दातं।

[8] A ०वदनां।

[9] AC सिन्दूरेणोज्ज्वलं०।

[10] AC ०प्राकार०।

[11] AC सुभ्रू०।

[12] A हर्म्योत्थिता०।

[13] A ०वर०।

[14] ०चक्र० in A.

[15] A ०द्योपम०।

यँभवं वायव्यमण्डले हँकारपरिणतं राहुग्रहं हस्ताभ्यां
[1] ग्रस्तं चन्द्रसूर्य्यौ दिवा दिनकरं निशिगतं चन्द्रमसं देवी-
चतुष्टयपरिवृतां ध्यायात्।

तत्र पूर्व्वेण ॐ मारीच्यै वर्त्तालि वदालि वरालि
वराहमुखि सिद्धिमाकर्षय[2] जः स्वाहेति एवं देवीं रक्तवर्णां
वराह[3]ैकमुखीं चतुर्भुजां रक्तकञ्चुकोत्तरीयां वामे पाशा-
शोकहस्तां दक्षिणे वज्राङ्कुशसूचिधरां सर्व्वाभरणभूषितां
कल्पोक्तविधिना अभिप्रेतसिद्धिमाकर्षयन्तीं ध्यायात्।

ॐ मारीच्यै वर्त्तालि वदालि वरालि वराहमुखि
सर्व्वदुष्टप्रदुष्टानां मुखं बन्ध बन्ध हुँ स्वाहा। वदालीं
देवीं पूर्व्वोक्तवस्त्राभरणतद्रूपां पीतवर्णां वामे पाशवज्रधरां
दक्षिणे पल्लवसूचीधरां दुष्टानां मुखचक्षुषी[4] सीवन्तीं
दक्षिणतो भावयेत्।

ॐ मारीच्यै वर्त्तालि वदालि वरालि वराहमुखि
सर्व्वदुष्टान्[5] स्तम्भय वँ[6] स्वाहेति वरालीं देवीं तद्वत्
वस्त्राभरणवर्णां तु[7] दक्षिणे वज्रसूचिहस्तां वामे पाशा-
शोकधरां सर्व्वदुष्टान् स्तम्भयन्तीं पश्चिमे न्यसेत्।

ॐ मारीच्यै वर्त्तालि वदालि वरालि वराहमुखि
सर्व्वसत्त्वान् मे[8] वशमानय होः स्वाहेति वराहमुखीं
देवीं रक्तवर्णां तथावस्त्राभरणां च सव्येन वज्रशर[9]-
धारिणीं वामे अशोकचापधरां सर्व्वसत्त्वानुसर्प[10]यन्तीं
उत्तरस्यां दिशि न्यसेत्।

---

[1] N सस्तं। [2] A ०षि। [3] A वराह०।
[4] A ०चक्षुपि। [5] A ०नां। [6] AN च।
[7] A वर्णादिषु। [8] A omits.
[9] A ०नसार०। [10] AC ०चनुसार०।

ततो वज्राङ्कुश्यादिभिर्मुद्राभिः तन्मन्त्रैश्चाकर्षणादिकं कुर्य्यात्। ज्ञानसत्त्वमाकृष्य प्रवेश्य बद्धा वशीकृत्य साधयेत्। तर्ज्जन्यङ्कुशबन्धेन कनिष्ठया महाङ्कुशी बाहुग्रन्थिकटाग्राभ्यां शृङ्खलापृष्ठयोश्च पीडनादिति। ॐ वज्राङ्कुशि जः इत्यनेन ज्ञानसत्त्वमाकृष्य पुरतो अर्घपाद्यादिकं दद्यात्। मारीचीमुद्रणम्। ततः ॐ वज्रपाश हुँ इत्यनेन प्रवेशयेत्, ॐ वज्रस्फोट वँ अनेन बन्धयेत्, ॐ वज्रावेश होः अनेन तोषयेत्। ततः समयदेवताभिः सदाऽद्वयं कुर्य्यात्। तत्रेयं मुद्रा—

उभौ हस्तौ समौ कृत्वा अञ्जल्याकारमिश्रितौ।
कुर्य्याद् विकसितावग्रावुभावङ्गुष्ठनामितौ॥
मध्यमाङ्गुलिसमाश्लिष्टौ कुण्डलाकारबन्धितौ।
पर्य्यङ्केनोपविष्टेन नाभिदेशे तदा न्यसेत्॥
एषा मुद्रा वरा श्रेष्ठा सर्व्वकर्म्मसु योजयेत्।
ततोऽभिषेकं गृह्णीयात् महामुद्रया अनया॥
अङ्गुष्ठसत्त्वपर्य्यङ्का कुञ्चिताग्राग्रविग्रहा।
सममध्यमोत्तमाङ्गा शेषा वज्राञ्जलिप्रभा॥

इति मूर्द्धि स्थाप्य ॐ भूः खँ माँ अभिषिञ्चेति मन्त्रेण वैरोचनः कनकाभो बोध्यङ्ग्यवस्थितः शिरसि ध्येयः। भावनाखिन्नो जपेन्मन्त्रम्। स्वहृदि चन्द्रस्थं मन्त्रं देदीप्यमानं ॐ मारीच्यै स्वाहेति दृष्ट्वा जपेत्। यथाशक्त्या

[1] A ०द्याद्या०। [2] A अद्धा०।
[3] A ०मांकार०, N ०मोंकार०, C ०माकार०। *See* Infra.
[4] ANC ०ग्राव०। [5] A जपवेत्।

भावनापूर्व्वङ्गम[1] सर्व्वां देवतीं [2]समुत्तेजयन्तीं पश्यन्[3] मन्त्रं जपेत्। पश्चान्न्यूनाधिकविधिः[4] [5]शताक्षरेण पूरयेत्। तत्रायं मन्त्रः— ॐ वज्रसत्त्व समयमनुपालय, वज्रसत्त्वत्वेनोपतिष्ठ, दृढो मे भव, सुतोष्यो मे भव, अनुरक्तो मे भव, सुपोष्यो मे भव, सर्व्वसिद्धिं मे प्रयच्छ[6], सर्व्वकर्म्मसु च[7] मे चित्तं श्रेयः कुरु, हुँ हहहहहोः भगवन् सर्व्वतथागतवज्र मा मे मुञ्च, वज्रीभव महासमयसत्त्व आः। विसर्ज्जनकाले तु सर्व्वमेतत् कुशलं परिणाम्य अभिप्रेतां सिद्धिमभियाच्य स्वमुद्रां शिरसि मुञ्चेत् ॐ मारीच्यै [8]मुरिति। स्वाधिदैवतयोगेन भोजनस्नानदानशयना[9]दिकं सर्व्वं प्रकल्पयेत्। इत्यनेन क्रमेण कायवाक्चित्तरक्षां कृत्वा यथासुखं विहरेदिति।

मारीच्याः साधनं कृत्वा यच्छुभं समुपार्ज्जितम्।
प्राप्नुवन्तु पदं सत्त्वा[10] मारीचीज्ञाननिर्म्मलम्॥

ॐ ख ख खाहि खाहि गृह्ण गृह्ण गृह्णन्तु सार्व्वभौतिका[11] बलिं मम शान्तिं कुर्व्वन्तु स्वाहेति बलिमन्त्रः।

॥ कल्पोक्तमारीचीसाधनं समाप्तम्।

। कृतिरियं पण्डिताचार्य्यगर्भपादानाम्॥

---

[1] A ०गमनं। [2] Only in N. [3] A पश्या०।
[4] A ०विधे। [5] AC ०नता०।
[6] AC add मा संशयं कुरु after प्रयच्छ, which is obviously redundant as the letters of the *Mantra* go beyond hundred in that case.
[7] ANC omit. [8] A मुदि०।
[9] A ०नानुदानाशना०। [10] A सत्वा। [11] N ०तिकाः।

## 143.

नमो मारीच्यै।

प्रथमं सूर्य्यमण्डलं तस्योपरि प्रथमत्रयोदशं बीजमर्द्धेन्दुबिन्दुशोभितं तन्निष्पन्नां मारीचीं रक्तवर्णां षण्मुखां प्रथमं रक्तं द्वितीयं कृष्णं तृतीयं श्यामं चतुर्थं पीतं पञ्चमं सितं षष्ठमूर्द्धं वराहमुखं कृष्णं अशोकचैत्यालङ्कृतां लम्बोदरीं कपालमालाशोभितां ऊर्द्ध्वकेशां व्याडैर्विभूषितां व्याघ्रचर्म्मनिवसनां विघ्नघातिनीं नानावर्णशूकररथारूढां सव्ये खड्गवज्रमूषलशरएकसूचिकवज्रपरशून्[1] धारयन्तीं वामे तर्ज्जनिकापाशं अशोकपल्लवब्रह्मशिरश्चापं[2] त्रिशूलं च[3] इत्थं[4] द्वादशभुजां त्रिनेत्रां रक्तवर्णवर्त्तुलां मुखोच्च[5]ललत्कारां रथमध्ये द्विभुजां तर्ज्जनिकापल्लवगृहीतां पुरतो द्वितीयां भावयेत्। अहमेव मारीची भगवतीति ततो मुद्रां बन्धयेत्।

वज्राञ्जलिं[6] समाधाय मध्यमेऽथ[7] निकुञ्चनात्[8]।
अङ्गुष्ठद्वयपर्य्यङ्कुकुञ्चिताग्राग्रविग्रहात्॥

ॐ मारीच्यै मां हुँ हुँ फट् स्वाहा।

॥ मारीचीसाधनं समाप्तम्॥

---

[1] AC •पल्लवं, N •परशून्।
[2] AC •श्चापं।
[3] A omits.
[4] AC इत्यं।
[5] A मुखाच, N मुखाच्च•।
[6] AC •लीन्।
[7] AN •मार्थं, C •मोऽथ।
[8] All the three MSS, A, N and C read समाकुर्व which gives no meaning. This emendation is proposed on the strength of other similar stanzas.

## 144.

[1]आसने [2]कल्पमानोत्थे सर्व्वोपद्रव[3]शान्तये ।
मारीचीं भावयेत् [4]प्राज्ञः सर्व्वज्ञा[5]कारप्राप्तये ॥
[6]सर्व्वकच्छ्वसम्बुद्धमध्यवर्त्तिगुरोः पुनः ।
मांहृच्चन्द्रात् समापूज्य[7] विधिवद्देश[8]नादिकम् ॥
प्रतिदिशाम्यघं सर्व्वमनुमोदे जगच्छुभम् ।
त्रिरत्नशरणं यामि सम्बोधौ विदधे मनः ॥
द्वयासद्भावतः[9] शून्यं निर्निमित्तमहेतुतः ।
अतो हेतोः प्रणिहितं त्रिविमोक्षं जगत् स्वयम् ॥
धर्म्मधातुस्थिते चैत्ये धातुहृद् बु[10]द्धवर्त्मनि ।
स्फुरद्बोधखव्यापिचतुरस्रादिसंयुते ॥
बहिरन्तश्चतुष्कोणे त्रिशूकाङ्केन्दुमण्डले ।
दुष्टसत्त्वतलाक्रान्तगिरिराजप्रतिष्ठिते ॥
भावयेत् तत्र मांतत्त्व[11]मशोकस्तवकोद्भवाम् ।
शृङ्गारवीरस[12]द्वर्षे[13]जाम्बूनदसमप्रभाम् ॥
मध्येन्द्र[14]नीलवर्णा[15]स्यां भयबीभत्सरौद्रकैः ।
करुणाद्भुतशान्तैश्च स्फटिकेन्दितराननाम्[16] ॥

---

[1] A आसन० ।
[2] AC संक० ।
[3] AC ०न्नाघ्राय ।
[4] AC प्रज्ञा ।
[5] ACN सर्वज्ञता० ।
[6] AC स्तुत्वादिकञ्चार्य० ।
[7] AC ०युक्त ।
[8] A ०वगदेवा० ।
[9] AC ०सम्भवात ।
[10] AC ०हृद्ध० ।
[11] A omits ०तत्त्व० ।
[12] AC ०विजस० ।
[13] AC ०संदेह० ।
[14] AC मध्यनी० ।
[15] AC वर्णा०, N वर्ण्णा० ।
[16] A ०न्दितरै नरां ।

त्रिविमोक्षमुखैस्त्र्यक्षां धर्मसम्भोगनिर्मिताम् ।
पीता(क्ष)भरणसद्वस्त्रां मयूख[2]सुखवासिनीम् ॥
सूच्याक्षा[3]स्यानि सीवन्तीं बध्नन्तीं मुखचक्षुषी ।
हृल्ले[4]ऽङ्कुशपाशाभ्यां विन्धन्तीं बाणकार्मुकैः ॥
वज्रेण दुष्टहृद् भित्त्वाऽशोकेनासेचनापराम् ।
विमोक्षाष्टाष्टभिस्तान् दुष्टान् नष्टान् प्रभावयेत् ॥
पादविकाशसंकोचादात्महृष्टिं च तद्गतिम् ।
प्रज्ञोपायपदा[5]क्रान्तां मारीचीं [6]भावयेद् व्रती ॥
सर्व्वदिक्त्र्यध्वभा[7]वात्मस्फुरत्संहारकारकान् ।
जः हुँ वँ होः ब्रुवंस्तस्मिन् [8]सर्व्वबुद्धान् प्रवेशयेत् ॥
बुद्धाङ्गोद्भवविद्याभिर्ष्टतकुम्भा[9]मृताम्बुधिः ।
रत्नमुकुटपट्टाङ्गां पश्येत् शाश्वतमेकधाम् ॥
सर्व्वपूजा[10]करव्यग्रधूपपुष्पादिवज्रिभिः ।
पूजां स्तुतिं च कुर्य्याद् वै तेन पश्येदिमां ततः ॥
स्तम्भयन् कायवाक्चित्तमामन्त्र्य पि[?]नां जपेत् ।
सर्व्वदुष्टप्रदुष्टानां चतुर्थ्यान्तं[11] सशङ्कया ॥
चतुः[12]सन्ध्यं त्रिसन्ध्यं[13] वा प्रातर्वाऽष्टशतं जपेत् ।
भावयंस्तां महाविद्यां महार्थं तु सहस्रकम् ॥

---

[1] AC ०स्त्राद्याभा ।
[2] N मख० ।
[3] A सुख्याच्छा० ।
[4] A हृत्कने अ० ।
[5] A ०वदा० ।
[6] AC विभा० ।
[7] AC ०स्त्रार्थभा० ।
[8] N omits.
[9] AC ०कुट्टुम्भा० ।
[10] AC ०पूजन० ।
[11] A र्थेऽन्तं ।
[12] AC चतुर्मध्ये ।
[13] A omits.

जप्त्वा पूजास्तुतिं कृत्वा विनाम्य शुभमर्थतः।
निवेश्यात्मनि सम्बुद्धान् गतसङ्गो विसर्जयेत्॥

विसर्जनमधिष्ठानं सामान्यं त्र्यक्षरं स्मृतम्।
प्रतिष्ठासमये तत्त्वे कायवाक्चित्तसाधने॥

सन्ध्यान्तरेऽपि पूजादिपुरःसरमितो जपेत्।
प्राग्विधिना पुनः प्रातर्देवीसङ्गीतिचोदितः॥

इमां विद्यां तथा चान्यां[2] भावयेत् स समाजपन्।
तन्त्राम्नायेन सन्मन्त्री रुचितः साधयेद् भृशम्॥

[3]पिचुवालेशसंलेखाद् यत् पुण्यं समुपार्ज्जितम्।
तेन[4] लोकोऽस्तु सर्व्वाशः स्यामहं मञ्जुराट् स्वयम्॥

॥ श्रीमारीचीपिचुवा[5]साधनं समाप्तम्॥

145.

नत्वा च मारीचीं देवीं सर्व्वदुष्टप्रमर्द्दनीम्।
तस्याः साधनं वक्ष्येऽहं सर्व्वकर्म्मप्रसाधकम्॥

सत्त्वपर्य्यङ्कमासीनां हृदीन्दावों[6]कारभूषिताम्।
रक्तवर्णां[7] ज्वलद्दिव्यां[8] विश्वरश्मिसमाकुलाम्॥

---

[1] AC ०श्यान्योनि। [2] A प्राख्यां।
[3] A विद्युवारेसरेखा०, N पिचुवालेशालेखा०, C पिचुवारेशं लेखा०।
[4] AN अनेन। [5] A ०पिस्त्वा०।
[6] A ०दौन्द् ॐ०। [7] N ०वर्णो। [8] AC ०द्दीजं।

तैर्निष्पादिताः संबुद्धाः बोधिसत्त्वा महर्द्धिकाः[1]।
वन्दित्वा सम्पूज्याभिमन्त्य नैवे[2]द्यादि [3]निवेदयेत्॥

अनेन मन्त्रेण— वज्रपुष्पे वज्रधूपे [4]वज्रदीपे वज्रगन्धे[5] वज्रनैवेद्ये ॐ हुँ इति सर्व्वत्र। ततो रत्नत्रयं मे शरणं बोधिचित्तोत्पादनं च। प्रणिधिपूर्व्वकं सर्व्वधर्म्मनैरात्म्यं भावयेद् अनेन ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततः स्थिरचल[6]सर्व्वभावस्वभावान् विचिन्त्य[7] बीजं च तदनु ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहम्। तद्बीज-निष्पन्नचक्रं तस्य वरटके भानुमण्डलं तस्योपरि पद्मस्य पञ्चमबीजं आकारइन्दुबिन्दु[8]शोभितं तत्सर्व्वं निष्पन्ने सति मारीचीरूपेणात्मानं विचिन्तयेत् रक्तवर्णां वक्त्र[9]द्विगुण-भुजां ललितव्याघ्रचर्म्मनिवसनां ऊर्द्ध्वबद्धजटां[10] [11]रत्न-मुकुटिनीं त्रिमुखीं उभयवराहाननां प्रथममुखं सौम्यं प्रहसिताननं सशृङ्गाररसविभ्रमं सर्व्वत्र त्रिनेत्रां वामं रक्तं वाराहं वज्रमुद्गरगृहीतनमस्कृतं दक्षिणमुखं वाराहं सैन्धवच्छायं वज्र[12]पाशगृहीतपुरन्दरवन्दितां चैत्यगर्भकृष्ण-क्रोडालीढेन स्थितां अधो हरिहरब्रह्मादयो महिता वसुलोकपालाः सर्व्वे भीतास्त्रस्ता भट्टारिकावन्द[13]नामाज्ञां च कुर्व्वन्तः स्थिताः, आकर्णपूरितधन्वी[14] अशोककलिका-

---

[1] A गुणबुद्धबोधि०।
[2] AN निवे०।
[3] AC न निवे०।
[4] A omits.
[5] A वज्राधे।
[6] A ०वर।
[7] A चिरित्व।
[8] AC omit ०बिन्दु०।
[9] A रक्तवर्णावक्त्रां।
[10] A ऊर्द्ध्वबद्धजटां, N ऊर्द्ध्वजटां।
[11] N रत्न०।
[12] AC चक्र०।
[13] A चन्द०, N मन्द०।
[14] A ०धन्वी।

निभेन अरेण साध्यं हृदि [1]विन्ध्यन्तीं विचिन्तयेत्; रक्तकञ्चुकोत्तरीयां सर्व्वालङ्कारभूषितां अशोकबद्धमकुटां वामकरेणाशोकपुष्प[2]वसुपुष्पधृतां हृदि तर्ज्जनीस्थितां वज्रपाशमहाकपालहृचशिरोभद्रघटगृहीतहस्तां दक्षिणे हृचिअङ्कुशभिण्डिपालखङ्गकर्चिवज्रदण्डकुलिशहस्तां नृपावर्त्तक(?)वर्णाम्। श्रीमद्वैरोचनं वज्रपर्य्यङ्क[3]बोध्यङ्गी[4]समापन्नं जटामुकुटधरं शान्तं ज्ञानोन्मीलित[5]चक्षुषं शिरसि विचिन्त्य सर्व्वकर्म्म समारभेत। यथोपदेशतः[6] ज्ञानसत्त्वमाकृष्य प्रवेश्य बद्ध्वा [7]वशीकृत्य साधयेत्। [8]अभिषेकं कवचपट्टबन्धपूजास्तुतिं च कृत्वा पश्चात् जापं समारभेत। यथाहि गेहे ज्वलति [9]प्रदीपो अकम्प[10]मानानिलप्रयुक्तः तथाहि धर्म्मो ज्वलते[11] शरीरे एकाग्रचित्तस्य जपे रतस्य। ततो मुद्रां बन्धयेत्।

अङ्गुष्ठसत्त्वपर्य्यङ्का कुञ्चिताग्राग्रविग्रहा।
समसमध्यमोत्तमाङ्गा शेषा वज्राञ्जलिप्रभा॥

हृदूर्णाकण्ठमूर्द्धि अवस्थाप्यानेन ॐ मारीच्यै हुँ[12] सर्व्वदुष्टान् मर्दय हुँ फट्। अष्टमस्य तृतीयचतुर्थयोस्तृतीयं [13]सप्तचतुर्थेन पूरितं, [तौ] प्रथमद्वितीयेन भूषितौ, शुक्लं इन्द्राननं प्रदोषे मध्यमया शान्तिमन्त्रं प्रकाशितम्। ॐ

---

[1] A विश्ववन्तीं। [2] N ०पल्लव०।
[3] ०बोध्यश्री०, N ०बोध्यग्री०।
[4] A adds समाधि before समा०।
[5] A ज्ञानात्स्फालित०, N ज्ञानात्माशोभित०।
[6] AC ०देशं। [7] A वसी०।
[8] C omits अभिषेकं……रतस्य। [9] A प्रदायो।
[10] AC कम्प०। [11] N ज्वलन्तं। [12] A omits.
[13] N सम्पूरयेत् तथैनं।

मारीच्यै[1] देवदत्तस्य शान्तिं कुरु स्वाहा। प्रथमस्य त्रयोदशं बीजमर्द्धेन्दुबिन्दु[2]शोभितं प्रत्यूषे मध्यमया पीतं कौबेराननं पौष्टिके मन्त्रमुदाहृतम्। ॐ मारीच्यै देवदत्तस्य [3]पुष्टिं कुरु ॐ। अष्टमस्य चतुर्थं च प्रथमस्य त्रयोदशं षोडशेन समायुक्तं अर्द्धरात्रौ वाऽन्यत् रक्ताऽनामि(का)कया वश्य-वर्णप्रभेदितम्। ॐ मारीच्यै देवदत्तस्य वशमानय होः। हपरं षष्ठेन संयुक्त[4]मर्द्धेन्दुबिन्दुशोभितं [5]मध्यसाध्यप्रवेशितं षष्ठस्य तृतीयकं चतुर्थ्याद्यर्थिनं कृष्णायाम्यास्यो मध्याह्ने अभिचारं[6] तज्ज्ञन्या एष मन्त्रः प्रचोदितः। ॐ मारीच्यै देवदत्तं मारय हुँ फट्। तृतीयात्तृतीयकं बीजं षोडशेन [7]समायुक्तं सर्व्वाकर्षणमुत्तमम्। ॐ मारीच्यै अमुकस्य सिद्धिमाकर्षय जः। मारीच्या मण्डलाभिषिक्तो गुरुभक्तोऽथ सत्यवाक् सिध्यति। [8]तस्य देवताजप्तविद्यस्य न संशयः। कोटिजापेन मन्त्रः स्यात्। पटस्याग्रतः [9]सुजप्तेन सिध्यन्ति सर्व्वकर्म्माणि मनोऽभिरुचितं यद्भवेत्।

मारीच्युद्भवतन्त्रस्य लिखितं साधनं वरम्।
अनेन कुशलमूलेन सत्त्वा भवन्तु सौगताः॥

॥ मारीच्याः साधनम् ॥

---

[1] A °चि।
[2] A omits °बिन्दु°।
[3] A omits पुष्टिं कुरु......देवदत्तस्य।
[4] A °मन्बिन्दु°।
[5] A मध्यप्रवे°।
[6] N चरारं।
[7] N omits.
[8] A omits.
[9] A सजन्तपान, N प्रधान।

146.

संक्षिप्तमारीचीसाधनं विधीयते। स्वहृदि चन्द्रे माँकारं ध्यात्वा तद्रश्मिभिर्निष्पन्नान् गुरुबुद्धबोधिसत्त्वान् अग्रतो दृष्ट्वा वन्दित्वा संपूज्य पापदेशनादिकं कुर्य्यात्। ततः सर्व्वधर्म्ममात्मानं च मायोपमाकारेण प्रतिभासमात्रं बीजं विचिन्त्य स्वभावशुद्धिं पठेत्। ततः शून्यताधिमोक्षं कुर्य्यात्। ततस्तद्बीजपरिणतं अशोकस्तवकं तदुपरि चन्द्रस्थमाँकारं एतत् सर्व्वं परिणम्यात्मानं मारीचीरूपं पश्येत्। तत[1] पीतवर्णां त्रिमुखां[2] त्रिनेत्रां अष्टभुजां रक्ताम्बरधरां रक्तकञ्चुकोत्तरीयां सर्व्वालङ्कारभूषितां वैरोचनकृतमूर्द्धजां स्फुरद्रश्मिमालाकुलां बन्धूकजवा[3]-कुसुमसदृशाधरां वामकरे तर्ज्जनीपाशचापाशोकपल्लव-सूत्रधरां दक्षिणे वज्रशरअङ्कुशसूचीधरां चैत्यगर्भस्थितां सप्तशूकररथगतां प्रत्यालीढपदां कुमारीं यौवनस्थितां [4]उत्फुल्ललोचनाम्[5]। तदस्या मूलमुखं सौम्यं सशृङ्गारं वामं कृष्णं सरोषं वाराहं भृकुटिकरालभयानकं ललज्जिह्वं दक्षिणमुखं सुरक्तं चटुलं[6] पद्मरागसन्निभं हर्म्यस्थिता-शोकतरुकुसुमावकीर्णां अधस्ताद् वायुमण्डलं हँभवराहुं चन्द्रसूर्य्यौ ग्रसमा[7]नं चतुर्द्देवीपरिवृतां भगवतीं ध्यायात्।

तत्र पूर्व्वेण वर्त्तालीं देवीं रक्तवर्णां चतुर्भुजां वाम-कराभ्यां पाशाशोकौ दक्षिणाभ्यां वज्राङ्कुशसूचिधरां

---

[1] N पीतां।
[2] AC omit.
[3] A जम्बुकबीज०।
[4] AC ०फुल्लेन्दीवराननी।
[5] N adds स्थितां।
[6] चतुरं in all MSS.
[7] A ग्रस्ता०।

दक्षिणतो वदालीं देवीं [1]पीतवर्णां चतुर्भुजां [2]वामकराभ्यां पाशवज्रौ दक्षिणे अङ्कुशैकसूचिधरां पश्चिमतो वरालीं देवीं तद्वद्रूपधरां वामकराभ्यां पाशाशोकौ दक्षिणाभ्यां वज्रसूचिधरां उत्तरे वराहमुखीं देवीं रक्तवर्णां चतुर्भुजां वामकराभ्यां अशोकचापौ दक्षिणाभ्यां शरवज्रधरां ध्यायात्। सर्व्वाश्चैता रत्नमकुटा वराहैकमुखाः चिनेत्रा विचित्राभरणा रक्तकञ्चुकोत्तरीया ध्यायात्। ततो वज्राङ्कुश्यादिमुद्राभिस्तन्मन्त्रैर्ज्ञानसत्त्वस्याकर्षणादिकं कुर्य्यात् जः हुँ वँ होः इत्यनेन। ज्ञानसत्त्वमाकृष्य प्रवेश्य बद्धा वशीकृत्य तोषयेत्। ततो मारीचीमुद्रयाऽद्वयं कुर्य्यात्। भावनापूर्व्वकं जापं कुर्य्यात् ॐ मारीच्यै स्वाहा। सर्व्वकुशलं परिणम्य विसर्ज्जयेत् ॐ मारीच्यै मुरिति।

॥ संक्षिप्तमारीचीसाधनं समाप्तम् ॥

---

[1] Ab omits पीत०।

[2] AN वामाभ्यां।

[3] A adds तारां after this.

[4] AC ०भ्यामङ्कुशा०।

## 147.

[1]नमो मारीच्यै ।

सत्त्वपर्य्यङ्कस्थितो धीमान् आलम्बितमहात्मपः ।
[2]प्रातः सायं च हृच्चन्द्रे सितैंकारेण भावयेत् ॥
वैरोचनाख्यमात्मानं तत्करैः सर्व्वतः सितम् ।
प्राकारं चतुरं[3] चैत्यभूषितो[4]र्द्धं ज्वलत्प्रभम् ॥
रक्षार्थं पुरतः पश्चात् सव्ये वामेऽथ [5]मूर्द्धनि ।
क्रमान्माचादि [6]दारादि मातुलादि सुतादि च ॥
प्रतिमापट[7]कल्पेन मिश्रपुष्पादिसम्भवात् ।
ततो हृच्चन्द्र[8]माँपीत[9]माराशोकच्छटो[10]ज्ज्वला ॥
चिन्तयेदार्य्यमारीचीं स्वचीरूचधराकृपाम् ।
उत्थानाभिनयां सव्ये नासारन्ध्रेण तां पुनः ॥
संस्थाप्य स्यूतनेचास्यदुष्टान् प्राकारतो बहिः ।
कुर्व्वाणामसकृन्नद्धबोध्यङ्गीधारणीं पठेत् ॥
तत ॐ[11]आदि[12] मारीच्यै स्वाहा मन्त्रो यथाबलम् ।
जप्योऽथमन्त्रविद् वाम[13]नासारन्ध्रेण तां हृदि ॥

---

[1] Ba omits from the beginning up to कुर्व्वाणां सीमबन्धनं ।
[2] Instead of this line A has सायं चन्द्र सितोऽच्चारेण भावयेत् ।
[3] N ०लं ।
[4] AC ०भूतो० ।
[5] AC मूर्द्धि ।
[6] N ०दास्यादि० ।
[7] N ०कल्पा ।
[8] A ०गांपित० ।
[9] मार्स ।
[10] A ०च्छतोभ० ।
[11] AC omit.
[12] A माटि ।
[13] A विद्वाबु० ।

प्रवेश्याशोककान्ता स्याद् रश्मिजैः पीतशूकरैः ।
बहिः सम्पिष्ट्य[1] तद्दुष्टैः कुर्व्वाणां सीमबन्धनम् ॥
हेमाभशूकरारूढां तप्तकाञ्चनभास्वराम् ।
लीलयोर्द्ध्वस्थितां चन्द्रबिम्बाम्भोरुहसंश्रयाम् ॥
अशोकवृक्षशाखाग्रविलग्नां वामपाणिना ।
बिभ्रतीं[2] वरदाकारदक्षिणकरपल्लवाम् ॥
दीप्तरत्नो[3]पशोभेन मौलिना बुद्धशेखराम् ।
श्वेतवस्त्रां[4] नमस्यामि मारीचीमभयप्रदाम् ॥

॥ आर्य्यमारीचीधारणीपाठो[5]पदेशः[6] ॥

---

## 148.

पर्णशवर्य्यै नमः ।

[7]पर्णशवरीसाधनमुच्यते। पूर्व्ववत् सर्व्वं विधाय स्वहृदि सितपद्मचन्द्रमण्डले पीतपँकारजं वज्रं[8] तद्वरटके पँकारं तत्सर्व्वपरिणतां भगवतीं पीतवर्णां त्रिमुखां त्रिनेत्रां षड्भुजां प्रथममुखं पीतं[9] दक्षिणं सितं वामं रक्तं ललित-

---

[1] A सापीष्ट० ।
[2] A चिभ्रति ।
[3] ANC दीप्तानलो० ।
[4] A ०नस्त्रां, Ba ०वर्णां ।
[5] A ०यथो०, Nb ०पीठो० ।
[6] After this *Sādhana* the first part of MS N comes to an end on the reverse side of folia 146, and the end is marked with the usual Buddhist formula नमो धर्म्माय, नमो बुद्धाय, नमो सङ्घाय ।
[7] पर्णशवरीसाधनमुच्यते is found only in Ab.
[8] ANC omits.
[9] Ab कनकवर्णं ।

हासिनीं सर्व्वालङ्कार[1]धरां पर्ण[2]पिच्छिकावसनां नवयौवनोद्धतां[3] पीनां [4]खर्व्वलम्बोदरीं ललज्जिह्वां दक्षिणभुजैः वज्रपरशुशर[5]धारिणीं वामभुजैः सतर्ज्जनिकापाशपर्ण[6]पिच्छिकाधनुर्धारिणीं पुष्पावबद्धजटामुकुटस्थाक्षोभ्यधारिणीं [7]सूर्य्यप्रभामण्डलिनीं अधो[8] विघ्नान् निपात्य सितपद्मचन्द्रासने प्रत्यालीढस्थां [9]हृद्वाममुष्टितर्ज्जन्याधो विघ्नगणान् सन्तर्ज्य दक्षिणवज्रमुष्टिप्रहाराभि[10]नयाम्। अथ[11] तथैव चतुर्भुजां वामभुजयोः सतर्ज्जनिका[12]पाशपर्णपिच्छिके दक्षिणभुजयोर्वज्रपरशुधारिणीमतिभयदां[13] भावयेत्। ततो मन्त्रं जपेत् ॐ पिशाचि पर्णशवरि सर्व्व[14]मारिप्रशमनि[15] स्वाहा। ततो यथावद् विसर्ज्य यथासुखं विहरेदिति।

॥ पर्णशवरीसाधनम् ॥

---

[1] Ab ०शोभं।
[2] ANCAbBa पल्लव०।
[3] A ०नाच्छतां, Ab ०नोदयां।
[4] खर्व्वलम्बोदरीं ललज्जिह्वां found only in Ab.
[5] Ab omits ०शर०।
[6] AC ०पल्लव०।
[7] A omits.
[8] Ab omits.
[9] B वाम०।
[10] Ab adds after this ०नयेन सन्धार्य्य अनया मुद्रया हृद्यादिकमाश्रयेन मुद्रां स्वाभाविकज्ञानसत्त्वप्रवेशादिकं निष्पाद्य पञ्चूनामयुतमेकेनाभिमन्त्र्य सर्व्वोपद्रवनाशं मन्त्री चिन्तयेत्।
[11] ANCBa omit.
[12] A omits पाश०।
[13] A ०मतीवपरां।
[14] Ab ०मार०।
[15] A ०प्रशमनि।

## 149.

पूर्व्वोक्तविधानेन [1]शून्यताभावनानन्तरं विश्वकमले चन्द्रस्थहरितपँकारजं पर्णशवरीं हरितां त्रिमुखां त्रिनेत्रां षड्भुजां कृष्णशुक्लदक्षिणवामाननां वज्रपरशुशरदक्षिणकरत्रयां कार्म्मुकपत्रच्छटासपाशतर्ज्जनीवामकरत्रयां सक्रोधहसिताननां नवयौवनवतीं सपत्रमालाव्याघ्रचर्म्मनिवसनामीषल्लम्बो[2]दरीं ऊर्द्ध[3]संयतकेशीं अधोऽशेष-[4]रोगमारीपदाक्रान्ताममोघसिद्धिमुकुटीमात्मानं झटिति निष्पाद्य मन्त्रं जपेत् ॐ पिशाचि पर्णशवरि सर्व्वमारि[5]प्रशमनि हुँ फट् स्वाहा ।

॥ पर्णशवरीसाधनम् ॥

---

## 150.

नमो रत्नत्रयाय, नमोऽमिताभाय तथागतायार्हते[6] सम्यक्संबुद्धाय, नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय, नमो महास्थाम[7]प्राप्ताय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय ।

वामने त्वां नमस्यामि वामने त्वां भगवति ।
पिशाचि पर्णशवरि[8] पाशपरशुधारिणि ॥

---

[1] AC omit शून्यता० ।
[2] B ०दरीं ।
[3] ANC ०सङ्कट० ।
[4] AC ०सोमरोग० ।
[5] AC omit सर्व्वमारि० ।
[6] AC ०र्हन्ते ।
[7] AC ०स्थान० ।
[8] ANCB add पिशाचि after this.

यानि कानिचित् भयान्युत्पद्यन्ते याः काश्चित् मार्य्यो याः काश्चित् [1]महामार्य्यो याः [2]काश्चिदीतयो ये केचिदुपद्रवा ये केचिदपाया ये केचिदाध्यात्मिका भया ये केचिदुपसर्गा उपसर्गसम्बद्धा[3] वा [4]उत्पद्यन्ते सर्व्वाणि तानि सर्व्वास्ताः सर्व्वे ते[5] बालत एवोत्पद्यन्ते न पण्डिततः[6]। तदनेन सत्येन [7]सत्यवचनेन सत्यवाक्येन ज्ञः ज्ञः ज्ञः ज्ञः[8] एभिः[9] पण्डिताधिष्ठितैर्म्मन्त्रपदैर्म्मम सर्व्वसत्त्वानां च रक्षां कुरु, परित्राणं[10] कुरु, परिग्रहं कुरु, परिपालनं कुरु, शान्तिं कुरु, स्वस्त्य[11]यनं कुरु, दण्डपरिहारं कुरु, [12]शस्त्रपरिहारं कुरु, यावद् विषदूषणं[13] कुरु, अग्निपरिहारं कुरु, [14]उदकपरिहारं कुरु, काखोद्दै[15]च्छेदनं कुरु, सीमाबन्धं कुरु, धरणीबन्धं कुरु। तद्यथा, अमृते अमृते अमृतोद्भवे अमृतसम्भवे आश्वस्ते आश्वस्ताङ्गे मा मर मा मर मा सर मा सर शम प्रशम उपशम सर्व्वव्याधीनुपशम सर्व्वाकालमृत्यूनुपशम सर्व्वनक्षत्रग्रहदोषानुपशम सर्व्वदंष्ट्रिनां[16] चोपशम भगवति पर्णशवरि तुन्न[17] तुन्न वितुन्न वितुन्न[18] तुण तुण तुमुले[19]

---

[1] AC मार्य्यायाः।
[2] N काश्चित् महामार्य्योः।
[3] A ०म्बद्धा।
[4] Ba उपपद्यन्ते।
[5] AC भवैते।
[6] ANCBa पण्डितः।
[7] AC omit.
[8] The 4th. ज्ञः is omitted in A.
[9] ANCBa एहि।
[10] AC ०त्राणं।
[11] ANC शान्तिस्वस्त्य०।
[12] AC omit शस्त्रपरिहारं कुरु।
[13] N ०विषदूषणं।
[14] AC omit उदकपरिहारं कुरु।
[15] A काखादा०, NC कार्खोद०; the meaning is not found in dictionaries. The word may be emended as कपादि०।
[16] Ba ०दुष्टानां।
[17] A तुन, N तुनु।
[18] One वितुन्न is dropped in all other MSS except B.
[19] Ba तुमच।

स्वाहा। ॐ गौरि गान्धारि चण्डालि मातङ्गि पुक्वसि स्वाहा। ॐ अङ्कुरे मङ्कुरे [1]कुरुकुरे पर्णशवरि स्वाहा। ॐ नमः सर्व्वशवराणां[2] महाशवराणां भगवति पिशाचि पर्णशवरि [3]पिशाचि [4]पर्णशवरि पिशाचि पाशपरशु-धारिणि यानि कानिचिद् भयानि(यौ) स्वाहा। ॐ पिशाचि पर्णशवरि ह्रीः [5]हः हुँ फट् पिशाचि स्वाहा।

॥ आर्य्यपर्णशवरी[6]ताराधारणी[7] समाप्ता ॥

---

151.

ॐ नम आर्य्यप्रज्ञापारमितायै।

अथातः सम्प्रवक्ष्यामि प्रज्ञापारमितोदयम्।
[8]यस्यां [9]भावितमाचायां[10] [11]निग्रहः सर्व्ववादिनाम्॥
द्विभुजामेकवदनां सितवर्णां मनोरमाम्।
अर्द्ध[12]चर्वरकेशां च श्वेताम्भोरुहसं[13]स्थिताम्॥
पद्मं दक्षिणहस्ते तु रक्तवर्णं विभावयेत्।
प्रज्ञापारमितां वामे वज्रपर्य्यङ्कसंस्थिताम्॥

---

[1] B कुररे। [2] A ०सराणां। [3] AC omit.
[4] पर्णशवरि......ह्यौ(?) is omitted in all MSS except B.
[5] AC ज। [6] NC omit तारा। [7] B धारिणी०।
[8] Ab यया। [9] ACBAb भाषित०।
[10] Ab ०मात्रया। [11] Ab सर्व्वपरप्रवादिविजयो भवेत्।
[12] A ०चन्दन०। [13] Ab ०म्बुजसं०।

सर्व्वालङ्कार[1]सम्पूर्णां भावयेन्नाभिमण्डले ।
अँकारज्ञान[2]सम्भूतां परमानन्दकारिणीम् ॥

[3]समयसत्त्वं निष्पाद्य ज्ञानसत्त्वस्य भावना ।
षण्मासाभ्यासयोगेन प्रज्ञापारमिता भवेत्[4] ॥

सप्तरात्रप्रयोगेण सर्व्वशास्त्र[5]विशारदः ।
लक्षजापप्रयोगेण शतश्लोकं[6] दिने दिने ।
करोति चाप्रयत्नेन शतग्रन्थं च धारयेत् ॥

तत्र मन्त्रपदानि भवन्ति— ॐ पिचु पिचु प्रज्ञावर्द्धनि ज्वल ज्वल मेधावर्द्धनि धिरि धिरि[7] बुद्धिवर्द्धनि स्वाहा । [8]अनेन मन्त्रेण सप्ताभिमन्त्रितं कृत्वा [9]अयाचितमारनालं षण्मासं [10]यावत् पिबेत् । महाप्राज्ञो भवति । ॐ प्रँ स्वाहा अयं[11] मन्त्रः । अक्षोभ्यमुद्रिता चेयम् ।

॥ इति शुक्लप्रज्ञा[12]पारमितासाधनम् ॥

---

1 ०भूषिताङ्गीं ।
2 Ab ०निष्पन्नां ।
3 AN समयं सर्व्वसत्त्वं विनिष्पाद्य, C सर्व्वसत्त्वं etc., B समयसत्त्वं विनिष्पाद्य ।
4 C भावयेत् ।
5 ANC ०मन्त्र० ।
6 AC श्लोका, N श्लोको, B श्लोकान् ।
7 A रिद्धिरि, N द्धिरि, C रिद्धि ।
8 Ab adds अकाकहदिते before अनेन ; this appears to be redundant
9 Ba स्वपा० ।
10 Ab यः पिबति प्राज्ञो ।
11 B अयञ्च ।
12 B इति प्रज्ञा० Ab प्रज्ञा० ।

152.

पूर्व्वोक्तविधानेनाकारजचन्द्रे पीतधीःकारजविश्वपद्मे पीतह[1]कारमकारादिषोडशस्वरपरिवेष्टितं बहिः ककारादिद्वात्रिंशद्वर्णै[2] परिवृतं भावयेत्। [3]ततः श्रीलास्या माल्या नृत्या गीता पुष्पा धूपा दीपा गन्धा इत्यष्टौ [4]योगिनीः। एतत्सकलपरिणामेन ज्ञानचन्द्र उदेति प्रभाभास्वरः तदुपरि पद्मं तदुपरि प्रज्ञापारमितापुस्तकं तदुपरि द्वितीयं चन्द्रमण्डलं तदुपरि द्वितीयपुस्तकम्। सर्व्वमेतत् परिणम्य भगवती प्रज्ञापारमिता पीतवर्णा द्विभुजैकमुखी पञ्चतथागतमकुटी व्याख्यानमुद्रा[5]वती विश्वदलपद्मे चन्द्रासनासीना सर्व्वालङ्कारवस्त्रवती वामदक्षिणपार्श्वे उत्पलस्थप्रज्ञापारमितापुस्तक[6]धारिणी। मन्त्रः— [7]ॐ आः[8] धीः हुँ स्वाहा। पीतॐकारो ललाटे, शुक्ल[9]आःकारः कण्ठे, पीतधीःकारो हृदि, कृष्णहुँकारो नाभाविति जापकाले चत्वार्य्यक्षराणि अनुचिन्तयेत्।

॥ इति कनकवर्ण[10] प्रज्ञापारमितासाधनं समाप्तम् ॥

---

[1] ACBa ह्रेः०, N ह्रः० ।
[2] AC ०ग्रद्वर्थ० ; *sic.* ought to be ०द्वाक्षर० ।
[3] A ततस्तोऽश्री०. NBBa drop श्री० ।
[4] A योगिनिः, B योमिनीः ; *sic.* ought to be योगिन्यः ।
[5] A भवति ।
[6] B ०धारणीमन्त्रः ।
[7] B adds ऊँ after ॐ ।
[8] ANCAb आः ।
[9] ANCAb आः ।
[10] Ba पीत०, C पीतवर्णवर्ण० ।

153.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं रक्तपद्मे चन्द्रस्थपीतधीःकारपरिणतां प्रज्ञापारमितां पीतां[1] अक्षोभ्याक्रान्तःस्थजटामुकुटिनीं व्याख्यानमुद्राधरां पुस्तकसहितनीलोत्पलं वामपार्श्वे धारिणीं[2] पट्टांशुकोत्तरीयां दिव्यवस्त्रालङ्कारिणीमित्येवं ध्यात्वा ॐ धीः श्रुतिस्मृतिविजये स्वाहा इति मन्त्रं जपेत् ।

॥ पीतवर्णसंक्षिप्त[3]प्रज्ञापारमितासाधनं समाप्तम् ॥

---

154.

[4]प्रज्ञापारमितायै नमः ।

प्रज्ञापारमिताया योगं तदुच्यते । पूर्व्वोक्तविधानेन स्वहृदि सितारविन्देन्दुमण्डले सितप्रँ[5]कारं विन्यस्य तथैव पूर्व्ववत् सर्व्वं विधाय [6]पँकारपद्मपरिणतां भगवतीं द्विभुजां एकमुखां शुक्लां[7] आगमाधिगमरूपां रत्नमकुटधारिणीं प्रज्ञापारमितापुस्तकाङ्कितकमलद्वयां वाम-

---

[1] A omits. [2] B ०धारणीं ।

[3] A ०संक्षेप०, B संक्षिप्त० ।

[4] From the *Namaskāra* to तदुच्यते is found only in Ab.

[5] A ०प्र०, N ०प्रा०, C ०पँ०, Ab ०पं० ।

[6] A यं०, Ab प्रं०, B प्रँ० ।

[7] रत्नमुकुटधारिणीं after शुक्लां is wrongly added in Ab.

[8] Ab ०गमात्मकां, A ०गमस्वरूपां, C ०गमस्वरूपां ।

दक्षिणपार्श्वयो[1]रन्तरस्थितं सन्धार्य्य कराभ्यां व्याख्यानमुद्रामाबद्ध्य सितपद्मचन्द्रे वज्रपर्य्यङ्किनीं नवयौवनोद्धतां विचित्रवस्त्रालङ्कारभूषितां प्रतिभासमात्रां प्रस्फुरन्नानारश्मिसमूहैर्गगनमापूरयन्तीं[2] प्रदीपमालामिवाप्रतिघां[3] अनेकप्रज्ञापारमितास्फुरणसंहरणयोगेन सर्व्वमेकस्वभावाधि[4]मोक्षेण च तावद् भावयेत् यावत् प्रज्ञापारमितां साक्षान्न कुर्य्यात्। तत औद्धत्यं[5] यदा भवेत् तदा सितपद्मं नासाग्रे चणकप्रमाणमालिखितमिव विभाव्य तत्रस्थां प्रज्ञापारमितां अतिसूक्ष्मा[6]मुक्तरूपां एकाग्रमनाः [7]पुनः पुन[8]राकलयन् भावयेत्। [9]तत्र उत्पत्तिपक्षे मन्त्रः ॐ प्रँ स्वाहा, [10]निष्पन्नपक्षे मन्त्रोऽस्तीति परमार्थक्रमः प्रज्ञापार[11]मितायोगोपदेशल्लब्धः।

सङ्घदत्तस्य पुत्रेण[12] कुलनाम्ना च यत्नतः[13]।
लिखितं साधनं [14]स्पष्टं सर्व्वसत्त्वार्थहेतुतः॥

॥ इति [15]सितप्रज्ञापारमितासाधनं समाप्तम्॥

---

[1] AC ०रन्तरस्थित०। [2] Ab ०पूर्य्यन्तीं।
[3] AC ०भां। [4] AC ०मोक्षणाचेतोवद्धा०।
[5] AC उद्धत्यं। [6] AN ०सूक्ष्मां मुक्त०।
[7] Ab omits. [8] Ab ०रवलोकयन्।
[9] B तत उ०, NC ततो उ०, A तदु०।
[10] A निष्पन्नत्ता०, C निष्पन्नम०, B निष्पन्नपक्षेण।
[11] Ab ०मितोपदेश०। [12] A मूत्रेण।
[13] A कुलनामाभयन्ततः। [14] AC पुस्तकं।
[15] B omits सित०।

60.

पूर्व्ववत् पापदेशनादिकं कृत्वा शून्यताभावनानन्तरं [1]हँकारजं हँकाराक्रान्तवरटकमध्ये शरेण युक्तं चापं ध्यात्वा तत्परिणतं वज्रानङ्गनामार्य्यमञ्जुघोषं पीतवर्णं षड्भुजं मूलभुजाभ्यां आकर्णपूरितरक्तोत्पलकर्णिकाशरयुक्त-कुसुमधनुर्द्धरं दक्षिणद्वयेन खड्गदर्पणभृतं वामयुगले-नेन्दीवररक्ताशोकपुष्प[2]पल्लवधरं अक्षोभ्याधिष्ठितजटा-मकुटिनं प्रत्यालीढपदं षोडशवर्षाकारं महाशृङ्गारमूर्त्तिं पश्येत्। अथवा चतुर्भुजं दर्पणाशोकपल्लवधरं द्विभुजरहितं ध्यायात्। ततो ज्ञानसत्त्वेनैकीकृत्य ॐ मञ्जुघोष ह्रीः जः इति मन्त्रं जपेत्। त्रिभुवनमपि लक्षेण किङ्करीकरोति। अथवा [3]कश्चित् आकृष्टकामः तदा अनन्तरोक्तभावनां कृत्वा तदहङ्कारगर्वितमनाः स्वहृदि रक्तषोडशदलकमल-मानाभिलम्बितनालसहितं स[4]कन्दमवलम्ब्य तन्नालमूले च [5]रक्तहुंकारं दृष्ट्वा [6]तद्दलेषु प्रदक्षिणतो र[illegible]षोडश-स्व[7]रान् विभाव्य तत्किञ्जल्कोपरि निशिदिवा यथा[8]क्रम-भवं सूर्य्यचन्द्रमसोर्मण्डलं रक्तवर्णं तन्मध्ये च रक्तह्रीःकार-द्वयविदर्भितं वक्ष्यमाणस्वमन्त्रं पश्येत्। ततस्तान् स्वरान् रक्तभ्रमरानतिहृष्टपु[9]ष्टान् विभाव्य स्व[10]मन्त्रारुणकिरण-सञ्चयैर्दशदिशमापूर्य्य यावदभीष्टायाः स्त्रियः स्थानं गत्वा

---

[1] A omits.
[2] Ab ०पर्णा० ।
[3] ANC काश्चित् ।
[4] A ०कन्द्र०, Ab ०कन्ध० ।
[5] AC ०रक्तानन० ।
[6] A तद्व्यषु ।
[7] Ab ०रान्वितं ।
[8] ANC ०सम्भवं ।
[9] A ०ष्टानवं ।
[10] ANC ०मन्त्रप्रर० ।

तां वायुमण्डलमध्ये आरोप्य रश्मिमयेनैव पाशेन [1]सुबद्ध-कण्ठामङ्कुशेन दृढविद्धधर्म्मोदयां पुरतः समानीय कृता-ञ्जलिपुटामालातचक्रमध्यवर्त्तिरक्तहुँकारपूरितनेत्रहृदय-सर्व्वावयवां विभावयेत्। ततस्तस्या अपि हृदये रक्तषोडश-स्वरसहितं सहुँकार[2]नालं षोडशदलकमलमालोक्य किन्तु [3]म्लानवर्णं तन्मध्ये ह्रीःकारविदर्भितं नामाक्षरं ध्यायात्। ततः स्वमन्त्राक्षरकिरणप्रभवः सुरक्तनिशित-सूक्ष्माङ्कुशः पद्मनालस्थहुँकाररश्मिभिः ऊर्द्ध्वगतैः प्रेरित-मधुकरनिकरैरनुगम्यमानः स्वनासिकादक्षिणतरविवराद् विनिर्गत्य साध्यासव्यनासिका[4]द्वारेण तद्धृदयं प्रविश्य सोऽ-ङ्कुशः तन्नामाक्षरमाक[5]र्षणस्थितः। ते च मधुपास्तत्पद्मं सरभसमालूनविशीर्णं कृत्वा [6]स्वमन्त्रतया स्वराना[7]चूषय-न्तीति सुचिरं निश्चलं पश्येत्। ततस्तथैव तच्छ्वासप्रेरिता-ङ्कुशस्तन्नाम हठादादाय ते च मधुकराः [8]स्वकीयं स्वरं [9]आहृत्य तन्नासिकावामविवर[10]पथेन निःसृतान् वीक्षेत। पुनरानीय श्वासवायुना समाकृष्टानङ्कुशभ्रमरान् स्वनासिका[11]दक्षिणद्वारेण प्रवेश्य तन्नामाक्षरं स्वहृदि मन्त्रेण गाढमाक्रम्य तांश्च स्वरान् प्रतिदलभ्रमरबलवशी-कृतान् विचिन्तयेदित्यनेन क्रमेण स्वविज्ञानं तद्विज्ञाने-नैकी[12]कृत्य पश्येत्। ततस्तत्पयोधरं निशितरक्तोत्पल-

---

[1] ACAb सुव॰ । [2] Ab ॰नादं ।
[3] C स्तान॰, Ab मलान॰ । [4] ABNC ॰विवरेण ।
[5] ANC ॰र्षयन् । [6] A सुतत॰, NC स्वतन्त्रत॰ ।
[7] AC ॰दूष॰, B ॰भूष॰ । [8] A स्ववीर्य्य॰ ।
[9] ANC omit. [10] Ab ॰याम्नि॰ ।
[11] B ॰दक्षिणं प्र॰ । [12] BAb ॰कृतं ।

कलिकाशरेण विद्धा महारागमूर्च्छापतितां च तां विलोक्य शृङ्खलयेव कार्मुकेन तच्चरणयुगलं गाढमाबद्ध्य स्वगृहीतोत्पल[1]नालमयेन पाशेन गले बद्ध्वा समाकृष्य स्वपादयो[2]र्निपात्याशोकेन हृदयं सन्ताड्य निरभिमानिनीं कृत्वा खड्गेन भीषयित्वा अनन्तशरणां कृत्वा पुनर्दर्पणेनात्मी[3]यसंस्थां मुक्तकेशां विवस्त्रां अतिरागविह्वलां विरहकातरतरामतिभक्तां दर्शयित्वा स्वसंवेद्यमात्मानुरागं कारयेत्। ॐ अमुकीमाकर्षय मञ्जुघोष ह्रीः जः इति स्वमन्त्रं नामसहितमेकाग्र[4]मना जपेत्। एवमनन्तरोक्तक्रमेण शुक्लप्रतिपदमारभ्य यावच्चतुर्दशीमयुतमात्रं जपेत्। पुनः पौर्णमास्यां महतीं पूजां विधाय सकलां रात्रिं जपेत्। ततः प्रभाते सा नियतमागच्छति। आगतां च तां महामुद्रादिसिद्[5]ध्यर्थी स्वदेवतापूजाशयेन यथासुखमुपभुञ्जीत।

॥ वज्रानङ्ग[6]मञ्जुश्रीसाधनं समाप्तम् ॥

---

[1] A omits; Ab ०नाली० ।
[2] ANC ०र्निर्य० ।
[3] ANC ०यावस्थां ।
[4] Ab ०मानसं ।
[5] ABNC ०द्वयं ।
[6] BAb omits ०मञ्जुश्री० ।

61.

तथैव शून्यतादिभावनानन्तरं विश्वपद्मोपरि चन्द्रे सित-आःकारजं श्रीधर्म्मधातुवागीश्वरं सर्व्वाङ्गशुक्लं[1] चतुर्मुखमष्टभुजं पञ्चबुद्धमुकुटिनं दिव्याभरण[2]वस्त्रशृङ्गारादिरसान्वितं धर्म्मचक्रमुद्राङ्कहस्तद्वयं कृपाणबाणकुलिशदक्षिणहस्तत्रिकं प्रज्ञापारमितापुस्तक[3]चापवज्रघण्टावामकरत्रिकं वज्रपर्य्यङ्किनमात्मानं निष्पाद्य [4]स्वहृच्चन्द्रे नीलहुँजात[5]सबीजवज्रं महामुद्रास्वभावं, ऊर्णायां पीतत्राँकारेण सबीजरत्नं [6]धर्म्ममुद्रास्वभावं, कण्ठे रक्तह्रीःकारजसबीजपद्मं समयमुद्रास्वभावं, मूर्द्ध्नि हरित[7]अःकारजसबीजविश्ववज्रं कर्म्ममुद्रास्वभावं, इत्थं चतुर्म्मुद्रान्वितमात्मानं विभाव्य ॐ हुँ ह्रीः भगवन् ज्ञानमूर्त्ति वागीश्वर महावाच सर्व्वधर्म्म गगनामलसुपरिशुद्ध धर्म्मधातुज्ञानगर्भ आः इति मन्त्रेणाधितिष्ठेत्। ततो [8]वज्रबन्धमध्यमाद्वयं तृतीयपर्व्वभग्नं खड्गाकारेण धारयित्वा तर्ज्जनीद्वयमुत्थिता[9]ङ्गुष्ठोपरि कुञ्चयित्वा धारयेदिति समयमुद्रा। ततः स्वजिह्वाचन्द्रस्थरक्तह्रीःकारबीजाधिष्ठितां ध्यात्वा क्रोधवाचा मन्त्रं जपेत्। तत्रायं जपमन्त्रः ॐ वज्रतीक्ष्णदुःखच्छेदप्रज्ञाज्ञानमूर्त्तये ज्ञानकाय वागीश्वर अरपचनाय ते नमः। अष्टशतनामधेयां च नामसङ्गीतिं यथाकालं पठेदिति।

॥ धर्म्मधातुवागीश्वरसाधनम् ॥

---

[1] N ॰रत्न॰। [2] AN ॰णाद्य भूट॰। [3] A ॰राप॰, N ॰चाप॰।
[4] ANC हृच॰। [5] A ऊँकारत बीजं वज्रं, N ऊँकारजातसबीजवज्रं।
[6] A धर्म्मचक्र॰। [7] Ab अका॰।
[8] AN वज्रबन्धे, C मध्यमध्य॰। [9] A मुष्पिता॰, C मुष्विता।

62.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं पद्मचन्द्रस्थ-रक्तह्रीःकारपरिणतमष्टभुजं चतुर्म्मुखं मूलमुखं[1] रक्तगौरं दक्षिणं कुङ्कुमारुणं पश्चिमं पद्मरक्तं उत्तरं पीतरक्तं द्वाभ्यां हस्ताभ्यां धनुर्व्वाणधरं अपराभ्यां पाशाङ्कुशधरं पुनरपराभ्यां प्रज्ञापारमितापुस्तकखड्गधरं तथापराभ्यां घण्टावज्रधरं महारागशृङ्गाररसोज्ज्वलं ललितासनस्थं विश्वपद्मचन्द्रे दिव्यवस्त्राभरणममिताभजटामुकुटिनं ह्रीःकार-रश्मिनाऽऽनीतसत्त्वान् स्ववशेऽवस्थाप्य मन्त्रं जपेत् ॐ महारागवज्र रागय सर्व्वसत्त्वान् ह्रीः ।

॥ इति धर्म्मधातुवागीश्वरसाधनवश्यविधिः ॥

---

63.

नमो मञ्जुनाथाय ।

शून्यताभावना पूर्व्वकं चन्द्रमण्डलोपरि ह्रीःकारेण निष्पन्नमात्मानं महारागरूपं रक्तगौरं शृङ्गाररसोज्ज्वलं ललितासनस्थं चतुर्म्मुखमष्टभुजं प्रथममुखं रक्तगौरं दक्षिणं कुङ्कुमरक्तं पश्चिमं पद्मरक्तं उत्तरं पीतरक्तं द्वाभ्यां भुजाभ्यां धनुर्व्वाणधरं अपराभ्यां पाशाङ्कुशधरं तथा अपराभ्यां प्रज्ञापारमितापुस्तकखड्गधरं तथा अप-राभ्यां घण्टावज्रधरं तथा विभाव्य मकुटकिरीट-

[1] मूलमुखं is found only in C. [2] N ०नन्तपू० ।

विनिर्गतरश्मिभिरूर्द्धगतानवभास्य महारक्तान् प्रणत-विग्रहान् पश्येत्। यथा पूर्व्वदक्षिणपश्चिमोत्तरकेऽधो-[1]दिक्ष्ववस्थितान् प्रथमद्वितीयतृतीयचतुर्थपादरश्मि[2]भि-रापूर्य्यानुरज्यानीय स्ववशे स्थापितान् मनसा चिन्तय-नन्तरान्तरं मन्त्रं जपेत् ॐ महारागवज्र रागय सर्व्व-सत्वान् होः। ततो नियतं सर्व्वसत्त्वा वशीभवन्ति[3]।

॥ इति निश्चितमतिभावनीया महारागरूपरूपोत्तमा मञ्जुवज्रसर्व्वसत्त्ववशीकरणसमाधिः ॥

---

64.

तथैव शून्यताभावनानन्तरं वारुणमण्डले सिताष्टदल-पद्मवरटके मरणापगताः सर्व्वधर्म्मा इत्यधिमोक्षतः चन्द्रस्थसितअँकारपरिणामेन द्विभुजैकमुखं सितं वज्र-पर्य्यङ्कोपरि समाधिमुद्राहस्तमशेषकुमाराभरणभूषितं पञ्चचीरकं मञ्जुश्रीभट्टारकरूपमात्मानं झटिति निष्पाद्य स्वहृच्चन्द्रपद्मोपरि खँकारजं गँ खँ तन्मध्ये वज्रजिह्व रँ इति वज्र[4]जिह्वां, जिह्वोपरि रक्तपद्मं तदुपरि बुद्धममिताभं विचिन्त्य स्वतालुदेशे अधोमुखं स्रवत्सुधं सितवँकारं ध्यायात्। ॐ वाक्येदं नमः इति जपमन्त्रः।

॥ महानुशंसमिदं धर्म्मशङ्खसमाधिसूचक-धर्म्मधातुवागीश्वरसाधनम् ॥

---

[1] A ०दिगव्यव०।

[2] C omits भिरापूर्य्य......चिरच्चारयेत् in the *Sādhana* for Arapacana which follows.

[3] N वश्याभवन्ति।

[4] A ०जिह्वोपरि।

65.

प्रथमतः क्वचिद् विजने मनोहारिणि शुचौ भूप्रदेशे मृदुमसूरकाद्युपविष्टः चिद्दुःखदुःखितमनन्तं सत्त्वधातुमवलोक्य मयैते सत्त्वा मञ्जुघोष[1]पदवीमासाद्य तत्पद एव निर्व्विशेषाः प्रतिष्ठापनीया इति करुणया समुपस्थापिता अनुत्तरचित्तैर्विशेषचतुष्किकाचतुष्कोपशोभितचन्द्ररत्नघटितगन्धकुटीतले विततविचित्रवितानविलम्बमानगन्धपुट[2]परिमलभावितान्तराले भ्रमद्गन्धलुब्धमधुकरश्रेणीपक्षविक्षिप्तपुष्प[3]प्रकररत्ननिर्म्मितविविधसिंहासनस्थायिनो गुरुबुद्धबोधिसत्त्वानवलम्ब्य चेतसा पञ्चोपचारया नृत्यगीतवाद्यादिस्वरूपया च पूजया सम्पूज्य मम दारिद्र्यस्य न किञ्चिदन्यदस्तीति च शरीरं निर्य्यात्य, बुद्धं शरणं गच्छामि इत्यादि वचसा रत्नत्रितयशरणं उपेत्य पापं देशयित्वा पुनरकरणसंवरं विधाय पुण्यं चानुमोद्य झटिति सकलं शून्यमालोकयेत्। ततो नियतमेवैतदर्थं पश्यन् शनैः स्वभावशुद्धमन्त्रं चिरुच्चारयेत्। तदनन्तरं च तथैव शून्यतावाचक[4]मन्त्रमपि वारत्रयं आवर्त्तयेत्। ततो झटिति चित्तौ[5]कीमालोकमयीमालोकयेत्। तदनु स्वहृदि परमाक्षर[6]परिणते पीयूषगभस्तिबिम्बे शुचिरोचिषा धीःकारेण निर्वर्त्तितं निशितधारं कृपाणमवधारयेत्। तन्मुष्टिस्थिते च प्राचीनवर्णनिष्पादिते श्वेतभानौ खड्गबीजं

[1] A ०पददेवी।
[2] A ०कुट०।
[3] A प्रकरणानि०।
[4] AC ०मन्त्रपरिवार०
[5] A ०कीकमपि आलो०, NC ०कीकमपि मालो०।
[6] A ०परिणमते।

[illegible] । आत्मना सह पञ्चवर्णपरिणत्या च वामकर-कलितपुस्तकं तदितरहस्तविन्यस्तप्रज्ञाखड्गं पञ्च रत्नाकृतमकुटं आकुञ्चितपञ्चचीरं बन्धूककान्तिवसनयुगलं यथायथमुचितस्थाननिवेशितरुचिरशृङ्गाराभरणं स्मित-स्फुरत्कपोलस्थलं शरदभ्रवृन्दमिवैकत्र कृतावस्थानमन्ध-कारचकितमिव पुञ्जीकृतमालोकयेत्। ततः स्वहृदि सर्व्व-वर्णग्रामणीपरिणतमष्टारचक्रं भ्रमदङ्गुरीमात्रेण स्पृशन् तदुद्भूतमिन्दुबिम्बं तत्र च तज्जनितमणिलतां तन्मुष्टौ च तथाभूतमेव सञ्चयं स्वदेहे रोचिःप्रवाहेन प्लावयन्तमिव निरन्तरं दिगन्तराणि निर्य्यद्विषज्ज्योतिषि विश्वदलकमलोपरि स्थितमकलङ्कशशाङ्कमण्डले रचित-निविडवज्रपर्य्यङ्कस्थितं मञ्जुश्रियमात्मानमवलोकयेत् । तत्र च तदेव महाप्राणमक्षरमीक्षेत। खड्गादिपरिणामेन च प्रागुक्तवर्णचिह्नादिसमन्वितं मञ्जुघोषं भावयेत्। तदग्र-पृष्ठयोश्च स्वस्वबीजजनितनिश्शानुमोदोत्पादितेन्दु-बिम्बात्मनीननिदानैः सूर्य्यप्रभचन्द्रप्रभौ नायकाकृती चिन्तयेत्। अनेनैव विधिना विचित्रपरिधानोत्तरीये चिरत्नमुकुटिन्यौ स्वानुरूपाभरणभूषिते केशिन्युपकेशिन्यौ सव्यावसव्यवर्त्तिन्यौ ध्यायात्। पञ्चानामष्टारचक्रदेव-तानां तथाविधस्वहृदयकुमुदिनीप्राणनाथे स्वस्वबीजं नीहारकरगौरजटिलं पश्येत्। ततो नायकमनोऽन्तःस्थ-

[1] N ०रत्नकृत० ।
[2] A ०दमुचौ० ।
[3] A ततो अष्टौ ।
[4] A ०दज्ज्योभि ।
[5] A ०दलोपरि० ।
[6] AC repeat ततः स्वहृदि......तथाभूतमेव after this.
[7] A ०ष्मानुत्पादि०, C ०ष्मानुत्पादोत् ।
[8] AN ०स्व० ।

बीजकिरणनालिकां कुटिलकोटिं शिरसा निर्गत्य सकल-
त्रैधातुकमवभासयन्तीमासनकमलदले धारयित्वा समय-
सत्त्वाभिन्नस्वरूपं ज्ञानसत्त्वमानयन्तीं विभावयेत्। तेन
चाग्रतोऽवस्थितेन मनसा विहितविविधपूजनेन हुँ वँ अः
होरित्युच्चारयन्नैक्य[1]मालम्बेत। तदनन्तरं झटिति स्थिर-
दक्षिणावर्त्तत्वरितमष्टारचक्रं भ्रमत् चन्द्रमण्डलस्थिताश्च
पञ्चार्य्यदेवताश्चला निरीक्षेत। अथ रोमकूपविवरैः
निःसृत्य सकललोकमवभास्य आननमृगलाञ्छनान्तरं
प्रविशन्तं मयूखसमूहं पुनः पुनः यावत्खेदं चिन्तयेत्।
ध्यानविरसश्च क्रमेण [2]परिणतशरत्काण्डपाण्डुराशि[3]
वदनतो[4] निर्गच्छन्त्यक्षराणि विचिन्तयन् षडक्षरं मन्त्र-
राजं जपेत्। अचापि विमुख उत्थाय यथासुखं देवताहं-
कृतिर्विहरेदिति।

कृपाणपाणेर्व्वरवाचि[5] चञ्चलं
गिरां[6] गुरोर्मञ्जुवरस्य साधनम्।
विलिख्य सम्प्रापि मयेह[7] यद्धितं
प्रयातु तेनाशु जनो जिनास्पदम्॥

॥ अर[8]पचनसाधनम्॥

---

[1] A ०न्नैक्त०।
[2] परिणत० dropped in AN.
[3] AN ०राश्मि०।
[4] AN वदनो।
[5] AN ०चञ्चुर्गि०।
[6] A गिरं, N गिराद्।
[7] A मयद्धितं।
[8] AC ०पचन०।

66.

श्रीवज्रधर्म्मं धूतदोषजालं
वाङ्मण्डलस्फारितरश्मिजालम् ।
समस्तसम्बुद्धवचःस्वभावं
वाक्साधनं संप्रणिपत्य वच्मि ॥

मन्त्रं[1] स्वभावेन विशुद्धरूपं[2]
प्रोच्चार्य्य बीजानिल[3]लालितः सन् ।
मायामरीच्युदकचन्द्रकल्पं
विभावयेल्लोकमिमं समग्रम् ॥

एँकारबीजप्रभवं विभाव्य
विश्वाम्बुजं सर्व्वविशुद्धरूपम् ।
[4]अकारजन्मानमनन्तभासं[5]
संशुद्धचन्द्रं च कलासमग्रम् ॥

पुनश्च गुह्यं परमं पवित्रं
बीजाक्षरं प्रक्षरदंशुजालम् ।
बन्धूकपुष्पद्युतिसन्निकाशं
वाचां प्रपञ्चप्रसरैकहेतुम् ॥

तद्बीजसम्भूतमभूतदोषं
समाधिमुद्रार्पितपाणिपद्मम् ।
वज्रासनस्थं करुणाभिरामं
श्रीवज्ररागं परिशुद्धरागम् ॥

---

[1] A मन्त्र०, N मन्त्रौ ।  [2] A विसुद्धिरूपं, AbNNbC विसुद्धरूपः ।
[3] A बीर्य्यानील०, NNbc वीर्य्यानिल० ।  [4] Ab अङ्कार० ।
[5] Ab ०भास्वरं ।

रोमोदरोद्भूतविशुद्धबुद्धं[1]
जीमूतजालैर्जगतो हितानि ।
कुर्व्वन्तमत्यन्तविशुद्धबुद्धिं
विभावयेत् सर्व्वजगत्स्वभावम् ॥

हृच्चन्द्रबिम्बे कुलिशं निरीक्ष्य
ज्वालाभिरुद्भासितसर्व्वलोकम् ।
[2]हुँकारनादादुपपन्नरूपं
पञ्चात्मकं निर्गतबुद्धमेघम्[3] ॥

तन्मध्य[4] हृचौस्फुटकोटिपीठ-
निविष्टदेहं त्रिभवावभासम् ।
महाक्षरं विक्षत[5] भूरिभूतं[6]
सन्तानदुःखप्रसरान्धकारम्[7] ॥

तस्योच्चरच्चारुमरीचितानै-
र्बालार्कबिम्बामलरम्यरागैः[8] ।
प्रज्ञाग्रदूतीं[9] शुभवाक्प्रसूतिं
जिह्वां विनिष्पाद्य च वज्रभूताम् ॥

तदग्रभागे ललितोग्ररागे
विचिन्तयेत् तत्त्वमुदाररोचिः ।
आत्मप्रभावैरनिवार्य्यवीर्य्यै-[10]
र्न्निर्न्नाशयेद् वादिवरप्रभावम् ॥

---

1 Ab ०बुद्धः ।
2 N फुँका० ।
3 Ab ०मेकं ।
4 ACNAbNb तन्मध्ये ।
5 ACAbNNb विच्छित० ।
6 A ०भूम्तं ।
7 A ०चपाद ।
8 ACNNb ०रागै ।
9 AN ०दूतिं, C ०हेतिं, Ab ०ऊतिं ।
10 Ab वीर्यैः ।

प्रतिक्षणाभ्यासबलोपपत्ते-
वाक्साधने[1] सिद्धिमुपागतेऽस्मिन् ।
गद्येन पद्येन[2] वदत्यजस्रं
शास्त्राणि चित्राणि च वेत्ति योगी ॥

शास्त्राणि चित्राणि करोत्यवश्यं
स्वयं महार्थानि जगन्निमित्तम् ।
जानाति चासौ परचित्तवृत्ती[3]
रागाद्यवद्योप[4]हताश्च तास्ताः ॥

तस्मिन् समाधौ दृढतां प्रयाते
[5]सुसूक्ष्मतीव्रस्फुटनिश्चयेन ।
समस्तबुद्धास्पदमूर्त्तिधारी
भवत्यसौ[6] नात्र विचारणीयम् ॥

[7]अभ्यासयोगेन भवन्ति पुंसां
भूतान्यभूतानि पुरःस्थितानि ।
कामाकुलानामिव रम्य[8]रामा-
श्चित्तानुयातानुयोगयुक्तिः[9] ॥

इति कुशलमुपार्ज्जितं मया यद्-
विदधतु[10] तेन जना जिनाग्रलक्ष्मीम् ।

---

[1] A वाक्यधने ।
[2] The MS Ba proper begins here and follows A, N and C materially in arrangement.
[3] NCBBa ०वृत्तिं ।
[4] Ab ०हिताश्च ।
[5] A सुगुह्य०, N सुसूक्ष्म० ।
[6] A भगवत्समौ ।
[7] अभ्यासकृ ।
[8] A रम्यं०, Ba रम्य० ।
[9] C ०सुक्तिः ।
[10] ANCBBa ०विदधत ।

विगतभयविषादशोकशल्यां
शशधररश्मिमनो[1]रमां समीहे ॥

अविरतकुशलानुरक्तचित्ता
गुरुवरलब्धसुखोपदेशशीला:[2] ।
इति सकल[3]कुलोपनीतवृत्ति-
श्रियमनुयान्तु ममाधिवश्यहर्षाः[4] ॥

अहमपि सुजनो भवेयमुच्चै-
रुज्ज्वलदन्त लावली[5]मध्यवर्त्तिमूर्त्तिः ।
गुरुतरकरुणः कपालमाली[6]
जलधरपूर्णघनाभिनीललक्ष्मीः ॥

कृतं सुजनभद्रेण वाचां साधनमुत्तमम् ।
एतेन साधयेद् वाचं वाचामीश्वरतां व्रजेत् ॥

[7]ॐ आः ह्रीः हुं ॥

॥ वाक्साधनम्[8] ॥

---

[1] Ab ०रमास्व । [2] Ab ०लीला ।
[3] ANC यतिकमल० । [4] ABa ०वर्षाः ।
[5] ABa ०लावर्त्ति०, B ०लावलिमध्य० । [6] Ab ०माला ।
[7] This *Mantra* is found only in B.
[8] The Colophon is read differently as वागवचनसाधनं समाप्तमिति in Ab.

67.

सिद्धैकवीरमञ्जुघोषसाधनार्थं चतुरस्रमण्डलकं कृत्वा तन्मध्ये ॐ वज्रसत्त्व[1] सिद्ध हुँ स्वाहेति पुष्पं दद्यात्। पूर्व्वादिदिक्षु ॐ वीरसत्त्व अधिष्ठान हुँ [2]स्वाहेति पुष्पं दद्यात्। ॐ समयसत्त्ववीर हुँ स्वाहेति पुष्पं दद्यात्। ॐ अक्षयसत्त्वज्ञान हुँ स्वाहेति पुष्पं दद्यात्। ॐ ज्ञानसत्त्ववज्र हुँ स्वाहेति पुष्पं दद्यात्। एवं धूपादिकं दद्यात्। पूर्व्वादिदिक्षु ॐ यमान्तकाय हुँ स्वाहेति पुष्पं दद्यात्। ॐ प्रज्ञान्तकाय हुँ स्वाहेति पुष्पं दद्यात्। ॐ [3]पद्मान्तकाय हुँ स्वाहेति पुष्पं दद्यात्। ॐ विघ्नान्तकाय हुँ स्वाहेति पुष्पं दद्यात्। [4]आग्नेयादिविदिक्षु ॐ टक्कि-राजाय हुँ स्वाहेति पुष्पं दद्यात्। ॐ नीलदण्डाय हुँ स्वाहेति पुष्पं दद्यात्। एवं ॐ महाबलाय हुँ स्वाहा। ॐ अचलाय हुँ स्वाहेति पुष्पं दद्यादिति मण्डलपूजा [5]यथाविभवतः कार्य्या। अध्यात्मपूजायै[6] शुचिसमुदाचारो भूत्वा मनोऽनुकूले प्रदेशे सुखासनोपविष्टः स्वहृदये सित-पँकारपरिणतसितपद्मवरटके अकारपरिणतचन्द्रमण्डल-स्योपरि सितॐकारं [7]पञ्चवर्णरश्मिकं भावयेत्। ततो निःसृतरश्मिभिरापादतलाद् वालाग्रपर्य्यन्तप्राप्तं भाव्यते। तद्रश्म्यवभासेन पञ्च स्कन्धा विशोध्यन्ते, अनादिकालीन-रागद्वेषमोहादयश्चापनीयन्ते। तेषामपगमात् ततः पञ्च

---

[1] N ०सत्त्वो।

[2] Instead of स्वाहेति पुष्पं दद्यात् Ba reads स्वाहा only in all places in this *Sādhana*.

[3] ANC यमान्तकाय।

[4] NBa अग्न्यादि०।

[5] ABa विभवतः०।

[6] N ०पूजापि।

[7] AC drops पञ्चवर्णरश्मिकं......०वभासेन।

स्फुरन्त्यः पञ्चतथागतस्वरूपा भाव्यन्ते ततस्ते रश्मयो बीजाक्षरे प्रविशन्तश्चिन्तनीयाः। ततो निर्म्मलीभूतचित्तसन्ताने करुणामैत्रीमुदितोपेक्षा भावयेत्। तत्र दुःखाद्[1] दुःखहेतोः समुद्धरणलक्षणा करुणा, जगदेकपुत्रप्रेमलक्षणा मैत्री, व्यवसायसंसिद्ध्युपायदर्शनात् प्रहर्षणं[2] मुदिता, बीजाक्षरमेव मञ्जुघोषरूपेणात्मानं निष्पादयितुमवधाय अष्टलोकधर्म्मेषु उपेक्षणं उपेक्षा। इत्थं चतुर्ब्रह्मविहारं भावयित्वा पुनर्बीजाक्षरान्निःसृतरश्मिभिः षड्गतिकसत्त्वानां रागद्वेषमोहमानादिसमस्तदोषा अपनीयन्ते। सत्त्वान् निष्क्लेशीकृत्य प्रतिनिवर्त्तन्ते रश्मयो बीजाक्षरे प्रविशन्ति। पुनर्बीजाक्षरान्निःसृत्य रश्मयः परिशुद्धसत्त्वधातुं स्वकीयेनावभासेनावभास्य सिद्धैकवीरमञ्जुघोषरूपेण गगनतलमापूर्य्य प्रतिनिवर्त्तन्ते रश्मयो बीजाक्षरे प्रविशन्ति। पुनर्बीजाक्षरान्निःसृत्य रश्मिभ्यो निर्गतपूजादेवीभिः सिद्धैकवीरमञ्जुघोषभट्टारकः पुष्पधूपादिभिः पूज्यते[3]। पूजितः सम्प्रसन्नो भवति। ततस्तेषामग्रतः पापदेशना-अकरणसंवर-पुण्यानुमोदना--पुण्यपरिणामना--आत्मभावनिर्य्यातना-मार्गाश्रयण-त्रिशरणगमन बोधिचित्तोत्पादाः क्रियन्ते। पश्चात् पूजादेवत्यो बीजाक्षरे प्रविशन्ति। पश्चात्—

कृतो वः सर्व्वसत्त्वार्थः सिद्धिर्दत्ता यथानुगा।
गच्छध्वं बुद्धविषयं[4] पुनरागमनाय मुः॥

इति विसर्ज्जयेत्। एतेन पुण्य[6]सम्भारार्थं योगी जगदाकलयति। यदेतत् घटपटशकटलयनदेवकुलपर्व्वतादि-

---

[1] दुःखात् found only in Ba.
[2] ANBa चर्षणं।
[3] ABa पूज्यन्ते।
[4] Ba ०विषये।
[6] ABa ०सम्भारज्ञानसम्भारा०।

[illegible] तत् सर्व्वं प्रतिभासमात्रं विचारेण प्रतिभासोपमं मायास्वप्नसदृशम्, अहमपि निःस्वभावः स्वप्नोपम इत्थं[1] शून्यतां भावयन् शून्यतादृढीकरणाय मन्त्रं जपेत्। ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति चिन्तयन् प्राकृतशरीराहङ्कारं त्यक्त्वा योगचित्तमात्रेणाव[2]तिष्ठति। पश्चात् चिन्तयति किमर्थं अहं शून्यतायां गतस्तिष्ठामि। जगदर्थो मया कर्त्तव्य एवं चिन्तयन् तच्चित्तं सितपँकाररूपेण दृश्यते। तत्परिणतं च सितपञ्चपत्रं च पद्मं[3] तद्वरटके अकारपरिणतचन्द्रमण्डले अकारादिषोडशस्वरान् द्विगुणीकृत्य द्वात्रिंशल्लक्षणविशुद्धा तत्परिणतचन्द्रमण्डलं भावयेत्। तस्योपरि सितॐकारं भावयेत्। [4]आदर्शज्ञानस्वभावात्मकोऽहं इति पठति। ततः ककारादिचतुस्त्रिंशदक्षराणि षडक्षरप्रवेशात् चत्वारिंशदक्षरं द्विगुणीकृत्य अशीत्यनुव्यञ्जनविशुद्धा तस्योपरि द्वितीयं चन्द्रमण्डलं तयोरेकीभावात्[5] समता। ततः समताज्ञानवान् समताज्ञानस्वभावात्मकोऽहमिति पठति। चन्द्रस्योपरि ॐकारं भावयेत्। तत्परिणतं च हेतु[6]फलभूतं नीलोत्पलं भावयेत्। तस्य वरटके चन्द्रस्थॐकारं भावयेत्। ततः प्रत्यवेक्षणाज्ञानवान् प्रत्यवेक्षणाज्ञानस्वभावात्मकोऽहमिति पठति। ततो बीजाक्षरान्निःसृत्य रश्मिभिः षड्गतिकसत्त्वानामन्त्रयेत्। यत्सिद्धैक[7]वीररूपनिष्पन्ने [8]मयि मदीयशरीरे प्रविश्य मञ्जुश्रीसुखं

---

[1] ABa इति।
[2] C ०तिष्ठेत्।
[3] N पद्मपद्मं।
[4] N आदर्श०, C आदर्शन०।
[5] A भावः।
[6] Ba ०स्फुरणभूतं।
[7] ANC ०वीरनिष्प०।
[8] A अपि दीपश०।

भोक्ष्यथ इति आमन्त्र्य ते रश्मयो बीजाक्षरे प्रविशन्ति। ततः कृत्यानुष्ठानज्ञानवान् कृत्यानुष्ठानज्ञानस्वभावात्मकोऽहं इति पठति। ततो बीजाक्षरान्निःसृत्य रश्मिभिरामन्त्रितषड्गतिकसत्त्वान् बीजाक्षरे प्रवेश्य समरसीभूय बीजचिह्नपरावृत्त्या सिद्धैकवीरो भगवान् चन्द्रमण्डलस्थः चन्द्रोपाश्रयो जगद्द्योतकारी द्विभुज एकमुखः शुक्लो वज्रपर्य्यङ्की दिव्यालङ्कारभूषितः पञ्चचीरकशेखरो नानारश्मिगहन उत्तिष्ठति; वामे नीलोत्पलधरो दक्षिणे वरदः। हृदयेऽस्य सितपद्मस्थचन्द्रमण्डले ॐकारं तत्परिणतमुत्पलं तद्वरटके चन्द्रस्थबीजाक्षरं ततो निःसृतरश्मिभ्यः पूजा[1]देव्यः स्फुरन्ति द्विभुजाः सितवर्णाः दिव्यवारि परिपूर्णकलशहस्ता जयतु जयतु श्रीसिद्धैकवीर इति वदन्त्यो भगवन्तं स्नापयन्ति। ततश्च भगवतो मौलौ अक्षोभ्यं देव्यः[4] पूजां कुर्व्वन्ति। ततः सुविशुद्धधर्म्मधातुज्ञानवान् ॐ सुविशुद्धधर्म्मधातुज्ञानस्वभावात्मकोऽहमिति पठति। ईदृशं भगवन्तं यावदिच्छं भावयेत्। भावनानन्तरं जापः ॐ वज्रतीक्ष्णदुःखच्छेदप्रज्ञाज्ञानमूर्त्तये ज्ञानकाय वागीश्वर अरपचनाय ते नमः। [5]कदाचित् ॐ [6]वाक्येदं नमः इति जापानन्तरं स्तुतिपूजाप्रणिधानं कृत्वा उत्तिष्ठेत्[7]। देवताहंकारेण सर्व्वलौकिककार्य्यं कुर्य्यात्।

॥ सिद्धैकवीरसाधनं समाप्तम् ॥

---

[1] A दैव०। [2] A द्विभुजानि।
[3] A बज्रभ्यः, Ba बज्रलः। [4] A देवेभ्यः।
[5] कदाचित्......नमः not found in Ba.
[6] A वाद्ये०। [7] N ०त्तिष्ठते।

68.

नमो वाग्वज्राय ।

पूर्व्ववत् शून्यतां विभाव्य पँकारजविश्वपद्मे [1]अकारज-चन्द्रमण्डलं तदुपरि[2] रक्तह्रीःकारपरिणतमात्मानममिताभरूपं ध्यायात् समाधिमुद्राधरमरुणवर्णं वज्रपर्य्यङ्क-निषण्णम् । ततो हृच्चन्द्रे हुँकारजपञ्चसूचिकं नीलवज्रमूर्धं तन्मध्ये सूचिकाग्रे रक्तआःकारं ध्यायात्, जिह्वाग्रे रक्त-ह्रीःकारमिति ।

॥ वाक्साधनम् ॥

---

69.

पूर्व्ववत् पापदेशनाद्यनन्तरं शून्यतामवलम्ब्य चन्द्रस्थ-मँकारबीजनिष्पन्नमार्य्यमञ्जुघोषं[3] पीतमेकमुखं द्विभुजं पञ्चवीर[4]कुमारं सर्व्वालङ्कारभूषितं उत्पलधारिवामकरं लीला[5]वस्थितदक्षिणकरं सिंहासनस्थपद्मचन्द्रासीन[6]-मात्मानं झटिति ध्यायात् । ततोऽञ्जलिं बद्ध्वा तर्जन्याव-[7]नामिका[8]नखाश्रिते कृत्वा विकचोत्पलमुद्रा देया । ॐ वागीश्वर मुः इति जप्यमन्त्रः ।

॥ महाराजलील[9]मञ्जुश्रीसाधनम् ॥

---

[1] ANC अकार० ।
[2] A omits.
[3] Ba ०सूचिक० ।
[4] Ba पञ्चचीरं ।
[5] Ba नी०ा० ।
[6] Ab ०सनस्थ०, B ०सनासीन० ।
[7] B ०नामिके० ।
[8] A मुखोश्रिते ।
[9] Ba ०नील०, Ab ०लीला० ।

## 70.

नमो मञ्जुश्रिये ।

[1]षष्ठस्य पञ्चमं बीजं पञ्चम[2]स्वरेणोपशोभितं [3]शून्येनाक्रान्तं तेनैव निष्पन्नं श्रीमञ्जुघोषं पञ्च[4]वीरकुमारं सर्वालङ्कारभूषितं द्विभुजं वामेनोत्पलधरं दक्षिणेन लीलया स्थितं सिंहासने आत्मानं कुमाररूपेण चिन्तयेत् । अस्य [5]मुद्रा हस्तद्वयेन सम्पुटाञ्जलिं कृत्वा तर्ज्जनीभ्यामनामिकानखं[6] पिधाय उत्पलवद् विकचसंस्थितौ हृदि ऊर्णायां कण्ठे मूर्ध्नि न्यसेत् । ॐ वागीश्वर मुः ।

॥ मञ्जुश्रीसाधनं समाप्तम् ॥

## 71.

मञ्जुवज्रं [7]प्रणम्यादौ शरत्सोमाभभास्वरम् ।
वक्ष्येऽहं साधनं तस्य संक्षेपात् स्फुटमुत्तमम् ॥

प्रथमं तावन्मन्त्री मनोऽनुकूले शुचिभूमिप्रदेशे सुखासनमध्यासीनः स्व[8]हृद्यकारोद्भवचन्द्रमसि मँतत्त्वं शुभ्रं वि[9]न्यस्य तद्रश्मिभिर्व्योमापूर्य्य भगवन्तं गुरुभट्टारकं च गगने दृष्ट्वा ततो भगवतः [10]पुरतः स्थितो मनो[11]मय्या पूजया मञ्जुश्रियं गुरुभट्टारकं च पूजयेत् वन्देत च

---

[1] Ba षष्ठमं ; all other MSS. have षष्ठपञ्चमं ।
[2] A °सत्त्वरेणो° ।
[3] A शून्यता° ।
[4] Ba °घीरकुमारं ।
[5] C मूल° ।
[6] A °मुखं ।
[7] C प्रणम्येन्दु° ।
[8] ANCB °हृदि य° ।
[9] A न्यस्यद° ।
[10] ANC पुरतो, B पुरः ।
[11] Ba °मया ।

[illegible]र्थम्। ततः सर्व्वपापं प्रतिदेशयामि सर्व्वपुण्यमनुमोदयामि तच्चानुत्तर[1]बोधौ परिणामयामि आबोधेर्बुद्धं धर्म्मं सङ्घं शरणं गच्छामि उत्पादयामि [2]सम्बोधिचित्तम्। ततो भगवन्तं निज[3]बीजेन सहैकीभूतं दृष्ट्वा सर्व्वं त्रैधातुकं स्थावरं जङ्गमं प्रतीत्यसमुत्पन्नं स्वप्नमायाप्रतिबिम्बोपममविचारासहं विचिन्त्य प्रकृतिप्रभास्वरमेव केवलं परिशुद्धमात्मानं भावयेत्। ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्यनेन दृढीकुर्य्यात्। पुनः प्रणिधानबलोत्पन्नचन्द्रमसि मँ वीक्ष्य तद्रश्मिस्फुरणैर्मञ्जुवज्रमात्मनि प्रवेश्यात्मानं मँकारोद्भवं ध्यायात् शरदिन्दुकराकारं पञ्चचीरकं सर्व्वाभरणभूषितं वामकरे नीलोत्पलधरं दक्षिणकरे वरदं विश्वकमलचन्द्रासने पर्य्यङ्कस्थितम्। ततः स्वहृदीन्दौ मँचन्द्रकान्तिमणिप्रभारश्मिभिर्गगनोदर[4]वर्त्तिभिर्ज्जगदर्थं कुर्व्वन्तं देदीप्य[5]मानं तावद् भावयेत्, यावत् खेदो न भवति। भावनाखिन्नो मन्त्रं जपेत् ॐ वाक्येदं नमः। उपहृदयं वा जपेत् ॐ ह्रीः हुँ। ततः शताक्षरं पठित्वा मञ्जुवज्राहङ्कारेणोत्थाय तथैव विहरेदिति। षण्मासेन वागीश्वरतामासादयति। सतताभ्या[6]सयोगेन इहैव जन्मनि बुद्धत्वमपि साधयति। एवं ध्यानस्थितः पूर्व्वसेवासप्तलक्षाणि जप्त्वा खड्गादिसिद्धयः साधनीयाः। ततः सोमग्रहे सूर्य्यग्रहे वा आतिलोहघटितं खड्गं स्वहस्तेन गृहीत्वा चन्द्रमपश्यन्

---

[1] Ab बुद्धबोधौ। [2] Ba सम्बोधे।
[3] A ०बीज, BC ०बीजेन, AbBa ०बीजे।
[4] ०वर्त्तिज० in AC. [5] AN दीप्य०।
[6] ABa सततभ्या०, A सदाभ्या०।

ताव[1]ज्जपेद् यावन्मुक्तो भवति खड्गविद्याधरो भवति। एवं वज्रचक्रत्रिशूल[2]शरमुद्गरपाशाङ्कुशादीनि[3] अञ्जनपादलेप-तिलकवशीकरणद्रव्यानि मेलयित्वा साधनीयानि। [4]विद्याधरसाधनानि संस्कृत्य साधनीयानि। क्षीरभक्तेन दधिभक्तेन वा सघृतेन सशर्करेण पात्रं पूरयित्वा हस्तेन [5]चावष्टभ्य जप्त्वा भक्षणीयं पञ्चशतायुर्भवति। माषान् मुखे प्रक्षिप्य जपेदङ्कुरिता भवन्ति तानभ्यव[6]हृत्य कविर्भवति श्रुतिधरो वाग्मी मेधावी च भवति। बिल्वानां लक्षहोमेन त्रैलोक्यराज्यमासादयति। यथालब्धसित-कुसुमानां चतुर्लक्षं हुत्वा वाक्सिद्धिर्लभ्यते[7] वागीश्वर-समत्वं च[8]। [9]घृताक्तपञ्चव्रीहिहोमेन वा चतुर्लक्षमात्रेण यक्षिणीमाकर्षयति पातालकन्यां वा। ब्राह्मीचूर्णं बिडालपदमात्रमष्टशताभिमन्त्रितं प्रभाते मण्डलकं कृत्वा यथाविभवं भगवन्तं सम्पूज्य घृतेनारनालेन वा पिबेत्। [10]वचामर्द्धतोलकप्रमाणं तथैवाभिमन्त्र्य घृतेन क्षीरेण तैलेन वा मासमेकं पिबेत् जडतागद्गदमूकत्वं विनश्यति। पण्मा[11]सेनाश्रुतान्यपि शास्त्राणि प्रत्यक्षीभवन्ति, न जातु विनश्यन्ति। श्रुतिधरो मत्तकोकिलमधुरस्वरः स्पष्टवाक्यो भवति।

[1] Ba ०ज्जपेन्मुक्तो० । [2] शर found in BAb.
[3] After this A abruptly brings श्रुतिधरो......०मासादयति from below.
[4] NAb विद्यारसाधनानि, Ba विद्याधरसाधनानि ।
[5] Ba चावक्तभ्य । [6] ABa ०हृत्य ।
[7] ANC ०लभंते । [8] A ०समम्, Ba ०समत्वं, Ab ०समत्वं वा ।
[9] Ba घृतोक्त० । [10] A वाचामर्द्ध, Ab वचोर्द्ध ।
[11] N ०सैनैव अश्रु० ।

तत्रायं शताक्षरमन्त्रः—ॐ वज्रसत्त्व समयमनुपालय, वज्रसत्त्वत्वेनोपतिष्ठ, दृढो मे भव, सुतोष्यो मे भव, सुपोष्यो मे भव, अनुरक्तो मे भव, सर्व्वसिद्धिं मे प्रयच्छ, सर्व्वकर्म्मसु च मे चित्तं श्रेयः कुरु, हुँ हहहह होः भगवन् सर्व्वतथागतवज्र मा मे मुञ्च, वज्रीभव महासमयसत्त्व आः ।

॥ आर्य्यसिद्धैकवीरसाधनम् ॥

---

72.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं सितपद्मोपरि शुक्ल-अकारजचन्द्रे सितधीःकारपरिणतमात्मानं मञ्जुश्रीभट्टारकं सिद्धैकवीरनामानं सर्व्वाङ्गधवलं पर्य्यङ्कनिषण्णमेकमुखं द्विभुजं दक्षिणे वरदं वामे नीलोत्पलधरं दिव्याभरणसुन्दरं विचित्रपरिधानं झटिति निष्पाद्य शिरःकण्ठहृदये चन्द्रस्थ ॐ-आः-हुँकारान् पश्येत् । आःकारहुँकारयोर्मध्ये च धीःकाररश्मिभिर्जगदर्थं कारयन् मन्त्रं जपेत् ॐ वज्रतीक्ष्णदुःखच्छेदप्रज्ञाज्ञानमूर्त्तये ज्ञानकाय वागीश्वर अरपचनाय ते नमः ।

॥ सिद्धैकवीरसाधनम् ॥

---

[1] This *Śatākṣara Mantra* is dropped in C and Ba.
[2] ABa omit. [3] A ०पद्म० ।

## 73.

नमोऽलिमन्मथाय[1]।

सुन्दरानन्दनिःस्यन्दं शास्तुः सम्भोगविग्रहम्।
नत्वा संक्षेपतो वक्ष्ये भृङ्गानङ्गस्य साधनम्॥

आदौ तावद् रक्ताब्जपुञ्जप्रतिमं [2]श्रीहेरुकरूपमात्मानं निष्पाद्य विज्ञप्तिमात्रं च त्रैधातुकमाकलय्य[3] स्वहृदये च सुरक्तषोडशाङ्घ्रिदलमहोत्पलकर्णिकायामालिकालिसंक्षेपरूपौ सकलबुद्धगुणान्[4]रक्तावकारहुँकारौ मनसाऽभिलिख्य ततस्ताभ्यामकारहुँकाराभ्यां सुरक्तमधुरमरीचिनिचयं निश्चार्य तेनैव चार्द्रकश्मीरजप्रतिममरीचिनिचयेन सत्त्वभाजनलोकान् विशोध्य तेषां च कायवाक्चित्तैः सह एकीकृत्यानीय तयोरेव अकारहुँकारयोर्बिन्दौ प्रवेशयेत्। [5]ततोऽकारहुँकारपरिणतं भ्रमरमिथुनं मसृणकुरुविन्दरत्नोपमं परमकारुण्यमकरन्दपानमत्तं अनवरतमुक्तातिदीर्घनाद[6]हुँकारमधुरविग्रहं नैरात्माहेरुकस्वभावं विचिन्तयेत्। ततोऽस्यैव हृदि कौसुम्भर.गरञ्जितजलबिन्दुसदृशौ सविषयसूक्ष्माकारहुँकारौ पश्येत्। तदनु तन्मिथुनं प्रश्वासवायुरथारूढं नासिकाविवरेण निःसृत्य त्रैधातुकसंस्थितानां सत्त्वानां[7] कायवाक्चित्तानि विशोध्य गृहीत्वा च पुनराश्वासवायुमारुह्य तेनैव पथा स्वहृत्कमलकर्णिकायां प्रविशेत्। प्रविश्य चानीतकायवाक्चित्तानां स्वकायवाक्चित्तैः समतामधिमुञ्चेत्। एवं

---

[1] Ab ०मयनाय।
[2] A मञ्जुश्री०।
[3] A ०कलय्य।
[4] A रक्तौ च ऊँका०, NC रक्तौ यंकार०।
[5] A तया यका०, C याका०।
[6] नाद dropped in A.
[7] सत्त्वानां dropped in Ab.

पुनः पुनर्भावयेत् यावज्झगिति[1] व्यक्ततरा[2] प्रतीतिरुप-जायते। पश्चात् साध्यस्य साध्याया वा हृदये झगिति रक्ताष्टदलकमलं विभाव्य आत्मनो हृत्क[3]मलकर्णिकाया-स्तद्भ्रमरमिथुनं [4]प्रश्वासवाय्वारूढं नासिकाविवरेण निःसृत्य साध्यनासिकाविवरेण स्वकायवाक्चित्तस्वरूप-हृत्कमलकर्णिकायां प्रविशेत्। प्रविश्य तस्य हृदयार-विन्दस्य कायस्वरूपेण परागे[5]नात्मानं धूसरयति[6]। वाक्-स्वरूपं[7] च मकरन्दं पिबति, चित्तस्वरूपं च [8]पुष्कारं खादति। तदनु[9] साधकः स्वकीयाश्वाससमीरणाकृष्टं साध्यस्य नासिकाविवरेण निःसृत्य आत्मनो नासिका-रन्ध्रेण हृदयमहोत्पलकर्णिकायां प्रविश्य[10] पतन्तं कम्प-यित्वा कायस्वरूपं परागं त्यजन्तं वाक्स्वरूपं मकरन्दं चित्तस्वरूपं पुष्कारं चोद्वमन्तं[11] चिन्तयेत्। पुनस्तथैव गत्वा तथैव प्रविश्य तथैव गृहीत्वा[12] तथैव चागत्य तथैव त्यजन्त-मुद्वमन्तं च चिन्तयेत्। एवं पुनः पुनर्यावदनुरागं दर्शयति। अनुरागदर्शनाद् विधेयताऽवगम्यते। अवगम्य च यथाभि-मतसिद्ध्यर्थं यतेत। अत्र चानया भावनया ललनां नर्म्म-लालसमानसां मदनविह्वलदेहां साधक[13]नामाङ्कवचन-प्रबन्धां रत्युत्सुकां कारयित्वा यदि दोषदर्शनान्नानुरमते तदा महदेव दूषणमापद्यते। तस्मादादावेव सद्विपर्य्यास-विषयोऽवधारणीयः। अवधार्य्य च भावना विधेयेति।

---

[1] A यावन्यप्रीति। [2] A वक्तव्यतरा। [3] A मनोहृत्क०।
[4] A वाय्वारूढं। [5] AN रागे०। [6] A घूषयति।
[7] A ०स्वरूपेण [8] B पुस्तकं। [9] A ततः।
[10] A ०कायोपविश्य। [11] A चोद्धमं, N चोद्वमन्तौ।
[12] A गत्वा। [13] AN साधन०।

विधायासादितं पुण्यमलिमन्मथसाधनम् ।
यदत्युच्चैर्जनस्तेन भूयात् श्रीकरुणाचलः ॥

[1]लडहविलआण हिअअं मअणा[2]लसघुस्सिरं [3]कअं जेण ।
रअणांकरेण रईअं अलिवम्महसाहणं[4] तेण ॥

॥ अलिमन्मथसाधनम् ॥

---

## 74.

[5]नमो मञ्जुनाथाय ।

प्रथमं तावत् निराभासीकृत्य सचराचरं तदुद्भूतमात्मानं अष्टवर्षाकृतिं श्वेतवर्णं सर्व्वालङ्कारभूषितं भावयन् मञ्जुघोषं, नाभिदेशे हुँकारेण सूर्य्यमण्डलं, तदुपरि होकारेण विश्वचोत्पलं, तस्योपरि चन्द्रमण्डलं भावयेत् । तदुपरि वज्रतीक्ष्णं कनकवर्णं सर्व्वालङ्कारभूषितं दक्षिणे करे खड्गं वामे करे प्रज्ञापारमितापुस्तकं द्वीन्द्रियसमापत्त्या भावयेत् । ॐ वज्रतीक्ष्ण सुरतस्त्वं (वं) मनसा जपेत् । स्वदेवतामण्डलचक्रं प्रति भापयेत् । मञ्जुघोषसम(यं) इहैव जन्मनि भवति— ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं, ॐ वज्राभिषेकं सर्व्वबुद्धा ददन्तु माम् ।

॥ वज्रतीक्ष्णभट्टारकस्य साधनं समाप्तम् ॥

---

[1] छाया—लटभवनितानां हृदयं मदनालसघूर्णितं कृतं येन ।
रत्नाकरेण रचितमलिमन्मथसाधनं तेन ॥

[2] A मअनो०, N मआनो० ।  [3] Ab कयेण, B कअक्खरेण ।

[4] Ab अलिवमहसाहणं तेण, B अलिमम्महभाणमन्तेण ।

[5] This *Sādhana* is found only in Ab. *See*, Fol. 30.

75.

नमो मञ्जुश्रिये।

श्रीमञ्जुवज्रस्य विधाय रूपं
संरक्तवर्णोज्ज्वल[1]रश्मियुक्तम्।
निर्व्वर्त्य[2] सम्यक् स्वरषोडशानि
सञ्चिन्त्य वज्रं हृदि पद्ममध्ये॥

बन्धूकपुष्पाकृतितुल्यरूपा
आलम्बनीयाः खलु षट्पदाख्याः।
निःश्वासवातेन शनैरशेषा
निश्चारणीया निजनासयाऽमी[3]॥

सञ्चिन्त्य साध्यं पुरतः स्थितं च
कृताञ्जलिं घूर्णित[4]नेत्रयुग्मम्।
नासापुटेनैव शिलीमुखास्ते
साध्यस्य भाव्या हृदये विशन्तः॥

[5]आचूषयन्तो हृदि पद्मलीनं[6]
तस्यैव चेतो मकरन्दमाद्यैः।
निष्क्रम्य तस्माच्च पुनर्विशन्तः
तत्रैव चिन्त्याः[7] खलु लीयमानाः॥

विधानमेवं स्थिरयुक्तचित्ताः
कुर्व्वन्ति ये सन्ध्य[8]चतुष्टयं तु।

---

[1] AC ०रक्तरश्मिं, N ०रक्त, Ab ०ह्वर्षरश्मिं, Ba ०रश्मिपुञ्जं।
[2] Ba निर्वृत्य, AC निवृत्त।
[3] A ०नाशमामि, Ab ०नामयामि, B ०नाशयायी।
[4] ANCBa घर्णित०।
[5] From आचूषयन्तो to the end of this *Sādhana* is not to be found in Ab and B.
[6] A पद्मलीनं। [7] A चिन्त्याः। [8] N चतुर्थं यत्न।

आखण्डलं चापि चतुर्द्दशोर्द्धै-[1]
दिनैरलं ते[2] वशमानयन्ति ॥

लब्धं मया सद्गुरुसन्निकाशात्[3]
श्रीमञ्जुघोषैकविधानमेतत् ।
इत्यत्र किञ्चिन्न विकल्पनीयं
भवेदिदं किं न च सम्भवेद् वा ॥

आकृष्टिमेतां खलु चित्तसंज्ञां
शुभाकराख्येन यथोपदिष्टाम् ।
कुर्व्वन्तु सन्तः परिमुच्य सर्व्वां
कृता मयाऽस्य गुरुणापि चैषा ॥

यन्मेऽत्र किञ्चित् कुशलं सुनिर्म्मलं
प्राप्तं लिखित्वा वरषट्पदाष्टम् ।
तेनैव सत्त्वा निखिला भवन्तु[4]
श्रीमञ्जुनाथेन सहैव[5] युक्ताः ॥

॥ [6]कृतिरियमाचार्य्यशुभाकरपादानाम् ।

एतानि साधनवराणि मया लिखित्वा
सर्व्वेण यत् कुशलमाप्तमतीव[7] शुद्धम् ।
तेनैष लोक इह सौख्यकरं जिनत्वं
प्राप्नोतु हीनभवभीतिरतिप्रकृष्टः[8] ॥

। वश्याधिका[9]रमञ्जुश्रीसाधनम् ॥

---

[1] Ba ०र्द्दशाद्वे, N ०र्द्दशार्द्धै ।  [2] A ०नैरनन्ते, NC ०नैवमन्ते ।
[3] AC मया सद्गु०, N मयास्मद्गु० ।  [4] Ba भवन्तं ।
[5] Ba सहैक ।  [6] C कृतिराचार्य्य० ।
[7] AN ०मवाप्त० ।  [8] A भीतिप्रकृत्य: ।  [9] A वश्याधिको० ।

76.

मञ्जुश्रीसाधनं शुद्धमधुना साधु कथ्यते[1]।
संक्षिप्तमतिविस्पष्टमज्ञानतिमिरापहम्॥

पूर्व्वोक्तविधानेन [2]स्वहृच्चन्द्रे पीतमुःकारपरिणतं मञ्जुकुमारं त्रिमुखं षड्भुजं कुङ्कुमारुणनीलसितदक्षिणेतरवदनं सत्त्वपर्य्यङ्किनं खड्गबाणवरदं दक्षिणकरत्रयं प्रज्ञापारमितापुस्तकनीलोत्पल[3]चापवद् वामकरत्रयं सश्रृङ्गारकुमाराभरणनिवसनादिकं नानापुष्पमहाशोभाचीरत्रयविराजितं तथागतपरमाणुपरिघटितमात्मानं ध्यात्वा ॐ मुः इति मन्त्रं जपेत्।

॥ मञ्जुश्रीसाधनम्॥

---

77.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं पद्मे चन्द्रमण्डलोपरि सितबिन्दुं विभाव्य स्फुरणादिपूर्व्वकं तत्परिणामेन सितधीःकारजं केवलमेव सितं अरपचनमञ्जुश्रियं स्वबीजहृदये विचिन्त्य ॐ धीः स्वाहेति मन्त्रं जपेत्।

॥ इति विद्याधरपिटकीयसंक्षिप्तमञ्जुश्रीसाधनम्॥

---

[1] A शुद्धमधु कथ्यते। [2] B drops स्वहृच्चन्द्रे।
[3] Ba ॰चापवाम॰।

## 78.

विदध्यादादितो मन्त्री बुद्धादीनां प्रपूज[1]नम् ।
पुण्यानां परिणामाद्यं ततो मैत्र्यादिभावनाम् ॥
हृच्चन्द्रबिम्बमध्यस्थं मन्त्री बिन्दुं विचिन्तयेत् ।
दिवाकरकरोत्सृष्टहिमबिन्दुसमप्रभम् ॥
तद्बिन्दुकिरणैर्ध्यायात् प्रतिरोमविनिर्गतैः ।
जगत् सर्व्वं [2]वितस्त्यादिक्रमेण विषदीकृतम् ॥
सितधीःकाररूपं च बिन्दुमन्तर्गतत्विषम् ।
दृष्टारपचनं पश्येत् तत्सर्व्वपरिणामतः ॥
अन्तर्निहितधीःकारं हृदि दृष्टेन्दुमण्डलम् ।
नासया [3]निःसरेत् पश्चात् तन्मरीचिकदम्बकम् ॥
मञ्जुघोषाकृतीन् सत्त्वान् ध्यायादुच्छ्वासवायुना ।
निःश्वासवायुना पश्चाद् धीःकारे संहरेदमून् ॥
स्वाहान्तं प्रणवाद्यं तु मन्त्रबीजाक्षरं जपेत् ।
शरच्चन्द्रकराकारं हृच्चन्द्रमण्डलस्थितम् ॥

॥ विद्याधरपिटकप्रतिबद्धमञ्जुघोषसाधनम् ॥

---

[1] ANBa ०दीनाञ्च पूज० ।
[2] ABa वितस्त्यादि० ।
[3] ANC निःसरत्पश्येत् ।

79.

प्रदीपकलिकाकार[1]निर्म्माणाब्जेन्दुमध्यगः ।
हूँकारद्रावको वीरो रवि[2]गुप्तेन देशितः ॥

हुँ आः प्रज्ञावृद्ध्यधिकारः । झटिति मञ्जुश्रीयोगमालम्ब्य नाभौ चन्द्रमण्डलोपरि सितबिन्दुं प्रदीपकलिकाकारं सरश्मिकं विचिन्त्य शिरसि सितहूँकार[3]मनाहतं लम्बमानमस्तकं सरश्मिकं ध्यायात् । तदनु बिन्दुरश्मिना सञ्चोद्य द्रवी[5]भूतेन हूँकारेण तं बिन्दुमाप्लावयन् स्थिरचित्तो मन्त्री न चिरेण प्रज्ञामभिवर्द्धयतीति ।

नाभिदेशोपरि व्यक्तरक्तधर्म्मोदयान्तरे ।
पञ्चारनीलदम्भोलिकरो(रटो)द्भासिततेजसः ॥
सितहूँकारतो जातं शिरः सन्धिविनिर्ग्गतम् ।
पश्येन्नादं[6] नभोव्यापिधूम्रहूँकारसम्भवम् ॥

नादो रश्मिरेखा ।

॥ इति प्रज्ञावृद्धिविधिः ॥

---

[1] Ba ०कलिकालो ।
[2] A ख्यवि० ।
[3] Ba ०हृद्भिकार० ।
[4] N ०ऊंकार० ।
[5] A ०भूतेनाहं, B भूते हुँ ।
[6] A पश्येन्नाहं ।

80.

गुरुपादं सदा नत्वा वज्राचार्य्यं तथैव च ।
प्रणम्यादौ लिखिष्यामि मञ्जुश्रीर्येन सिध्यति ॥

सत्त्वपर्य्यङ्कमासीनो हृदीन्दावः[1]कार[2]भूषितम् ।
शङ्ख[3]कुन्दोज्ज्वलं बीजं विश्वरश्मिसमाकुलम् ॥

तैर्निष्पन्नाः [4]सम्बुद्धगुरुबोधिसत्त्वा महर्द्धिकाः, तान् दृष्ट्वा पूजयेदनेन मन्त्रेण ॐ वज्रपुष्पे हुँ, ॐ वज्रधूपे हुँ, ॐ वज्रदीपे हुँ, ॐ वज्रगन्धे हुँ, ॐ वज्रनैवेद्ये हुँ । ततः—

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥
आबोधेः[5] शरणं यामि बुद्धं धर्म्मं गणोत्तमम् ।
बोधौ चित्तं करोम्येष स्वपरार्थप्रसिद्धये ॥

उत्पादयामि[6] वरबोधिचित्तं
निमन्त्रया[7]म्यहं सर्व्वसत्त्वान् ।
इष्टां चरिष्ये वरबोधिचारिकां
बुद्धो भवेयं जगतो हिताय ॥

इति । प्रणिधिपूर्व्वकं सर्व्वधर्म्मनैरात्म्यं भावयेदनेन मन्त्रेण ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम् ।

---

[1] Ab वं । [2] A ०भुतो, N ०भुषिते, Ab ०भूषिताः ।
[3] Ba ०कुण्डो० । [4] Ab सम्बद्धं गुरुबुद्धं बोधिसत्त्वमहर्द्धिकाः ।
[5] Ba आबोधौ । [6] ABa adds परमं after उत्पादयामि ।
[7] B ०मि अहं, N ०मि अन्न, C ०मि बङ्क, AbBa ०मि अङ्क ।

बीजं मायोपमाकारं[1] त्रैधातुकमशेषतः।
दृश्यते स्पृश्यते चैव यथा माया हि सर्व्वतः[2]।
न चोपलभ्यते चैवं सर्वस्य जगतः स्थितिः॥

इति अधिमोक्षं कुर्य्यात्। ततोऽनादिकालीनमसत्कल्पनाबीजमपनीय स्वभावशुद्धिमधि[3]मुच्चेत् ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति। ततः पूर्व्वोक्तबीजनिष्पन्नं खड्गं [4]तत्सरुमध्ये चन्द्रमण्डलं तस्योपरि पूर्व्वोक्तबीजं तत्सर्व्वपरावृत्त्या मञ्जुश्रीरूपमात्मानं विचिन्तयेत् अहमेव सर्व्वजगत्पतिरिति पद्मचन्द्रासनस्थं सत्त्वपर्य्यङ्कसमासीनं शशिप्रभमनेककिरणस्फुरणैर्व्याप्तनभःस्थलं विचित्र[5]परिधानं जगदानन्दस्वरूपं शुक्लवर्णं मनोरमं पञ्चचीरं महावीरं सर्व्वालङ्कारभूषितं दक्षिणे उद्यतखड्गकरं वामहस्तेन हृदि गृहीतपुस्तकम्। ततो मुद्रां बध्नीयात्। हस्तद्वयेन सम्पुटाञ्जलिं कृत्वा [6]तर्जनीभ्यामनामिकानखौ पिधाय उत्पलवद् विकचसंस्थिते हृदूर्णाकण्ठमूर्द्धसु विन्यस्य[7] मन्त्रेण पश्चान्नाभेरधो [8]भ्रुँकारेण शुक्लवर्णमश्वत्थपत्रसदृशं चिन्तयेत् चन्द्रमण्डलम्। तस्योपरि अष्टमस्य चतुर्थं प्रथमषोडशेन [9]भूषितं सप्तमस्य

[1] A adds विचिन्त्य after ०पमाकारं।

[2] After the second line A has—

न चोपलभ्यते चैव यथामाया हि सर्व्वतः।

[3] ANC ०शुद्धमित्यधि०।

[4] Ab तत्सरुक, A तत्सनु०।

[5] ANC ०विचित्रवस्त्र०।

[6] B तर्ज्जन्यौ विधाय, Ab तर्ज्जन्यौ अना०।

[7] ANCBa न्यस्य।

[8] AN भ्रुँका०।

[9] भूषितं is found only in Ab.

द्वितीयेन प्रथमं चतुर्थेन च भूषितं तन्निष्पन्नां पञ्चकलिकां नाभेरुपरि हुँकारेण विकसितां चिन्तयेत्। तस्योपरि चन्द्रमण्डलं तस्योपर्य्यङ्गुलान्तरं त्यक्ता [1]षडरचक्रं सतेजः तस्यारेषु द्वादशमात्राणां [2]युग्मयुग्माक्षरं न्यसेत्। प्रत्येकारस्योपरि मूलमन्त्रस्यैकैकाक्षरं विन्यस्य चक्राभ्यन्तरवरटके धीःकारं सकिरणं निश्चलं भावयेत्। बाह्यवरटके कालियोगं स[4]मुज्ज्वलं ङञणनमाक्षररहितं चिन्तयेत्। पुनरूर्द्धतोऽङ्गुलम[5]न्तरं त्यक्ता चन्द्रमण्डलं तस्योपरि अरपचन इति दृष्ट्वा शीघ्रतरं चक्रं भ्रमद् भावयेत्। षण्मासान् यावत् जपेदनेन मन्त्रेण ॐ वज्रतीक्ष्ण [6]मुः। प्रतिदिनमयुतमेकं जपेत्। ततो जडोऽपि वाक्पतिर्भवति, [7]मेधावी ग्रन्थसहस्रं गृह्णाति, अविच्छिन्नसंस्कृतवक्ता महाकविः सर्व्वशास्त्रपारगः। सिद्धे सति खड्गविद्या[8]धराधिपतिर्भवति, विद्याधरीभिः सह क्रीडति। इदं[9] चक्रवरं गूढमाचार्य्योपदेशेन बोद्धव्यम्।

प्रज्ञाचक्रमिदं श्रेष्ठं लिखित्वा यः फलादयः।
तेन लोकः समस्तोऽयं मञ्जुश्रीपदमाप्नुयात्॥

॥ प्रज्ञाचक्रमिदं मञ्जुश्रीभट्टारकस्य साधनं समाप्तम्[10] ॥

---

[1] ANC षड़ार०। [2] C युगयुगा०।
[3] Ab ०काद्दर०। [4] C मुज्वलदनलमा०।
[5] A ०सम०। [6] ANC ऊं, B ध्वं, Ab वं।
[7] A omits मेघावी......०घराघिपतिर्भवति।
[8] Ab ०घरो भवति। [9] इदं......बोद्धव्यं dropped in AbBa.
[10] The Colophon is read as नामसङ्गीत्याम्नायेन सिद्धप्रज्ञाचक्रवरलब्धं समाप्तं in ANCBa and as मञ्जुश्रियप्रज्ञाचक्रं समाप्तं in B.

# 81.

[1]नमो मञ्जुश्रिये।

तत्रेयं धर्म्मशङ्खसमाधिः। सितवर्त्तुलवारुणमण्डलोपरि सकेशराष्टदलपद्मवरटके मरणापगताः[2] सर्व्वधर्म्मा इति द्योतकमँबीजनिष्पन्नं द्विभुजं शुक्लवज्रपर्य्यङ्कोपरि समाधिहस्तं कुमाराभरणं पञ्चचीरं स्वच्छनिर्म्मलज्ञानस्वभावं मञ्जुश्रीरूपमात्मानं भावयेत्। स्वहृच्चन्द्रोपरि पद्मे खँकारेण शङ्खं तन्मध्ये ॐ वज्रजिह्व रँ इति वज्रजिह्वां, जिह्वोपरि रक्तपद्मे समाधिसमापन्नममिताभबुद्धं तदुपरि तालुनि[4] वंकारमधोमुखं अमृतबिन्दुं स्रवन्तं एवमनुक्रमेण पक्षमासषण्मासपर्य्यन्तं भावयेत्। सिद्धौ लब्धनिमित्तो मण्डलमालिखेत्। बाह्यतश्चतुरस्रं चतुर्द्वारं द्वारपालसमन्वितं लास्या-माल्या-गीता-नृत्या-पुष्पा-धूपा-दीपा-गन्धाश्च बाह्यमण्डले न्यसनीयाः। तदभ्यन्तरे वर्त्तुलं शुक्लैकरेखावृतं [5]अरं तन्मध्ये शुक्लपद्मं एवं लिखित्वा कार्त्तिकफाल्गुनवैशाखादिपौर्णमास्यां पूजानैवेद्यादिपूर्व्वकं बलिं दत्त्वा समाहितो मण्डलमध्ये वज्रपर्य्यङ्कोपविष्टो मञ्जुश्रीरूपपरावृत्तममिताभबुद्धरूपमात्मानं धर्म्मधातुसमं प्रभास्वरं भावयेत्। ततः सर्व्वतथागतानां कायवाक्चित्तमुद्राः सर्व्वदिगायाताः स्वकायवाक्चित्तेषु प्रविष्टा दृढीभूता इति स्थिरचित्तः स्वहृच्चन्द्रपद्मस्थितं

---

[1] C repeats from the beginning to मञ्जुश्रीरूपमात्मानं भावयेत्।

[2] A मपनाग तौः, N मरणाय गताः।

[3] Ba वं०।

[4] AB तालुनं।

[5] ABa अर्द्धारं।

शङ्खं स्पष्टं पश्येत्। तं परिनिवार्य्यावस्थितसर्व्वाक्षरस्वभावकेशरबिन्दुभ्यो वाक्परमाणवः कण्ठदेशं प्राप्य स्वररूपा भवन्ति। स्वरान्नादो नादादक्षररूपा जिह्वामासाद्य वज्राकृतिपरम्परया निःशेषाकाशद्योतनकराः [illegible]ाकाशस्फुरन्नादा[1] वर्णषोडशघोषाकारास्ताः प[illegible] घोषेण पूरयन् गगनं ॐ [2]वाक्येदं नम इति मन्त्रं जपेत्। पर्य्यङ्कमभिनन्दन् सकलां रात्रिं जपतश्च सि[illegible]निमित्तानि भवन्ति। जिह्वया रश्मयः स्फुरन्ति। [illegible]ोऽसीति शब्दश्च श्रूयते। ओष्ठाद् दन्तेभ्यश्च विचित्रा रश्मयो निश्चरन्ति। ततः प्रभृति यथाचिन्तितपदवाक्यवृत्तगाथामन्त्रविद्याहृदयादीनि शङ्खादयतत एवं निश्चरन्ति। अनधिगतानि च शास्त्राण्यधिगच्छति, करोति च। सर्व्वज्ञत्वं चाचिरादेव भवति।

॥ इति धर्म्मशङ्खसमाधिमञ्जुश्री-
साधनं समाप्तम् ॥

---

[1] ANC स्फुरन्नाना का० ।

[2] A वाद्येदं० ।

[3] Ba सिद्धे सति० ।

## 82.

नमो मञ्जुश्रिये ।

प्रथमं तावत् साधकः प्रातरुत्थाय मुखशौचादिकं कृत्वा ध्यानगृहं प्रविश्य सुखासने पर्य्यङ्केनोपविश्य स्वहृत्पद्मचन्द्रे रक्तगौरमुःकारं भावयेत् । ततस्तन्मरीचिसञ्चयै-रङ्कुशाकारैराकृष्य भगवन्तं वक्ष्यमाणवर्णमुखभुजचिह्नासनोपेतं पुरतो विभाव्य मनोमयपुष्पधूपादिभिः सम्पूज्य तदग्रतः पापदेशनादिकं सर्व्वं विधाय मैत्र्यादिब्रह्मविहारचतुष्टयं विभाव्य[1] सर्व्वधर्म्मशून्यतामामुखीकृत्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति मन्त्रेणाधितिष्ठेत् । तत आकाशे हुँकारेण पञ्चसूचिकं वज्रं सबीजं विभाव्य तद्रश्मिभिः यथायोगं वज्रप्राकारं वज्रपञ्जरं वज्रारं वज्रमयीं भूमिमारसातलमवलम्ब्य वज्रमयरश्मीभूय वज्रप्राकाराद् बहिर्गन्धादिरूपेणावस्थितं पश्येत् । तदनन्तरं वज्रप्राकाराभ्यन्तरे ह्रीःकारेण पद्मं पद्मोपरि अकारेण चन्द्रमण्डलं तदुपरि रक्तगौरवर्णं मुःकारमनेकबुद्धस्फुरणसंहरणाकारं विभाव्य तत्परिणतं मञ्जुश्रीभट्टारकं रक्तगौरं पद्मचन्द्रोपरि वज्रपर्य्यङ्कनिषण्णं प्रथममुखं रक्तं दक्षिणं नीलं वामे शुक्लं इति त्रिमुखं हस्तचतुष्टयेन यथायोगं प्रज्ञाखड्गधनुर्बाणयोगिनं रत्नकिरीटिनं द्वात्रिंश-

---

[1] From the beginning to ॰चतुष्टयं विभाव्य is written differently in Ba as follows:— पूर्व्वोक्तविधानेन स्वहृदि पद्मचन्द्रे रक्तगौरं मुकारं भावयेत् । तद्रश्मिनाकृष्य भगवन्तं पुरतो विभाव्य ततो पुष्पादिभिः सम्पूज्य तदग्रे पापदेशनादिकं सर्व्वं विधाय चतुर्ब्रह्मविहारौं विभाव्य ।

लक्षणाशीत्यनुव्यञ्जनविराजितं कुमारं कुमाराभरण-भूषितमात्मानं विभाव्य [1]हृदयपद्मचन्द्रोपरि सत्त्वपर्यङ्क-निषण्णां सत्त्ववतीं शुक्लां वामे स्पर्द्धया घण्टाधरां दक्षिणे हृदुत्कर्षणयोगेन वज्रधारिणीं ऊर्णायां तथैवावस्थितां रत्नवज्रीं पीतां करद्वयेन शिरसि पुष्पमालां बध्नन्तीं कण्ठे पद्मवज्रीं रक्तगौरां वामेन भगवद्गृहीतपद्मनालां दक्षिणे [2]तत्पत्रविकासिनीं पूर्ववदेवावस्थितां मूर्द्धनि कर्म्म-वज्रीं हरितवर्णां विश्वचिकवज्रान्वितहस्तद्वयेनात्मीयमूर्द्धानं धारयन्तीं तथावस्थितां विभाव्य ॐ वज्राङ्कुश जः, ॐ वज्रपाश हुँ, ॐ वज्रस्फोट वँ, ॐ वज्रावेश होः इत्येभि-र्मन्त्रैः पद्मचन्द्रोपरि यथाक्रमं ज्ञानमण्डलमाकृष्य प्रवेश्य बद्धा वशीकृत्य वज्रमुष्टि[3]द्वयं बद्धा तर्ज्जनीकनिष्ठाभिः शृङ्खलां कृत्वा रचितवज्रचक्रमुद्रया उत्तानतः स्वमुखव्यव-स्थापितया अर्घ्यपाद्य[4]पुष्पधूपादिभिः सम्पूज्य झटिति स्वशरीरे प्रवेशयेत्। तदनु सर्व्वतथागताभिषेकपूर्व्वक-मक्षोभ्यमौलिनमात्मानं [5]विचिन्तयेत्। मन्त्रः ॐ सर्व्व-धर्म्माभावस्वभाव विशुद्धवज्र अ आ अं अः प्रकृति-परिशुद्धाः सर्व्वधर्म्मा यदुत सर्व्वतथागतज्ञानकायमञ्जु-श्रीपरिशुद्धितामुपादायेति अ आः सर्व्वतथागतहृदय हर हर ॐ हुँ ह्रीः भगवन् ज्ञानमूर्त्तिवागीश्वर महावाच सर्व्वगगनामलसुपरिशुद्धधर्म्मधातु ज्ञानगर्भ आः इति मन्त्रे-

[1] From हृदयपद्म०......०मक्षोभ्यमौलिनमात्मानं विचिन्त्य is found only in A and C.

[2] A दक्षिणेऽस्य।

[3] A च मुष्टि०।

[4] A पुष्पादिभिः।

[5] AC विचिन्त्य।

आदिमध्यावसानाधिष्ठानपूर्व्वकं नामसङ्गीतिं[1] प्रत्यहं प्रतिसन्ध्यं त्रीन् वारान् एकवारं वा पर्य्यङ्कमभिनन्दन् समाहितः सन् पठेत्। एवं तावत् पठेद् यावत् [2]सिद्धिनिमित्तानि न पश्यति। तदनन्तरं यथातत्त्वं सिद्धेरुपायमनुतिष्ठेदिति।

॥ आर्य्यनामसङ्गीतिसाधनं समाप्तम् ॥

---

83.

नमः श्रीमञ्जुवज्राय।

भूत्वा श्रीमञ्जुवज्रोऽहं कुर्य्यां सर्व्वार्थसम्पदम्।
सत्त्वानां भ्रमदृष्टीनामित्यादौ परिभावयेत्॥
हृच्चन्द्रे [3]न्यस्य मन्तत्त्वं पूजयित्वाऽभिवन्द्य च।
गुरुं सम्बुद्धसन्मूर्त्तिं गच्छेत् त्रिशरणादिकम्॥
रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम्।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः॥
स्वभावाभावतः शून्यं [4]निर्निमित्तमहेतुकम्।
प्रणिधिरहितं सर्व्वं वस्तुहापगमात्मतम्॥
ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्।

---

[1] A reads भट्टारिकां after ॰सङ्गीतिं।
[2] A सिद्ध॰।
[3] A न्यस्तमन्त्रेभ्यः।
[4] A वनि॰।

त्र्यस्रं[1] शुक्लोच्चसंस्थानं विश्वाब्जवज्रमध्यगे ।
चैत्यं विभाव्य सम्बुद्धं वज्रसत्त्वं सविद्यकम् ॥

प्रवेश्यास्येन [2]तस्यैव स्वचित्तं वज्रनिर्गतम् ।
त्र्यक्षरीभूत[3]मब्जे तु होःकारद्वयरञ्जितम् ॥

तत्प्रभाभिस्तु तत्कायं विलीनं चिन्तयेत् ततः ।
चन्द्रारुणरसावेश[4]मललादिषु संभृतम् ॥

स्थगितसर्व्वदिग्देव्यश्चोदनागीतितत्पराः ।
उत्थानाय विचिन्त्यात्मजगत्सौख्यप्रसिद्धये ॥

त्वं वज्रचित्त भुवनेश्वर सत्त्वधातो
त्रायाहि मां रतिमनोज्ञमहार्थकामैः ।
कामाहि मां जनकसत्त्व महाग्रबन्धो
यदीच्छसे जीवितं मञ्जुनाथ ॥

त्वं वज्रकाय बहुसत्त्वप्रियाङ्कचक्र
बुद्धार्थबो[5]धि परमार्थहितानुदर्शी ।
रागेन रागसमयं मम कामयस्व
यदीच्छसे जीवितं मञ्जुनाथ ॥

[6]त्वं वज्रवाच सकलस्य हितानुकम्पी
लोकार्थकार्य्यकरणे सदा सम्प्रवृत्तः ।
कामाहि मां सुरतचर्य्य समन्तभद्र
यदीच्छसे जीवितं मञ्जुनाथ ॥

---

[1] A त्र्यश्रं, N त्र्यग्रं ।
[2] A न तस्य ।
[3] A ॰मब्जन्तु ।
[4] N ॰कलला॰ ।
[5] A ॰परार्थ॰ ।
[6] This *Śloka* is dropped in A.

एवं वज्रकाय समयाग्र महाहितार्थे
सम्बोधिवंशतिलकः समतानुकम्पी ।
कामाहि मां गुणनिधिं बहुरत्नभूतं
यदीच्छसे जीवितं मञ्जुनाथ ॥

ततोऽपि भगवन्तं तद्देवीगीत्यनुरोधतः ।
मायावद्वस्तु संचिन्त्य मन्त्रार्थं[च] विभावयेत् ॥
स्फुरद्बुद्धौघनिर्म्माणप्रसाधितजगत्त्रयः ।
स्वतत्त्वोद्भव[1]चिह्नोत्थमञ्जुवज्रः स्वयं भवेत् ॥
कुङ्कुमारुणसंमूर्त्तिर्नीलसितत्रयाननः ।
भुजद्वयसमाश्लिष्टस्वाभविद्याधरास्यधृक् ॥
खड्गबाणभुजश्चापनीलोत्पलपरिग्रहः ।
विश्वदलाब्जचन्द्रस्थो वज्रासनशशिप्रभः ॥
भवसङ्गाद् हि संसारः सम[2]सङ्गो विरागकृत् ।
श्रीमञ्जुवज्रसर्व्वात्मा सर्व्वां मायां विचिन्तयेत् ॥

ॐ धर्म्मधातुस्वभावात्मकोऽहम् ।

ततः प्रवेशयेद् बीजैश्चक्षुरादिषु सत्प्रभैः ।
क्षिँ[3] यँ खँ स्कँमित्येभिः सञ्जीवार्थोपसाधनम् ॥
क्षितीशकुलिशाकाशलोकेशस्कम्भिभद्रकान् ।
यद्वज्रायतनान्येव सौरिणां मण्डलं स्थितम् ॥
स्वशिरः[4]कण्ठहृच्चन्द्रे ॐ आः हुँ मन्त्रसत्प्रभैः ।
कायवाक्चित्तवज्रैस्तु मन्त्राधिपति[5]भावनम् ॥

---

[1] A ०चिह्नार्थं ।
[2] C सङ्गे ।
[3] AN क्रूँ ।
[4] A ०कण्ठचन्द्र० ।
[5] AN साधनं ।

ॐ सर्व्वतथागतकायवज्रस्वभावात्मकोऽहम्, ॐ सर्व्व-तथागतवाग्वज्रस्वभावात्मकोऽहम्, ॐ सर्व्वतथागतचित्त-वज्रस्वभावात्मकोऽहम् ।

त्रिवज्रलक्षणं वीक्ष्य हृज्ज्ञानसत्त्वबीजतः ।
सर्व्वाशावर्त्तिसम्बुद्धविद्यार्चिःकुलसेक[1]भृत् ॥

चक्षुःकायाद्यधिष्ठानस्वमन्त्रोद्भवभासिनीम् ।
शिरोहृन्नाभिगुह्ये स्वगे कायादिवज्रिभिः ॥

पश्येद् ॐहुमिति स्वाआहाख्यैः[2] पञ्चाङ्गसत्प्रभाम् ।
कायेशाक्षोभ्यरत्नेशामिताभामोघसिद्धिभिः[3] ॥

[4]वज्राब्जयोगसम्भूतान् सर्व्वदिग्भ्यः सुसंस्थितान् ।
संबुद्धान् संजपेद् योगी रूपवज्रादिभिस्तथा ॥

ॐ सर्व्वतथागतपूजावज्रस्वभावात्मकोऽहम्, ॐ सर्व्व-तथागतानुरागेण वज्रस्वभावात्मकोऽहम् ॥

[5]सर्व्वधर्म्मैस्तु यं देवं प्रतिशब्दसुशब्दकैः ।
स्वाहङ्कारपरावेशे स्वमनोऽधिपदैवतम् ॥

नमस्ते वरदवज्राग्र भूतकोटि नमोऽस्तु ते ।
नमस्ते शून्यतागर्भ बुद्धबोधि नमोऽस्तु ते ॥

बुद्धराग नमस्तेऽस्तु बुद्धकाय नमो नमः ।
बुद्धप्रीति नमस्तुभ्यं बुद्धमोद नमो नमः ॥

---

[1] N ०सैक० ।

[2] A स्वत्माख्यैः ।

[3] A कायेना० ।

[4] वज्राब्ज०......०भावात्मकोऽहं is found only in C.

[5] A omits सर्व्वधर्म्मैस्तु......बुद्धकाय नमो नमः ।

बुद्धस्मित नमस्तुभ्यं बुद्धहास नमो नमः ।
बुद्धवाच नमस्तेऽस्तु बुद्धभाव नमो नमः ॥
अभवोद्भव नमस्तेऽस्तु नमस्ते बुद्धसम्भव ।
गगनोद्भव नमस्तुभ्यं नमस्ते ज्ञानसम्भव ॥
मायाजाल नमस्तुभ्यं नमस्ते बुद्धनाटक ।
नमस्ते सर्व्वसार्व्वेभ्यो ज्ञानकाय नमोऽस्तु ते ॥
विश्वमारविदन्यच्च दहनं सोक्तपञ्चकम् ।
अक्षरैरमृतं भुक्तं कायवाक्चित्तशुद्धिकृत् ॥
हेतुशक्तिरचिन्त्या हि रागादिविगत[1]भ्रमः ।
एषैव च परैर्बोधिं प्राप्नोति हि जगौ मुनिः ॥
[2]अक्षरान्तर्गतं मन्त्रं स्फुरत्कायादिवर्ज्जिभिः ।
आकाशं व्याप्य मन्त्रान्ते संहरंस्तं जपेत् सुधीः ॥
एवं जपन् खेदे तु मूर्ध्नीन्दौ प्रणवार्द्रतः ।
आप्यायने प्रयात्याथ बोधिचित्तं जपेत् पुनः ॥
स्वप्नमायादिवत् सर्व्वं सर्व्वं कार्य्यं जगद्धितम् ।
मञ्जुवज्रत्वनिष्पत्तौ भावयेदनिशं प्रभुम् ॥
कृतपूजादिको मन्त्री सज्जने जातसस्पृहः ।
अक्षराहितसम्बुद्धं ध्यायात् कायादिकल्पितम् ॥
प्रज्ञोपायात्मकं तत्त्वं जगद्देतेन वञ्चितम् ।
जगतस्तत्त्वनिष्पत्तौ प्रणिधानं तु दृंहयेत् ॥
श्रीमतो मञ्जुवज्रस्य भावनात्तशुभादतः ।
मञ्जुश्रीज्ञानकायः स्यां जगत्सर्व्वभूतप्रदः ॥

---

[1] A रागादिवप्रतं, C रोगादिवेप्रतः ।
[2] A अच्चरा० ।

यदा च द्रष्टुकामः स्यां प्रष्टु[1]कामश्च किञ्चन ।
तमेव नाथं पश्येयं मञ्जुनाथमविघ्नतः ॥

दशदिग्व्योमपर्य्यन्तं[2] सर्व्वसत्त्वार्थसाधने ।
यथा चरति मञ्जुश्रीः सैव चर्य्या भवेन्मम ॥

यावती प्रथमा कोटिः संसारस्यान्तवर्ज्जिता ।
भावयन् सत्त्वहितायैव चरिष्याम्यमृताक्षरीम्[3] ॥

यावन्तः सर्व्वबुद्धा वै निर्वृता लोकबान्धवाः ।
तेषां च शासनार्थं तु चरिष्यामि युगे युगे ॥

बालदारकरूपेण विचरिष्यामि सर्व्वतः ।
मन्त्ररूपेण सत्त्वानां विनश्यामि तदा तदा ॥

व्युत्थाय मञ्जुनाथस्य वहन् गर्वं समाहितः ।
सर्व्वदैवतरूपांस्तु विषयानुपान्तं जपेत् ॥

शुद्धेन्द्रियप्रयोगेन त्रिमुखान् षड्भुजांस्तथा ।
चक्रवज्रमहारत्नपद्मखड्गधरायुधान् ॥

रूपशब्दमहागन्धरसस्पृष्टव्यधार्म्मिकान् ।
कायकुलिशरत्नेशामिताभामोघभावजान् ॥

पञ्चविषयरूपांस्तु सर्व्वबुद्धावबोधतः ।
स्वाधिदैवतयोगेन स्वपरांश्चैव पूजयेत् ॥

भोजनं शयनं स्नानमासनं स्थानमेव च ।
स्वाधिदैवतयोगेन सर्व्वमेवं प्रकल्पयेत् ॥

---

[1] A ०कायस्य । [2] A पर्य्यन्त० ।
[3] A चरिष्यस्यमृताक्षरी, N चरिष्यामि मृताक्षरीं ।

संक्षेपाच्चतुरङ्गस्य लिखितार्थसुभाषितः ।
मञ्जुवज्रोऽस्तु लोकोऽयं स स्यात् सौख्यफलप्रदः ॥

[1]भावनाखिन्नो मन्त्रं जपेत् ॐ वाक्येदं नमः। उपहृदयं वा जपेत् ॐ ह्रीँ हुँ ।

॥ इति मञ्जुवज्रसाधनम् ॥

## 84.

नमो मञ्जुनाथाय ।

[2]ह्रीँ नाम सर्व्वकार्य्यसमर्थः परमगुह्यतमः सार्व्वकर्म्मिक एकाक्षरो नाम विद्याराजोऽनतिक्रमणीयः सर्व्वसत्त्वानां, अधृष्यः सर्व्वसत्त्वानां, मङ्गलः सर्व्वसत्त्वानां, साधकः सर्व्व[3]मन्त्राणां, प्रभुः सर्व्वलोकानां, ईश्वरः सर्व्ववित्तेश्वराणां, मैत्र्यात्मकः सर्व्व[4]विद्विष्टानां, कारुणिकः सर्व्वजन्तूनां, नाशकः सर्व्व[5]विघ्नानाम् । संक्षेपतो यथा यथा प्रयुज्यते तथा तथा करोति। असाधितोऽपि सर्व्वकर्म्माणि करोति। मन्त्रं जपन् यं स्पृशति स वशो भवति। वस्त्रमभिमन्त्र्य प्रावरेत् सुभगो भवति। दन्तकाष्ठमभिमन्त्र्य भक्षयेद् दन्तशूलमपनयति। श्वेतकरवीरकाष्ठं सप्त वारानभिमन्त्र्य भक्षयेत् अप्रार्थित[6]मनुलभ्यते। अक्षिशूले

---

[1] This prose portion is found only in Na.
[2] Na श्रौं ।
[3] A ०कर्म्मणां ।
[4] ANa ०निर्द्विष्टानां ।
[5] A ०विद्यानां ।
[6] AN ०मन्नं लभेत् ।

सैन्धवं चूर्णयित्वा सप्त वारानभिमन्त्र्य अक्षि पूरयेत्, अक्षि-शूलमपनयति। गजविष्ठोत्थितगर्ज्जनसम्भवां छत्रिकायां किंशुकपत्रं बद्धा मृदग्निना पक्वां शुष्कलापितां सुखोष्णां सैन्धवचूर्णतां कृत्वा सप्त वारानभिमन्त्र्य कर्णौ पूरयेत् तत्क्षणादुपशमयति। प्रसवनकाले स्त्रिया गूढगर्भायाः शूलादिभूताया आटरुषमूलं निष्प्राणकोदकेन पिष्ट्वा नाभिदेशे लेपयेत् सुखेन प्रसवति। कष्टशल्यं वा पुरुषं पुराणघृतमष्टशतवारानभिमन्त्र्य पाययेत् लेपयेच्च तत्प्रदेशं तत्क्षणादेव निःशल्यं करोति। अजीर्णविसूचिकातिसारे शूले च सौवर्चलं वा लवणं सप्त वारानभिमन्त्र्य भक्षयेत् तस्माद् व्याधितो(धीन) मुच्यते, तदहनि स्वस्थो भवति। प्रसवधर्म्मिण्याः प्रसवकाङ्क्षिण्या अश्वगन्धामूलं गव्यक्षीरेण पिष्ट्वा आलोड्य पञ्चविंशतिजप्तेन ऋतुकाले पाययेत् पर-दारवर्जितेन स्वपत्नीमभिगम्येत, जनयति सुतम्। एका-हिकद्व्यहिकत्र्यहिकचातुर्थकसततनित्यज्वरेषु पायसं घृत-संयुक्तं अष्टशतमन्त्रितं भक्षयेत् स्वस्थो भवति। डाकिनीग्रह-गृहीतेषु आत्ममुखं अष्टशताभिमन्त्रितं कृत्वा निरीक्षयेत् स्वस्थो भवति। बालमातरं पूतन[3]वेतालकुमारग्रहादिषु सर्व्वमानुषदुष्ट[5]वारुणगृहीतेषु आत्मनो हस्तमष्टशता[6]भि-मन्त्रितं कृत्वा गृहीतमस्तकं स्पृशेत्, स्वस्थो भवति। एक-जप्तेनात्मरक्षा, द्विजप्तेन महारक्षा, त्रिजप्तेन गृहरक्षा, चतुर्जप्तेन ग्रामरक्षा, पञ्चजप्तेन नगररक्षा, एवं यावत्

[1] A आढ़रूष०। [2] AC शल्यं।
[3] Na ०मातल०। [4] A पुतेन, Na पुत्तनि।
[5] AC ०दारुण०। [6] A हस्तशत०।

षड्जातेन कटकचक्ररक्षा कृता भवति। एतानि चापराणि क्षुद्रकर्माण्यनुक्तान्यपि करोति। अनेनैव मन्त्रेण स्त्रीः प्रदरादि[1]रोगेषु अलम्बुषमूलं क्षीरेण पिष्ट्वा अष्टशताभिमन्त्रितं कृत्वा क्षीरेणालोड्य पिबेत् स्वस्था भवतीति।

तान्तरान्तममायुक्तसान्तामौस्वरशोभिताम् ।
इन्दर्द्धबिन्दुनाऽऽक्रान्तलिपिं दृष्ट्वा जपेद् गुरौ ॥

॥ एकाक्षरकल्पकतिपयप्रयोगः समाप्तः ॥

85.

नमो बुद्धाय ।

अवनिनिहितजानुः सव्यहस्तैकखड्गः
तदितरकरमुष्टौ तर्ज्जनीसक्तपाशः ।
निविडघनशरीरश्चण्डरुक् चण्डचक्षुः
शमयतु भवविघ्नं विघ्नहन्ताचलोऽयम् ॥

दशदिक्षु स्थिता बुद्धा बोधिसत्त्वाश्च नायकाः ।
तेभ्यो नानाविधां पूजां कृत्वा पुष्पादिभिर्धिया ॥

सन्त्रस्तान् दुःखितान् दृष्ट्वा प्रयच्छेदात्मविग्रहम् ।
मन्त्री शुभाभिवृद्ध्यर्थं कुर्य्यात् [2]पापस्य देशनाम् ॥

ततोऽनुमोद्य सम्बुद्धबोधिसत्त्वगणस्य च ।
शैक्षाशैक्षादिसत्त्वानां कृत्स्नं पुण्यं स्वभावतः ॥

---

[1] A पुरदादि० ।    [2] ABa पुण्यदेशनां ।

चिरत्नशरणापन्नः सम्बोधौ दृढनिश्चयः ।
[1]भावयेच्चतुरो ब्रह्मविहारांस्तु यथाक्रमम् ॥
शून्यांस्तल्लक्षणायोगादनिमित्तानहेतुतः ।
प्रणिधानविनिर्[2]मुक्तान् भावान् भावाद् विभावयेत् ॥
विश्वाब्जसूर्य्यमध्यस्थं ध्यायात् हुँकारसम्भवम् ।
रक्तचक्षुर्द्वयं वीरं द्विभुजं रत्नमौलिनम् ॥
सद्यः पापहरं नाथं यथेच्छापरिपूरकम् ।
अतसीपुष्पसङ्काशं [3]स्फुरद्बुद्धांशुनिर्म्मलम् ॥
निष्पीड्यमानदंष्ट्रोष्ठं सर्व्वाभरणभूषितम् ।
वामे तर्ज्जनिकापाशं[4] भूमावारूढजानुकम् ॥
खड्गव्यग्रोग्रहस्तं च [5]श्रीमहाचण्डरोषणम् ।
केकराक्षं महाघोरं भयस्यापि भयङ्करम् ॥
समयसत्त्ववद् ध्यायात् ज्ञानसत्त्वं महोज्ज्वलम् ।
तस्यैव हृदये मन्त्री बीजं चिह्नसमन्वितम् ॥
ध्यानात् खिन्नो जपेन्मन्त्रं देवताकारयोगतः ।
ततो विवक्षितां सिद्धिं प्राप्नोत्येव न संशयः ॥

तत्रायं मन्त्रराजः ॐ चण्डमहारोषण हुँ फट् । अयं मन्त्रराजः सकृदुच्चारितः सर्व्वपापानि निर्द्दहति, सर्व्वत्र रक्षामावहति । माषादिभिस्ताडयन् भूतादि[6]भयमपहरति । [7]शरावे [8]खटिकयाऽभिलिख्य द्वारे लम्बायेत्[9] ।

---

[1] ABa अभाव० ।
[2] A मुक्ताल०, Ba मुक्तल० ।
[3] A स्फुरद्बुद्धं सुनिर्म्मलं ।
[4] A ०योगं ।
[5] B श्रीचण्डमहा० ।
[6] A ०भयं हरति ।
[7] A आगमशरावे, N आमशरावे ।
[8] BCBa खटिकया ।
[9] Ba बन्धयेत् ।

[illegible]प्रसूतानां बालानां रक्षां करोति। मदनेन पुत्तलिकां कृत्वा चतुरङ्गुलप्रमाणतः तस्या हृदये साध्यनामसहितं भूर्ज्जमन्त्रमभिलिख्य प्रक्षिपेत्। कण्टकेन[1] तु तस्या मुखं कीलयेत्, प्रतिवादिमुखं कीलितं[2] भवति। पादौ कीलयेत्, गतिं स्तम्भयेत्। हृदयं कीलयेत्, रोषं स्तम्भयति। मानुषजङ्घास्थिकीलकेन लोहकीलकेन वा नाम गृहीत्वा यान्यङ्गानि कीलयेत् तानि [3]तस्य नश्यन्ति। अरिद्वारे निखनेदुच्चाटयेत् अभिमन्त्रितश्मशानभस्मना द्वार[4]पटे निक्षिप्तेनोच्चाटयति। खड्गमभिमन्त्र्य संग्रामे प्रविशन् जयमासादयति। यस्मिन् कार्य्ये समुत्पन्ने बलिमुपसंहरेत् तत्, तस्य सिध्यति। यद् यदिच्छति मन्त्री तत् सर्व्वं शुभमशुभं वा कर्म्म करोति जपमात्रेण।

लिखनाद् यन्मयाऽवाप्तं शुभं सत्त्वार्थ[5]साधकम्।
तेनायं निखिलो लोको भूयात् सम्बोधिभाजनम्॥

॥ चण्डमहारोषणसाधनं सकल्पं[6] समाप्तम्।
। कृतिरियं प्रभाकरकीर्त्तेः॥

---

[1] ABa कङ्कणेन।
[2] Ba कालितं।
[3] Ba stops abruptly here.
[4] ANC ॰पटले।
[5] A सत्वात्त।
[6] A सङ्कल्पं।

86.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं सितपद्मोपरि सूर्य्ये कृष्णहुँकारपरिणतं श्रीचण्डमहारोषणं भगवन्तमतसीपुष्पसङ्काशम[1]चलापरनामानं एकमुखं द्विभुजं केकराक्षं दंष्ट्राविकरालमहाघोरवदनं रत्नमौलिनं दंष्ट्रानिपीडिताधरं मुण्डमालाशिरस्कमारक्तचक्षुर्द्वयं दक्षिणे खड्गधरं तर्ज्जनीपाशहृदयस्थवामकरं सितसर्पयज्ञोपवीतं व्याघ्रचर्म्मनिवसनं नानारत्नविरचिताभरणं भूमिलग्नवामचरणमीषदुन्नतदक्षिणचरणं सूर्य्यप्रभामालिनमात्मानं विचिन्त्य समयसत्त्वं ज्ञानसत्त्वभावनापूर्व्वकमक्षोभ्यमुकुटिनं ध्यायात्। तदनु [2]जापमन्त्रः ॐ चण्डमहारोषण हुँ फट्।

॥ चण्डमहारोषणसाधनम् ॥

---

87.

योगी क्वचिन्मनोऽनुकूले स्थाने सुखासनोपविष्टः स्वहृदये सूर्य्यमण्डलोपरि कृष्णहुँकारं पश्येत्। तद्रश्म्याकृष्टगुरुबुद्धबोधिसत्त्वान् आकाशे व्यवलोकयेत्। ततस्तान् हुँकाररश्मिविनिर्गतपुष्पादिपञ्चोपचारेण सम्पूज्य तदग्रे पापदेशनापुण्यानुमोदनापुण्यपरिणामनादिकं कुर्य्यात्। ततो मैत्रीं सर्वसत्वेष्वेकपुत्र[3]प्रेमतालक्षणां, करुणां दुःखाद् दुःखहेतोः समुद्धरणकामतां, मुदितां प्रमोद-

---

[1] A ०नलापर०।   [2] B जापः।
[3] A ०प्रेमपुत्रसतालक्षणां।

रुणां, उपेक्षां असद्वासङ्गपरिहानिस्वभावां भावयेत्। ततः शून्यं त्रैधातुकमवलोक्य अनेन मन्त्रेणाधितिष्ठेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततोऽन्तरीक्षे पद्मोपरि सूर्यमण्डलस्थं हुँकारसम्भवं खड्गं हुंकाराधिष्ठित-मुष्टितमुष्टिकं परिणाम्यात्मानं चण्डाचलरूपनिष्पन्नं पश्येत्। स्फुरद्वर्त्तुलरक्तप्रचण्डचक्षुषं प्रविकटभृकुटीललाट-तटं निष्पीडितदन्तौष्ठं क्षोणीविन्यस्तवामजानुं दक्षिण-चरणाक्रान्तदुर्व्वारमारं खड्गव्यग्रोग्रदक्षिणपाणिं त्रिभवभय-हरतर्ज्जनीमुष्टिपाशं इन्द्रनीलसमद्युतिं ज्वलदनलमहा-चण्डरोषं हृद्वीजरश्मिसमाकृष्टज्ञानसत्त्वं समयसत्त्वे प्रवेश्य अभिषेकं गृह्णीयात्। अभिषेकानन्तरं शिरसि अक्षोभ्यं पश्येत्। ततो भावनया खिन्नो मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ चण्डमहारोषण हुँ फट्।

॥ [ चण्डमहारोषणसाधनम् ] ॥

---

88.

क्वचिन्मनोऽनुकूले स्थाने सुखासनासीनः स्वहृदये अष्टदलकमलोपरि सूर्यमण्डले कृष्णहुँकारं[1] विचिन्त्य तद्रश्मिनाऽऽकाशदेशे गुरुबुद्धबोधिसत्त्वान् वक्ष्यमाणचण्ड-महारोषणमानीय सम्पूज्य पापदेशनाऽकरणसंवरत्रिशरण-गमनपुण्यानुमोदनाऽऽत्मनिर्य्यातनाबोधिचित्तोत्पादना-दिकं कृत्वा मैत्रीकरुणामुदितोपेक्षाचतुर्ब्रह्मविहारान्

---

[1] A °मण्डलं ऊकारं।

भावयित्वा [1]जगदिदं निःस्वभावस्वभावं ग्राह्यग्राहकविनिर्मुक्तं स्वप्नमायोपमं बुद्धा[2] शून्यतां विभावयेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। तदनु अमलगगनाङ्गने अष्टदलकमलोपरि सूर्य्यमण्डले कृष्णहुँकारज[3]अमुष्मिन् हुँकारं तद्रश्मिभिः सकलबुद्धसन्दोहमानीय हुँकारे प्रवेश्य ततो हुँकारसम्भवमनल्पकल्पानलज्वालामालाकुलं दुर्व्वारमारविध्वंसिनं महानीलजीमूतसङ्काशदेहं विविधाभरणरत्नविभूषितं रत्नसम्बद्धमौलिस्फुरत्पञ्चचीरकुमारं कराल[4]समुल्लसत्कुन्दसङ्काशदन्तौ[5]ष्ठपीडनाद् दुष्टसन्त्रासबीभत्सरूपश्रियं भृकुटीदन्तुरनिरीक्षणं युगपत् पातालसन्दर्शितनेत्रद्वयं मेदिनीमण्डलारूढसव्यैकजानुं अरविन्दस्थसूर्य्यासनासीनवामाङ्घ्रिणोत्थातुकामं दक्षिणपाणौ हुँकारगर्भज्वलन्नीलखड्गं वाममुष्टौ तर्ज्जनीतर्ज्जितव्याकुलानेक[6]हरिहरहिरण्यगर्भादिक्लेशदुष्टन्दारि बन्धनाय[7] वज्राङ्कितसुवर्णपाशं जगद्वाञ्छितानन्तसम्पत्तिदानैकरक्तं श्रीचण्डमहारोषणं भावयेत्। महाक्रोधराजानन्तरं भगवतो हृदि पद्मसूर्य्यस्थहुँकारसम्भवाङ्कित[8]गर्भखड्गं परिणम्य हुँकारजद्वितीयं चण्डमहारोषणं हृदयान्तर्गतभगवन्तं चिन्तयेत्। तस्यापि हृदये पद्मसूर्य्यस्थं [9]हुँकारजातकृष्णतदङ्कितगर्भखड्गं तद्रश्मिसमाकृष्टं ज्ञानसत्त्वं समयसत्त्ववद् दृष्ट्वा जःकारेणानयेत् आचमनप्रोक्षणादिकं

---

[1] A जगदिःस्वभाव०।

[2] C संबुद्धा।

[3] A ऊँकारज०।

[4] A ०समुल्लस०।

[5] A ०दंष्ट्रो०।

[6] A ०व्याकुलीनैक०।

[7] AC ०वन्दनाय।

[8] A ०गर्त्त०।

[9] AC ऊँजात०।

[illegible] हुँकारेण तत्रैव प्रवेशयेत्, वँकारेण बन्धयेत्, [illegible]कारेण तोषयेत्। पयसि पय इव एकीभूतं नायकं [illegible]येत्। भगवतः चक्षुःश्रोत्रयोर्नासापुटयोर्मुखशिरसि [illegible] यथायोगं वैरोचनाक्षोभ्यरत्नसम्भवामिताभामोघसिद्धिं नैरात्म्यां षडङ्गेषु न्यसेत्। हृदयस्थितहुँकारान्निर्गतपञ्चतथागतदेवीगणं रश्मिभिरानीय पञ्चामृतपूर्णकुम्भैः स्नापयित्वा मौलौ अक्षोभ्यं देवीभिर्नानाविधनृत्यवाद्यादिविविधपूजादिभिरानन्दयेत्। ततो भगवान् परार्थोद्यतः सर्व्वसत्त्वान् रागद्वेषमोहादिभिः हरिहरहिरण्यगर्भकन्दर्पादिभि र्महामोहजालैर्[1]महाद्वेषजालैर्महारागजालैरविद्यान्धकारेण[3] भवचक्रे भ्राम्यतस्तान् पश्येत्। ततो हृन्मन्त्रस्फुरितैर्महाक्रोध[2]राजैरनेकस्थान् मारवृन्दान् ससैन्यान् दिगम्बरान् मुक्तकेशान् क्रन्दमानान् अत्राणान् वज्रपाशेन बद्ध्वाऽऽनीय विध्वस्य विचूर्ण्य तीक्ष्णेन खड्गेन छित्त्वा मैत्रीचित्तेन पुनर्निर्माय धर्म्मे विनेतुं स्वपदान्तिके स्थापयेत्। ध्यानात् खिन्नो मन्त्रं जपेत्। चित्तं भ्रुवो[4]रन्तराले समारोप्य विश्वैकतत्त्वमूर्त्तिर्महा[5]चण्डमहारोषणनाथस्य मन्त्रजपमात्रेण दुर्दान्त[6]दान्तिं जगद्वश्यशान्तिं रक्षणं वर्द्धनं तुष्टिं पुष्टिं तथोच्चाटनाकर्षणमारणत्रासनं सर्व्वकर्म्म कुर्व्वीत। ॐ चण्डमहारोषण हुँ फट्।

॥ इति चण्डमहारोषणसाधनं समाप्तम् ॥

---

[1] A °र्महाजालै°।

[2] °क्रोध° dropped in A.

[3] A विषिचत्रेण।

[4] A भुवो°।

[5] A °चण्डरोषण°।

[6] AN °दन्तिं।

## 89.

नमस्तारायै ।

पूर्व्ववच्छून्यतापर्य्यन्तं विभाव्य पद्मचन्द्रे ताँबीजपरिणतेन्दीवरं ताँबीजगर्भं, तत्परिनिष्पन्नां हरिताममोघसिद्धिमकुटीं[1] वरदोत्पलधारिदक्षिणवाम[2]करां अशोककान्तामारीच्येकजटाव्यग्र[3]दक्षिणवामदिग्भागां दिव्यकुमारी[4]मलङ्कारवतीं ध्यात्वा ज्ञानसत्त्वेन सहैकीकृत्य ॐ तारे तुत्तारे[5] तुरे स्वाहा इति मन्त्रं जप्त्वा तन्मनसैव यथेष्टं विहरेत् ।

॥ इत्यार्य्यखदिरवणी[6]तारासाधनम् ॥

---

## 90.

नमस्तारायै ।

प्रथमं स्वहृदीन्दुमध्यस्थताँबीजविनिर्गतरश्मिभिर्निष्पन्नान् गुरुबुद्धबोधिसत्त्वान् ध्यायात् । तांश्च बाह्याध्यात्म्यपूजाभिः सम्पूज्य तदग्रे सप्तविधानुत्तरपूजां कुर्य्यात् । ततः शून्यतां विभाव्य ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्युच्चारयेत् । ततश्चन्द्रे ताँसम्भूतां सितोत्पलस्थताँकारोद्भूतां तारां श्यामां द्विभुजां दक्षिणे वरदां वामे सनालेन्दीवरधरां सर्व्वाभरणभूषितां पद्म-चन्द्रासने

[1] B ०मकुटां ।
[2] वाम० dropped in A.
[3] A व्यग्रह० ।
[4] A ०रीं साल० ।
[5] A ०तुतारे० ।
[6] Ab ०खदिरतारा०, A खदिरवनी ।

पर्य्यङ्कनिषसां चिन्तयेत्। समयमुद्रां बन्धयेत्। [1]हस्त-द्वयेन सम्पुटाञ्जलिं कृत्वा तर्ज्जनीद्वयेन मध्यमे पिधा-नाङ्गुष्ठयुगलमे[2] विकचोत्पलमुद्रा। ततः ॐ तारे तुत्तारे तुरे स्वाहा इति मन्त्रं जपेत्।

॥ महत्तरीतारासाधनं समाप्तम् ॥

---

91.

नमस्तारायै।

पूर्व्ववत् शून्यतापर्य्यन्तं विभाव्य पँकारजविश्वकमल-मध्ये अकारजचन्द्रे श्यामताँकारजां तारां श्यामवर्णां सर्व्वालङ्कारधरां वामे नीलोत्पलवतीं दक्षिणे वरदां अर्द्धपर्य्यङ्कनिषस्मां दक्षिणपार्श्वे अशोककान्तां पीतां नाना-रत्नमकुटां वामदक्षिणहस्तयोरशोकपल्लवकुलिशधरां तथा महामायूरीं पीतां वामेतरकरयोर्मयूरपिच्छिकाचामर-धारिणीं वामपार्श्वे एकजटां[3] खर्व्वां कृष्णां व्याघ्राजिनधरां त्रिनेत्रां दंष्ट्राकरालवदनां ज्वलत्पिङ्गलो[4]र्द्धकेशां कर्त्रि-कपालधारिणीं तथा आर्य्यजाङ्गुलीं श्यामां वामदक्षिण-हस्तयोः कृष्णोरगचामरधारिणीं विभावयेत्। एवं च ध्यानात्[5] खिन्नो मन्त्रं जपेत्। ॐ तारे तुत्तारे तुरे स्वाहा।

॥ इति [6]वरदतारासाधनं समाप्तम् ॥

---

[1] हस्तद्वयेन found only in Ab.
[2] ANC ०ङ्गुष्ठावलम्बौ।
[3] AC एकजटां।
[4] AbBa ०पिङ्गो०।
[5] N व्याख्यानात्।
[6] Ab तारा०।

92.

ताँकारजं ताँकारा[1]क्रान्तमध्यमिन्दीवरं ध्यात्वा तत्परिणतामार्य्यतारां श्यामवर्णां वामेनोत्पलधरां दक्षिणे वरदां भद्रासन[2]स्थिताममोघसिद्धिमकुटीं ध्यात्वा ज्ञान-सत्त्वेनैकीकृत्य ॐ तारे तुत्तारे तुरे अमुकं अमुकीं वा वशमानय स्वाहा इति साध्यनामसहितमनन्तरोक्तेन संख्यानियमेन जपेत्। शरादिचिह्नाभावेऽपि साध्यं गल-मुत्पलेन बद्धा स्वशरीरारुणकिरणमञ्चर्यैस्तच्छरीरमापूर्य्य स्ववशे स्थापयेदिति।

॥ [3]वश्याधिकारतारासाधनं समाप्तम् ॥

93.

नमो वज्रतारायै।

अथातः सम्प्रवक्ष्यामि वज्रताराप्रसाधनम्।
होमकर्मविधानेन सर्व्वकामार्थसाधकम्॥

तत्रेमानि मन्त्रपदानि भवन्ति— नम आर्य्यावलोकि-तेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ तारे तुत्तारे तुरे सर्व्वदुष्टप्रदुष्टान् मम कृते जम्भय स्तम्भय मोहय बन्धय हुँ हुँ हुँ [6]फट् फट् फट् सर्व्वदुष्ट[7]स्तम्भनि तारे स्वाहा।

[1] A तारा०।
[2] Ab ०स्याम०।
[3] CAb omits.
[4] A ०गता०।
[5] ANC वश्यतारा०, Ab आर्य्यतारा०, B तारा०।
[6] AC फट् only.
[7] A स्तम्भता०।

मातृमण्डलमध्यस्थां तारादेवीं विभावयेत् ।
अष्टबाहुं चतुर्वक्त्रां सर्व्वालङ्कारभूषिताम् ॥
कनकवर्णनिभां भव्यां कुमारीलक्षणोज्ज्वलाम् ।
पञ्चबुद्धमहामकुटीं वज्रसत्त्व्याभिषेकजाम् ॥
नवयौवनलावण्यां चलत्कनककुण्डलाम् ।
विश्वपद्मसमासीनां रक्तप्रभाविभूषिताम् ॥
वज्रपाश[1] तथाशङ्खसच्छरोद्यतदक्षिणाम् ।
वज्राङ्कुशोत्पलधनुस्तर्ज्जनीवामधारिणीम् ।
वज्रपर्य्यङ्कयोगेन साधयेद् भुवनत्रयम् ॥
पूर्व्वेण पुष्पतारां तु सितवर्णां मनोरमाम्[2] ।
ॐकाराक्षरनिष्पन्नां पुष्पदामकराकुलाम् ॥
द्विभुजामेकवक्त्रां च सर्व्वालङ्कारभूषिताम् ।
दक्षिणे धूपतारां तु कृष्णवर्णां सुरूपिणीम्[3] ॥
धूपशाखाकरव्यग्रां सर्व्वालङ्कारभूषिताम् ।
पश्चिमे [4]दीपतारां च दीपयष्टिकराकुलाम्[5] ॥
पीतवर्णां महाभूषां चलत्कनककुण्डलाम् ।
उत्तरे गन्धतारां तु गन्धशङ्खकराकुलाम् ॥
रक्तवर्णनिभां देवीं भावयेद् गर्भमण्डले ।
द्वारपालीस्ततो ध्यायादङ्कुश्यादिप्रभेदतः ॥

पूर्व्वद्वारे वज्राङ्कुशीमेकवक्त्रां द्विभुजां वज्राङ्कुशोत्पलहस्तां विकृतवदनां कृष्णवर्णां, दक्षिणद्वारे वज्रपाशीं

---

[1] A वज्रयोग० ।
[2] AC omits.
[3] AC omits.
[4] A omits.
[5] B ०यष्टिकुलां करां, A ०कराकुली ।

पीतवर्णां विकृताननां एकवक्त्रां द्विभुजां वज्रपाशहस्तां, पश्चिमद्वारे वज्रस्फोटीं रक्तवर्णां एकवक्त्रां द्विभुजां विकृतवदनां वज्रस्फोटहस्तां, उत्तरद्वारे वज्रघण्टां श्वेतवर्णां एकवक्त्रां द्विभुजां विकृतवदनां वज्रघण्टाहस्तां; एता आलीढपदस्थाः सूर्य्यासनाः सूर्य्यप्रभा ज्वालामालाकुलाः [1]सर्पाभरणा द्रष्टव्याः।

ऊर्द्धे उष्णीषविजयामधः सुम्भां विभावयेत्।
चक्रं च नागपाशं च ध्यात्वा मन्त्रं स्फुरन् जपेत्॥

ॐ तारे तुत्तारे तुरे स्वाहा।

दशाक्षरैर्दश देवत्यो दशपारमिताश्रयाः।
भावनीयाः प्रयोगेन सर्व्वकार्य्यप्रसिद्धये॥

एतन्मन्त्रवरं श्रेष्ठं सर्व्वबुद्धैर्नमस्कृतम्।
पठितसिद्धिकरं तीव्रं वज्रपञ्जर[2]भाषितम्॥

अनेन मन्त्रेण पटाञ्चलं सप्ताभिमन्त्रितं कृत्वा ग्रन्थिं बद्धा विन्ध्यायामपि गच्छन् न केनाप्यवलीयते[3]। व्याघ्रचौरनक्रसिंहसर्पदन्तिमहिषभल्लुकगवयादयो न स्मरणमात्रेण नश्यन्ति विलीयन्ते। अनेन मन्त्रेणोत्पलानामष्टोत्तरशतं यावद् गृह्णयात्। ॐ तारे तुत्तारे तुरे अमुकीं मे वशमानय स्वाहा, अनेनैव मन्त्रेण काकपक्षं द्वात्रिंशद् वारान् परिजप्यारिगृहे गोपयेत् सप्ताहेनोच्चाटयति। ॐ तारे तुत्तारे तुरे चल प्रचल शीघ्रगामिनि देवदत्तमुच्चाटय हुँ हुँ फट्।

---

[1] B सर्व्वा०। [2] AC ०पञ्जल०।
[3] A ०लीयेत्।

अथापरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकाभिधानां कुमारीं मह्यं विवाहेन तस्याः पिता प्रयच्छतु स्वाहा।

मदनं चण्डबीजं च तथोन्मत्तकमेव च।
अशोकपत्रं पुष्पं च जुहुयात् सहस्रपञ्चकम्॥
घृतमधुगुडहोमं [1]कन्यासिद्धौ प्रशस्यते।
सप्ताहेन तदा योगी लभेत् कन्यां स्ववाञ्छिताम्॥

अथापरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकाभिधानां स्वस्था[2]नत आकर्षय ममान्तिके जः, अनेन मन्त्रेण बदरीकण्टकानां पञ्चसहस्राणि स्वयम्भू-[3]कुसुमाक्तानि जुहुयात्। अनेन कृतेन नृपाणामपि कन्यामाकर्षयेदिति।

अथापरोऽपि प्रयोगो भवति। रजस्वलाकर्पटे भगवतीं द्विभुजामेकाननामङ्कुशोत्पलपाशहस्तां विलिख्य तस्याः पुरतः पूजां कृत्वा इमे पुष्पाः शुभा दिव्या इत्यादिना पश्चात् मन्त्रं जपेत् भावान्वितः— ॐ तारे तुत्तारे तुरे अमुकीं मम ईप्सितस्वप्नं कथय हुँ फट्। पञ्चसहस्रेणा-गच्छति। पाशेन गलके बद्ध्वा अङ्कुशेन विदार्य्य च साध्यं पादतले ध्यात्वा दासीरूपेण भुञ्जयेत्।

अथापरोऽपि प्रयोगो भवति। ताराधारणीं सप्ताभि-मन्त्रितां कृत्वाऽऽत्मनोऽक्षिद्वयं मार्जयेत्। राजकुलस्यान्तिके प्रविशेत्। अथ स राजा शिष्यवद् गौरवं करोति, विरुद्धं

---

[1] A सिद्धौ    [2] A स्वस्था।
[3] A ०कुसुमानि।

न वक्ति, प्रसादं च प्रयच्छति, प्रियालापं कुरुते, दासता-मुपैति, क्रुद्धोऽपि वशो भवेदिति दृष्टप्रत्ययः सद्भूतः।

अथापरोऽपि प्रयोगो भवति। ताराधारणीं शतधाऽऽवर्त्य द्विवदनाशीविषं भस्म कृत्वा रक्तवर्णगो(गावी)घृतेन अर्कतूलेन वर्त्तिं कृत्वा प्रज्वाल्याञ्जनं पातयेत्। तमञ्जनं वज्रसूर्य्यवज्रधर्माभ्यां सम्मर्द्य[1] परमान्नेन[2] धूपयेत्। भस्मना सार्द्धमक्षिमञ्जयेत्। यां पश्यति चक्षुर्वज्रेण सा यदि[3] पञ्चनर्त्तेश्वरं न रक्षति[4] तदाऽहं तारा न भवेयम्, घातिताश्च बुद्धा भगवन्तो मया भवेयुरिति।

अथापरोऽपि प्रयोगो भवति। अदर्शनशिशुलोलां गृहीत्वा ताराधारण्या सप्ताभिमन्त्रितां कृत्वा भृङ्गराज-मूलेन गोरोचनया सार्द्धमेकीकृत्य ललाटे तिलकं परिधाय यां[5] पश्यति, तां वश्यां कुरुते, नान्यं रमते, नान्यस्मिन् गच्छति, स्वयं न त्यजति।

अथापरोऽपि प्रयोगो भवति। उदरकीटं तारा-धारण्या सप्ताभिमन्त्रितं कृत्वा वज्रधर्मेण सार्द्धं कन्यायै ताम्बूलेन दद्यात्। अभ्यवहृते योगवरेण मुञ्चति,[6] नान्यं रमते, नान्यस्मिन् गच्छति, स्वपतिं त्यजति।

अथापरोऽपि प्रयोगो भवति। महातैलेनात्मानमभ्यज्य ताराधारणीं जपेदयुतमेकं भावनान्वितः। जपान्ते शालिपिष्टकुड्मल्या[7] शष्कुलिका यस्यै दीयते, सा पञ्चतायामपि न मुञ्चेदिति।

---

[1] A समर्द्य। [2] A परमाश्वेन।
[3] A सापदि। [4] ANC त्यजति।
[5] ANC यां यां। [6] A मूर्च्छति।
[7] A कुन्दमल्या, N कुट्टमल्ला।

अथापरोऽपि प्रयोगो भवति। चन्द्रोपरागसमये ताराधारणीं जपन् सेवां कृत्वा तद्भूतलोकेश्वरं गृह्य तदनुरूपं भावयेत्। प्रमदायै दातव्यम्। पञ्चतायामपि तमनुवर्त्तते।

अथापरोऽपि प्रयोगो भवति। ताराधारणीमन्त्रेण मदनफलमष्टोत्तरशतवारान् परिजप्य तेन फलेन हयग्रीवेन माङ्गं यां स्पृशति सा वश्या भवति।

अथापरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकस्य बन्धनमुक्तिं कुरु मुः स्वाहा, अनेन मन्त्रेणार्कदलं साध्यनामविदर्भितं संलिख्य कुलीरगर्त्ते स्थापयेत्, बन्धनमुक्तिर्भवति।

॥ वज्रतारासाधनं समाप्तम् ॥

94.

नमस्तारायै।

अथातः सम्प्रवक्ष्यामि वज्रताराप्रसाधनम्।
होमकर्म्मविधानेन सर्व्वकामार्थसाधनम्॥

तत्रेमानि मन्त्रपदानि भवन्ति। तद्यथा, नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय, तद्यथा, ॐ तारे तुत्तारे तुरे सर्व्वदुष्टप्रदुष्टान् मम कृते जम्भय स्तम्भय मोहय बन्धय हुँ हुँ हुँ फट् फट् फट्, सर्व्वदुष्टस्तम्भनि तारे स्वाहा। तत्रादौ तावत् स्वहृदि

[1] A नाम।   [2] AN रक्षति।
[3] A फट् फट् only.

चन्द्रमण्डले ताँकारबीजं ध्यात्वा तद्रश्मिसमाकृष्टगुरुबुद्ध-
बोधिसत्त्वान् नानाविधपूजादिभिः सम्पूज्य पापदेशनादिकं
कृत्वा त्रिशरणगाथां पठेत्। ततश्चतुर्ब्रह्मविहारान् भाव-
यित्वा ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति मन्त्र-
मुच्चारयेत्। ततः पँकारजपद्मे चन्द्रमण्डलोपरि ताँकार-
बीजं पुनरपि ध्यात्वा तत्परिणामेन—

मातृमण्डलमध्यस्थां तारादेवीं विभावयेत्।
अष्टबाहुं चतुर्वक्त्रां सर्व्वालङ्कारभूषिताम्॥
कनकवर्णनिभां भव्यां कुमारीलक्षणोज्ज्वलाम्।
विश्वपद्मसमासीनचन्द्रासनसुसंस्थिताम्॥
पीतकृष्णसितरक्तसव्यावर्त्तचतुर्मुखाम्।
प्रतिमुखं त्रिनेत्रां च वज्रपर्य्यङ्कसंस्थिताम्॥

रक्तप्रभां चतुर्बुद्धमकुटीं वज्रशरशङ्खवरदसद्दक्षिण-
लसत्करां उत्पलचापवज्राङ्कुशवज्रपाशसतर्ज्जनीवामस-
त्कराम्—

वज्रपर्य्यङ्कयोगेन साधयेद् भुवनत्रयम्।
तदग्रतः पुष्पतारां सितवर्णां मनोरमाम्॥
ॐकाराक्षरनिष्पन्नां पुष्पदामकराकुलाम्।
द्विभुजां चैकवक्त्रां तु सर्व्वालङ्कारभूषिताम्॥
दक्षिणे धूपतारां च कृष्णवर्णां सुरूपिणीम्।
धूपघटीकरव्यग्रां सर्व्वालङ्कारशोभिताम्॥
पश्चिमे दीपतारां च पीतवर्णां मनोहराम्।
दीपयष्टिधरां दिव्यां चलत्कनककुण्डलाम्॥
उत्तरे गन्धतारां वै गन्धशङ्खकराकुलाम्।
रक्तवर्णनिभां देवीं भावयेद् गर्भमण्डले॥

[illegible] एकवक्त्रा द्विभुजाः सर्व्वालङ्कारभूषिता [illegible]र्य्यङ्कन्यश्चेति। एताः षड् देव्य ईषत्करालवदना [illegible]लिताक्षेपसंस्थिताः। एताः सर्व्वा मण्डलचक्रे ध्यात्वा [illegible]बीजरश्मिसमानीतज्ञानचक्रं जः-हुँ-वँ-[1]होरित्येतैराकर्ष-[illegible]दिकं कुर्य्यात्।

पूर्व्वद्वारे ततो ध्यायाद् वज्राङ्कुशीं सितद्युतिम्।
वज्राङ्कुशसचिह्नककरात्मकं[2] मनोहराम्॥
दक्षिणद्वारे वज्रपाशीं कृष्णामतिरतिप्रियाम्।
दिव्यालङ्कारभूषाङ्गीं वज्रपाशधरां वराम्॥
वज्रस्फोटां पीतवर्णां[3] वज्रस्फोटाङ्कसत्कराम्।
[4]चिन्तयेत् पश्चिमे द्वारे नानालङ्कारभूषिताम्॥
वज्रघण्टामुत्तरद्वारे[5] वज्रघण्टायुधामथ।
रक्तवर्णां शुभां शश्वत् पश्येद् वै दिव्यरूपिणीम्॥
ऊर्द्ध्वे उष्णीषविजयां पीतवर्णां सुरूपिणीम्।
ध्यायात् सम्बाधिफलदां मन्त्री चक्रधरां ततः॥
तद्गर्भमण्डलस्याधः कृष्णवर्णां विभावयेत्।
सुभ्मां भास्वरस[6]द्रूपां नागपाशलसत्कराम्॥
द्विभुजा एकवदनाः सर्व्वा ज्ञेया मनोहराः।
अक्षरैर्दशभिश्चैता देवत्यो दश निर्म्मिताः।
दशपारमिताः शुद्धाः सर्व्वकर्म्मप्रसिद्धये॥

तत्र दशाक्षराणि— ॐ तारे तुत्तारे तुरे स्वाहा।

---

[1] AN ह्रोभ्य तै०।
[2] B ०करामेक०।
[3] ANC read सुरूपिणीं after पीतवर्णां।
[4] C omits चिन्तयेत्......चक्रधरां ततः।
[5] ANC ०मुत्तरे।
[6] B भास्वरत०।

तथा चित्तवाक्कायाधिष्ठानाभिषेकबिन्दुसूक्ष्मयोगजापादयोऽपि ध्यातव्या इति।

एतन्मन्त्रवरं श्रेष्ठं सर्व्वबुद्धैर्नमस्कृतम्।
पठितसिद्धिकरं दिव्यं वज्रपञ्जरभाषितम्॥

इति।

अत्रायं उपचारः। अनेन मन्त्रेण पटाञ्चलं गृहीत्वा सप्ताभिमन्त्रितं कृत्वा ग्रन्थिं बद्ध्वा [1]विन्ध्याटवीमपि गच्छन्न केनाप्यवलीयते, व्याघ्रचौरनक्रसिंहसर्पदन्तिमहिषभल्लुकगवयाश्वादयो नश्यन्ति विलीयन्त इति। तथा अनेन मन्त्रेणोत्पलानामष्टोत्तरशतं जुहुयात्, ॐ तारे तुत्तारे तुरे अमुकीं मे वशमानय स्वाहा। यामिच्छति तां वशमानयति। तथा अनेन मन्त्रेण काकपक्षं द्वात्रिंशद्वारान् परिजप्यारिगृहे गोपयेत्, सप्ताहेनोच्चाटयति— ॐ तारे तुत्तारे तुरे [2]चल प्रचल शीघ्रगामिनि देवदत्तमुच्चाटय हुँ फट्। इति उच्चाटनविधिः।

अथापरः प्रयोगः। ॐ तारे तुत्तारे तुरे अमुकाभिधानां कुमारीं सप्ताहेन तस्याः पिता प्रयच्छतु स्वाहा।

मदनं चण्डबीजं च उन्मत्तकफलं तथा।
अशोकपत्रं पुष्पं च जुहुयात् सहस्रपञ्चकम्॥
घृतमधुगुडहोमं वै कन्यासिद्धौ प्रशस्यते।
सप्ताहेन ततो योगी लभेत् कन्यां [4]स्ववाञ्छिताम्॥

इति।

[1] ANC विन्ध्याया०।
[2] N चल प्रचल०।
[3] ANC तदुन्मत्तक०।
[4] A सुवा०।

अथापरः प्रयोगः। ॐ तारे तुत्तारे तुरे अमुकाभिधानां स्वस्थानत आकर्षय ममान्तिके जः इत्यनेन[1] मन्त्रेण बदरकण्टकानि पञ्च सहस्राणि स्वयम्भूकु[2]सुमाक्तानि होतव्यानि। एतेन नृपाणामपि कन्यामाकर्षयति।

अथापरोऽपि प्रयोगो भवति। रजःस्वलाकर्पटे भगवतीं द्विभुजामेकवक्त्रामङ्कुशपाशोत्पलहस्तां विलिख्य तस्याः पुरतः पूजां कृत्वा इमे पुष्पाः शुभा दिव्या इत्यादिना मन्त्रं जपेत् भावनान्वितः— ॐ तारे तुत्तारे तुरे अमुकीं ममेप्सितं स्वप्नं कथय हुँ फट्। पञ्चसहस्रेणागच्छति।

पाशेन गलकं बद्ध्वा अङ्कुशेन विदार्य्य च।
चरणावुत्पलेनैव बद्ध्वाऽऽकृष्य समन्ततः।
साध्यं पादतले ध्यात्वा दासीरूपेण भुञ्जयेत्॥

अथापरः प्रयोगः। ताराधारणीं सप्ताभिमन्त्रितां कृत्वा अक्षिद्वयमञ्जयेत्। राजकुलस्यान्तिके प्रविशति, स राजा गौरवादिकं करोति, एकान्ततो वश्यो भवतीति।

अथापरः प्रयोगः। ताराधारणीं शतधाऽऽवर्त्त्य द्विवदनमाशीविषं भस्म कृत्वा रक्तवर्णगो(गावी)घृतेनार्कतूलेन वर्त्तिकां च कृत्वा प्रज्वाल्याञ्जनं पातयेत्। तमञ्जनं सूर्य्यवज्राभ्यां[4] सम्पाद्य परमान्नेन धूपयेत्। तद्भस्मना साध्यमक्षि अञ्जयेत्। यां पश्यति चक्षुर्वज्रेण सा यदि पश्यन्तीस्वरं न रक्षति, तदाऽहं तारा न भवेयम्, घातिताश्च मे बुद्धा भगवन्तो भवेयुरिति।

[1] ANC अनेन। [2] A ०सुमानि।
[3] A दुस्थि॰। [4] AN वज्रधर्म्माभ्यां, B वज्रसूर्य्यवज्रधर्म्माभ्यां।
[5] ANC च्चरति।

अथापरः प्रयोगः। उदरकीटकं[1] धारण्या[2] सप्ताभिमन्त्रितं कृत्वा वज्रधर्म्मेण साद्धमेकीकृत्य ताम्बूलेन दद्यात्। अभ्यवहरति अनेन प्रयोगवरेण मुञ्चति स्वपत्नीवाचरति।

अथापरः प्रयोगो भवति। अदर्शनशिशुलोलां गृहीत्वा ताराधारण्या सप्ताभिमन्त्रितां कृत्वा भृङ्गराजगोरोचनया साद्धमेकीकृत्य ललाटे तिलकं परिधाय यां पश्यति तां वशं कुरुते।

अथापरोऽपि प्रयोगः। महातैलेनात्मानमभ्यज्य तारा-धारणीमयुतमपि जपेत्, भावयन् जपान्ते शालिपिष्टकेन [3]कुड्मल्या शष्कुलिकां[4] कृत्वा यस्मै दीयते स पञ्चतायामपि न मुञ्चति।

अथापरोऽपि प्रयोगः। चन्द्रोपरागसमये ताराधारणीं जपन्, सेवां च कुर्व्वन्, तदुद्भवलोकेश्वरेण शङ्खचूर्णं भावयेत्। तद्[5] यस्या दीयते सा [यावत्] पञ्चत्वमनुवर्त्तते।

अपरः प्रयोगः। ताराधारण्या मदनफलमष्टोत्तरशतवारान् परिजप्य तेन फलेन हयग्रीवेण साद्धं यां स्पृशति सा वश्या भवति।

अपरोऽपि प्रयोगो भवति। ॐ तारे तुत्तारे तुरे अमुकस्य बन्धनमुक्तिं कुरु स्वाहा अनेन मन्त्रेणार्कदले साध्यनामविदर्भितं विलिख्य कुलीरगर्त्ते[6] गोपयेत्, बन्धनमुक्तिर्भवति।

॥ इति वज्रतारासाधनं समाप्तम् ॥

---

[1] B ०कीटं।
[2] धारण्या dropped in A.
[3] A कुटुमल्या०, N कुट्टमल्या।
[4] ABC ष्कुलिकां।
[5] AC यत्।
[6] AC ०गर्भे।

95.

¹नमो वज्रतारायै ।

वज्रतारां नमस्कृत्य गुरुपूर्व्वक्रमागताम् ।
तस्याश्च साधनं स्पष्टं लिख्यते स्मृतये मया ॥

मनोऽनुकूले स्थाने सुखासनोपविष्टो योगी ॐ रक्ष रक्ष हुँ हुँ फट् स्वाहा इति स्थानात्मयोगरक्षां कृत्वा हृच्चन्द्रे ताँकारं दृष्ट्वा तद्रश्मिभिः समाकृष्टां भगवतीं वज्रतारां समाण्डलेयां वक्ष्यमाणभुजायुधां समालम्ब्याकाशे पुष्पादिभिः सम्पूज्य —

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥

इत्युच्चार्य्य मैत्र्यादिभावनां कुर्य्यात् । सर्व्वसत्त्वा मया संसारदुःखादुद्धृत्य महासुखे बुद्धत्वे [प्रतिष्ठापयितव्या इति] सर्व्वाकारवरोपेतशून्यतां भावयेत् । चित्तमेवेदं भ्रान्तं तेन तेनाकारेण प्रतिभासते । यथा स्वप्ने चित्तादन्यच्च ग्राह्यं न विद्यते ग्राह्याभावात्, चित्तमपि ग्राहकं न भवति, तस्माद् विश्वमिदं निःस्वभावं प्रकृतिपरिशुद्धं आद्यमनुत्पन्नं पश्येत् ।

तदनु आकाशे पूर्व्वप्रणिधानबलादुत्पन्नं शुद्धलौकिकविज्ञानस्वभावं रेफोद्भवं सूर्य्यमण्डलं तदुपरि कृष्णहुँकारेण परिणतां शुक्लधर्म्मोदयां ऊर्द्ध्वस्थितां त्रिकोणां अन्तःशुषिरां विश्वपद्मविश्ववज्राधिष्ठितमध्यां ध्यात्वा विश्व-

¹ This *Sādhana* is only to be found in B. *See* Fol. 67A.

वज्रवेदिकायां चत्वारि महाभूतानि भावयेत्। लँकारजं पृथ्वीमण्डलं पीतं चतुरस्रं कोणेषु त्रिसू[चि]कवज्राङ्कितम्, तदूर्द्ध्वं वँकारजं वरुणमण्डलं शुक्लं वर्त्तुलघटाङ्कम्, तदुपरि रेफपरिणतमग्निमण्डलं त्रिकोणं कोणेषु रेफाङ्कितम्, तदुपरि यँकारपरिणतं वायुमण्डलमर्द्धचन्द्राकारमन्तद्वयेन चलत्पताकाङ्कितं धूम्रवर्णं चिन्तयित्वा, तत्परिणतं कूटागारं पञ्चरत्नमयं चतुरस्रं चतुर्द्वारं चतुस्तोरणभूषितं हारार्द्धहारपट्टस्रग्दाममण्डितं अष्टस्तम्भोपशोभितं स्तम्भोपरि (वृत)वलयवज्रावलीवृतं मध्यपुटेषु पञ्चसु द्वारेषु अध ऊर्द्ध्वं च विश्वपद्मम्। तत्र मध्यासने अकारादिषोडशस्वरपरिणामेन चन्द्रमण्डलमादर्शज्ञानस्वभावं तदुपरि ककारादिचतुस्त्रिंशद्व्यञ्जनैः सूर्य्यमण्डलं तयोरेकतां समताज्ञानं तदुपरि ताँकारोत्पन्नकर्णिकायां चन्द्रस्थताँकारं प्रत्यवेक्षणाज्ञानं तद्वीजरश्मिभिराकृष्टानां सर्व्वतथागतानां प्रवेशे कृत्यानुष्ठानज्ञानं तदनु भगवत्या निष्पत्तिः सुविशुद्धधर्म्मधातुज्ञानम्। एवं पञ्चाकाराणि सम्बोधिक्रमेणैव ताँकारनिगतस्वबीजचिह्नपरिणामनिष्पन्नदशदेवत्या सहैव निष्पन्नां तां भगवतीं चिन्तयेत् पीतवर्णां पीतकृष्णरक्तश्वेतमिति चतुर्वक्त्रामष्टभुजां वज्रपाशशङ्खशरवरदर्दक्षिणकरां वज्राङ्कुशोत्पलकार्म्मुकतर्ज्जनीवामकरां सर्व्वालङ्कारभूषितां रक्तप्रभाविभूषितां नवयौवनां वज्रपर्य्यङ्किनीं विश्वपद्मासनस्थितां पञ्चतथागतमुकुटिनीं ध्यायात्।

पूर्व्वदले पुष्पतारां श्वेतां ॐकारजां द्विभुजां पुष्पमालाधारिणीं सर्व्वालङ्कारभूषिताम्, ताकारेण दक्षिणे

धूपतारां कृष्णां धूपशाखाकराम्, रेकारेण पश्चिमे दीपतारां पीतां दीपयष्टिकराम्, तुकारेण उत्तरे गन्धतारां रक्तां गन्धशङ्खकरां ध्यायात्; गर्भमण्डले ताकारेण अङ्कुशतारां अङ्कुशहस्ताम्, दक्षिणे रेकारेण पाशतारां कृष्णवज्रपाशहस्तां, पश्चिमे तुकारेण स्फोटतारां पीतवर्णां निगडहस्ताम्, उत्तरे रेकारेणावेशतारां रक्तां घण्टाकराम्, अधसि स्वाकारेण सुम्भतारां कृष्णां नागपाशकराम्, ऊर्द्ध्वं हाकारेण उष्णीषविजयतारां पीतां चक्रधरां ध्यायात्।

तदनु हृच्चन्द्रस्थितचिह्नबीजपरिणतज्ञानसत्त्वहृच्चन्द्रे ताँकारं दृष्ट्वा तद्रश्मिभिर्ज्ञानमण्डलमाकृष्य सम्पूज्य जः हुँ वँ होः इत्यनेन मन्त्रेण आकर्षणप्रवेशनबन्धनतोषणं कुर्य्यात्। तदनु चक्षुरादिषु मोहवज्रादयः षट् चिन्तनीयाः, कायवाक्चित्तेषु ॐ-आः-हुँकारपरिणताः खेचरीभूचरीनैरात्माश्चिन्तनीयाः। तदनु हृद्बीजरश्मिभिराकृष्टान् तथागतान् सम्पूज्य अभिषेकं प्रार्थयेत्। अभिषिञ्चन्तु मां सर्व्वतथागता इति। तैस्तथागतैर्ज्ञानामृतपूर्णकलशैरभिषिच्यते। अभिषिच्यमानानां अभिषेकजिनाः शिरसि जायन्ते। तत्र भगवत्या रत्नसम्भवः, पुष्पतारादीनां यथाक्रमं वैरोचनाक्षोभ्यामिताभाऽमोघसिद्धयः, अङ्कुशतारादीनामपि ते एव। अधोदेवत्यूर्द्ध्वदेवत्योरक्षोभ्यवैरोचनौ हृद्बीजनिर्गतपुष्पादिभिः सम्पूज्य, वीणादिभिः संस्तुत्य, रसवज्रादिभिः ढौकितं समास्वाद्य, प्रत्येकं स्फुरणेनाखेदनपर्य्यन्तेन जगदर्थं कारयित्वा पुष्पादयः क्रमेण भगवत्या हृदये प्रतिष्ठाश्चिन्तनीयाः। भगवत्या

अपि स्फुरणयोगेन सर्व्वमेव विश्वं मायोपमस्वप्नोपमादि-चिन्ताधीनमाक[ल]य्य स्वहृद्वीजे प्रतिष्ठा ध्येया। तदनु तद्बीजं रश्मिपुञ्जाकारं क्रमावलीनं सूक्ष्मबिन्दुरूपं महासुखमयं ध्यात्वा तमपि निरुपलब्धिं कुर्य्यात्। पुनर्झटिति आविर्भूतं मण्डलं दृष्ट्वा बलिं दद्यात् ॐ अकारो मुखं सर्व्वधर्म्माणां आद्यमनुत्पन्नत्वात्। ॐ आः हुँ फट् स्वाहा इत्यनेन मन्त्रेण दिक्पालेभ्यः। तदनु मन्त्रं जपेत् ॐ तारे तुत्तारे तुरे स्वाहा। मालामन्त्रं वा ॐ आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय, तद्यथा, ॐ तारे तुत्तारे तुरे सर्व्वदुष्टप्रदुष्टानां मम कृते जम्भय स्तम्भय मोहय बन्धय हुँ हुँ हुँ फट् फट् फट् सर्व्वदुष्टस्तम्भनि तारे स्वाहा।

विधाय वज्रतारायाः साधनं यन्मयार्ज्जितम्।
शुभं तेन जनाः सर्व्वे मन्त्रसम्बुद्धभास्कराः[1] ॥

॥ इति वज्रतारासाधनम् ॥

---

[1] Then follows the same *Prayogas* as given in the two previous *Sādhanas* of Vajrātārā.

96.

नमो वज्रतारायै।

वज्रतारां नमस्कृत्य सितवर्णां मनोरमाम्।
तत्साधनविधिं वक्ष्ये सर्व्वसत्त्वार्थहेतुना॥

इह भावनाधिकृतो योगी स्वहृदि चन्द्रमण्डले ताँकारं विचिन्त्य मुखशौचादिकं कुर्य्यात्। अत्यन्तसुखासनोपविष्टः स्वहृद्बीजात् रश्मिं निश्चार्य्य तेन रश्मिनाऽऽकृष्य तारा-भट्टारिकां पुरतोऽन्तरीक्षेऽवस्थाप्य गुरुबुद्धबोधिसत्त्वांश्च पुरतः पापदेशनादिकं कुर्य्यात्। पापदेशना अकरणसंवरं अनुमोदना परिणामना त्रिशरणगमनं बोधिचित्तोत्पादनं मार्गाश्रयणं चतुर्ब्रह्मविहारीभावना। ॐ शून्यताज्ञान-वज्रस्वभावात्मकोऽहमिति शून्यताभावनां च विभाव्य बिम्बनिष्पत्तिभावनां च भावयेत्। ततः पँकारपरिणतं सितमष्टदल[1]कमलं तस्योपरि अकारपरिणतं चन्द्रं चन्द्रो-परि ताँकारपरिणतं सितमुत्पलं उत्पलमध्ये चन्द्रं चन्द्रमध्ये ताँकारं ताँकाराद् गगनतलं विश्वं च तारारूपेण संस्फार्य्य तारारूपेण त्रिभुवनस्थितान् सत्त्वान् व्यवस्थाप्य पुन-स्तत्रैव ताँकारे संस्फार्य्य[2] उत्पलचन्द्रे ताँकारपरिणत-ताराभट्टारिकारूपेणात्मानं पश्यति। सितवर्णां सित-कमलोपरि चन्द्रासनस्थां वज्रपर्य्यङ्किनीं सितचन्द्राश्रितां षोडशाब्दवपु[3]ष्मतीं नानाभरणभूषितां दक्षिणे हस्ते वरदां वामेनोत्पलधारिणीं अशेषमारविध्वंसन्तीं स्वकायरोम-

---

[1] AC ०मष्टदलं। [2] A सम्पूर्य्य, N संहार्य्य।
[3] A ०वपुः०।

कूपतो बुद्धबोधिसत्त्वान् स्फुरन्तीं भावयेत्। ईदृशीं भावनां स्थिरीकृत्य मन्त्रं जपेत्। स्वहृदि सितमष्टारचक्रं विचिन्त्य अरं[1] प्रति अष्टौ अक्षरान् विभाव्य मध्ये स्वाहाकारं दत्त्वा जपेत्, मनसा वाचयेन्मन्त्रं ॐ तारे तुत्तारे तुरे स्वाहा। अनेन चिन्तितमात्रेण सर्व्वमारैरवध्यो भवेत्।

कविता वक्तृता चैव प्रज्ञा चात्यन्तनिर्म्मला।
कल्पान्तं (अपि) जीवनोपायमुक्तं वज्रभृता स्वयम्॥
राजानो वशगास्तस्य शान्ताः पुरजनैः सह।
अप्यखण्डितरोमात्मा सर्व्वशत्रुषु सर्व्वदा॥
(आर्य्य)वज्रतारा महातेजाः सर्व्वसिद्धिप्रदायिका।
दत्त्वा तु दक्षिणां वा[ऽपि] सुवर्णरजतादिकम्॥
श्रोतव्यं परया भक्त्या पण्डितेन महात्मना।
अभिषेकाग्रलब्धो यो गुरुभक्तिपरात्मकः॥
स श्रोता च भवेदत्र प्रोक्तो जिनगणैः सदा।
अन्यथा नैव सिद्ध्यति यदि साक्षात् स्वयं जिनः॥

॥ वज्रतारासाधनं समाप्तम्।
। कृतिरियं आर्य्यनागार्ज्जुनपादानाम्॥

---

[1] A अलिं।
[2] AN ०मारा: स्व०।
[3] AC परमया।

## 97.

नमस्तारायै।

प्रथमं तावन्मन्त्री स्वहृद्यकारपरिणतं चन्द्रमण्डलं तत्र स्थितताँकारं पीतवर्णं तत्परिणतं नवसूचिक[1]वज्रं तद्वराटके ताँकारं भावयेत्। तद्रश्मिभिरानीतज्ञानसत्त्वस्वभावां भगवतीं वक्ष्यमाणभुजचिह्नाद्यलङ्कृतां अष्टभुजां चतुर्वक्त्रां वज्रपर्य्यङ्कनिषण्णां दशदेवतीपरिवृतां नभसि दृष्ट्वा स्वहृद्बीजनिर्गतपुष्पादिपञ्चोपचारपूजाभिः सम्पूज्य पापदेशना-पुण्यानुमोदना-त्रिशरणगमन-बोधिचित्तोत्पाद-मैत्रीकरुणामुदितोपेक्षा भावयेत्। ततः सर्व्वधर्म्मानात्मानं च स्वप्नोपमं निःस्वभावं आद्यमनुत्पन्नमधिमुच्य मन्त्रमुच्चारयेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। तदनन्तरं बोधिचित्तमनुस्मृत्य आकाशे रँकारपरिणतं सूर्य्यमण्डलं तत्र हुँकारपरिणतं त्रिसूचिक[2]वज्रं तद्रश्मिसम्भूतं तावद्दिक्षाविस्तरं जाज्वल्यमानं वज्रप्राकारं तद्रश्मिनिर्म्मितवज्रपञ्जरं वज्रभूमिं बाह्यसीमाबन्धं च ध्यात्वा तद्रश्मिभिर्विघ्नानुत्सार्य्य पञ्जरमध्ये आकाशस्वभावां धर्म्मोदयामेकाराकारां अधः[3] सूक्ष्माग्रामुपरि विशालां शुक्लां विभावयेत्। तन्मध्ये गगनस्वरूपविश्वदलकमलकर्णिकास्थितत्रिसूचिकवज्रं तद्वेदिकाव्यापीनि चतुर्म्महाभूतमण्डलानि। यँकारपरिणतं अर्द्धचन्द्राकारं नीलं [4]वायुमण्डलं कटिद्वये ललत्पताकाङ्कितम्, तदुपरि रँकारजं अग्निमण्डलं त्रिकोणं

---

[1] AC °सूच°।
[2] AC °सूक°।
[3] A सूक्ष्मामु°, N °स्वोपरि°।
[4] N omits.

रक्तं कोणेषु[1] रेफाङ्कं तस्योपरि वँकारजं वरुणमण्डलं वर्तुलं सितघण्टाङ्कं[2] तदुपरि लँकारजं माहेन्द्रमण्डलं पीतं चतुरस्रं कोणेषु त्रिसूचिकवज्राङ्कितं तत्स्वभावं मायोपमं विज्ञानं विदित्वा चतुर्म्महाभूतपरिणामजं परिशुद्धबुद्धक्षेत्रसंक्षेपरूपं महामोक्षपुरं वैरोचनस्वभावं विश्ववज्रवेदिकामध्ये नानारत्नमयं कूटागारम्—

चतुरस्रं चतुर्द्वारमष्टस्तम्भोपशोभितम् ।
चतुर्वेदीपरिक्षिप्तं चतुस्तोरणमण्डितम् ॥

हारार्द्धहारपट्टा(घण्टा)दर्शचामरविचित्रपताकाघण्टाविभूषितम् । तस्य गर्भपुटे अष्टदलं पद्मं सकेशरं[3] [4]वरटकोपरि अकारपरिणतं चन्द्रमण्डलमादर्शज्ञानस्वभावं तस्योपरि ताँकारं पीतं समताज्ञानस्वभावं सूर्य्यमण्डलाक्रान्तम्[5] । ततः ताँकारपरिणतं कनकवर्णं नवसूचिकवज्रं बीजगर्भप्रत्यवेक्षणास्वभावं तन्निर्गतरश्मिभिः स्फुरित्वा दशसु दिक्षु भगवत्याकारैः[6] सत्त्वार्थं कृत्वा पुनस्तत्रैव बीजचिह्नसंहरणकृत्यानुष्ठानस्वभावम् । ततो बीजचिह्नचन्द्रसूर्य्यपरिणतां भगवतीं सुविशुद्धधर्म्मधातुस्वभावाम्—

वज्रतारां चतुर्वक्त्रां सर्व्वालङ्कारभूषिताम् ।
अष्टभुजां कनकवर्णां कुमारीलक्षणोज्ज्वलाम् ॥
नवयौवनकान्तिमतीं चलत्कनककुण्डलाम् ।
चतुर्बुद्धमहामुकुटीं पद्मरागप्रभान्विताम् ॥

---

[1] A कोणेषु । [2] A ०घण्टाकां ।
[3] A ०लकमलपद्मं । [4] A वरटकपरिणतं ।
[5] A ०कान्तं । [6] NC ०त्याकारैः ।

वज्रपाशं शरं शङ्खं बिभ्रती दक्षिणैः करैः।
वामैः[1] पीतोत्पलं चापमङ्कुशं तर्ज्जनीं तथा॥

हेमाभं प्रथमं वक्त्रं शुक्लदक्षिणमुत्तरम्।
लोहितं पश्चिमं नीलं वज्रपर्य्यङ्कमासनम्॥

मन्त्रो हृद्बीजसम्भूतो मण्डलाधिपतेर्मुखात्।
निर्गतो दशदेवीनां विभक्तो बीजतां गतः॥

ॐ तारे तुत्तारे तुरे स्वाहा। पूर्व्वदिग्दलेषु चन्द्रमण्डलस्थानि ॐ तारेतु अक्षराणि पूर्व्वादिदिग्दा[2]रेषु सूर्य्यमण्डलस्थानि त्तारेतुरे अक्षराणि ऊर्द्ध्वे सूर्य्यमण्डलस्थं स्वाक्षरमधः सूर्य्यमण्डलस्थं हाक्षरं तद्बीजाक्षरपरिणतानि चिह्नानि बीजगर्भानि भावयित्वा तद्रश्मिभिः स्फुरणसंहरणं कृत्वा तद्बीजचिह्नपरिणता देव्यः—

विज्ञेया दश देवत्यो दशभूमिस्वरूपतः।
वज्रपर्य्यङ्कयोगिन्य एकास्या द्विभुजाश्च ताः॥

चन्द्रस्थां पूर्व्वतस्तारां शुक्लवर्णां विभूषिताम्।
पुष्पदामान्वितकरां भावयेत् प्रणवोद्भवाम्॥

दक्षिणे धूपतारां तु (कृष्णां) चन्द्रे ताकारसम्भवाम्।
धूपशाखान्वितकरां सर्व्वालङ्कारभूषिताम्॥

[3]पश्चिमे दीपतारां च पीतवर्णां सुभूषिताम्।
दीपवृक्षान्वितकरां चन्द्रे रेकारसम्भवाम्॥

चन्द्रे तुकार[4]सम्भूतां गन्धतारां तथोत्तरे।
गन्धशङ्खोद्यतकरां रक्तवर्णां सुभूषिताम्॥

---

[1] AN omit, but add पाश० before तर्ज्जनीं in the same line.
[2] A पूर्व्वदिग्दा०। [3] C drops this line. [4] A तुतार०।

विदिग्दले तथा चिह्नमक्षोभ्यादिप्रभेदतः ।
वज्रचक्रं तथा पद्मं शङ्खं तद्वर्णभेदतः ॥
द्वारपालीस्तथा ध्यायात् सूर्य्यस्थाः सर्पभूषणाः ।
पूर्व्वद्वारेऽङ्कुशीं शुक्लां बीजत्ताकारसम्भवाम् ॥
दक्षिणे अङ्कुशधरां वामतो दुष्टतर्ज्जनीम् ।
दक्षिणे पाशीं पीतां बीजरेकारसम्भवाम् ॥
सपाशतर्ज्जनीहस्तां रक्तमण्डलसंस्थिताम् ।
स्फोटां च पश्चिमे रक्तां तुबीजाक्षरसम्भवाम् ॥
वज्रालीं तर्ज्जनीहस्तां वज्रमण्डलसुस्थिताम् ।
श्यामामुत्तरतो घण्टां बीजरेकारसम्भवाम् ।
वज्रघण्टान्वितकरां रश्मिस्थां वामतर्ज्जनीम् ॥
कोणभागेषु चिह्नानि मामक्यादिविशुद्धितः ।
बोधिचित्तपटो मेरुर्वह्नि कुण्डं महाध्वजः ॥
ऊर्द्ध्वे चोष्णीषविजयां सूर्य्ये स्वाकारसम्भवाम् ।
शुक्लवज्रधरां शुक्लां वामे च रिपुतर्ज्जनीम् ॥
नागपाशधरां नीलां सूर्य्ये हाकारसम्भवाम् ।
वामे च तर्ज्जनीं घोरामधः सुम्भां विभावयेत् ॥
सर्व्वासां चक्षुराद्यधिष्ठानं मोहवज्रां न्यस्येत् ।
नेत्रद्वयेषु वज्रां च कर्णयोर्मात्सर्यिकां तथा ।
घ्राणे वक्त्रे तु रागवज्रिकाम् ।

---

[1] A बीजन्तु० ।
[2] N तद्बीजा० ।
[3] N वज्रावलीं ; but this does not suit the metre.
[4] A ०गतो ।
[5] A ०कुण्डलं ।
[6] A ०स्वाहार ।

कायेऽेर्ष्यावज्रां तु मनो नैरात्म्ययोगिनी ॥

इति चक्षुराद्यधिष्ठानं कृत्वा कायवाक्चित्ताधिष्ठानं ॐकारेण कायाधिष्ठानं आःकारेण वागधिष्ठानं हुँकारेण चित्ताधिष्ठानम्। ततः सर्व्वासां देवतीनां हृदि चन्द्र-मण्डलस्थं बीजाक्षरं पश्येत्।

ततो रश्मिभिरानीतं ज्ञानसत्त्वस्य मण्डलम्। पुष्पतारादिदेवताभिः स्फुरित्वा सर्व्वपूजाभिः पूजयेत्। ततो ज्ञानसत्त्वमण्डलं द्वारपालीप्रयोगेन समयमण्डले प्रवेशयेत् ॐ वज्राङ्कुशि आकर्षय जः[1], ॐ वज्रपाशि प्रवेशय हुं, ॐ वज्रस्फोट बन्धय वँ, ॐ वज्रावेश वशीकुरु होः। तदनन्तरं स्वहृद्बीजनिर्गतरश्मिभिः त्रैधातुकस्थि[2]तान् बुद्धानानीय सम्पूज्य मातृभिरनुनाथ्यते[3], अभिषिञ्चन्तु मां सर्व्वतथागता बुद्धज्ञानेनेति। ततस्तैर्बुद्धैः हेरुकरूपैः पञ्चामृतभृतपञ्चतथागतात्मकैः कलशैः पञ्चभिरभि-षिच्यते[4]। अभिषिच्यमाने पुष्पकुङ्कुमवृष्टिर्दुन्दुभिशब्दश्च भवति, देवताभिः पूज्यते स्तूयते च। अभिषिक्ते मूर्द्ध्नि रत्न[5]सम्भव उत्पद्यते, मध्यपुटदेवतीनां यथाक्रमं वैरो-चनाक्षोभ्यामिताभाऽमोघसिद्धिस्तथागता द्वारपालीनां मुकुटेषु भवन्ति। उष्णीषाया रत्नेशः, सुम्भाया मुकुटे अक्षोभ्य उत्पद्यते। ततो भगवतीं निर्म्माणकायैः सर्व्वासु दिक्षु सत्त्वार्थं कुर्व्वन्तीं दृष्ट्वा मन्त्रं जपेत् ॐ तारे तुत्तारे तुरे स्वाहा।

---

[1] जः dropped in N.

[2] A ०धातुस्थि०।

[3] A ०नाध्यते, C ०राध्यते।

[4] A ०षिच्यते।

[5] A वल०।

एतन्मन्त्रवरं श्रेष्ठं सर्व्वबुद्धैर्नमस्कृतम् ।
पठितसिद्धिकरं दिव्यं वज्रपञ्जरभाषितम् ॥

अथापरोऽपि धारणीमन्त्रः— नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ तारे तुत्तारे तुरे सर्व्वदुष्टप्रदुष्टान् मम कृते जम्भय स्तम्भय मोहय बन्धय हुँ हुँ हुँ फट् फट् फट् सर्व्वदुष्टस्तम्भनि तारे स्वाहा ।

॥ वज्रतारासाधनं समाप्तम् ।
। कृतिरियं [1]महापण्डितस्थविरधर्म्माकरमतिपा[2]दानाम् ॥

## 98.

नमस्तारायै ।

तारां प्रणम्य महतीं जननीं जिनानां[3]
निःशेषदोषरहितां गुणिनां हिताय[4] ।
तत्साधनं सुविशदैः [5]सुपदैश्च भक्त्या
संलिख्यते वचनतः सुहृदामिहापि ॥

नापूर्व्वं लिख्यते किञ्चित् किन्तु वाक्याद्[6] गुरोरपि
श्रुतं यत् तदपि[7] स्मर्त्तुं संक्षेपतः प्रलिख्यते ॥

---

[1] AN पण्डित० ।
[2] A धर्म्माकरपा० ।
[3] A जननीर्जिनानां ।
[4] AC महत्या ।
[5] N सुविसस्व ।
[6] AN वाक्यात् ।
[7] A उदयि ।

प्रथमं तावत् प्रातरुत्थाय मन्त्री मुखचरणादिकं प्रक्षाल्य पवित्रीभूय विजने मनोऽनुकूले सुगन्धोपलिप्ते सुरभिकुसुमावकीर्णे च भूप्रदेशे सुखासनोपविष्टः स्वहृदये प्रथमस्वरपरिणतं शीतांशुमण्डलं विचिन्त्य तन्मध्ये कमनीयनीलनीरजं तत्किञ्जल्के निष्कलङ्कशशाङ्क[1]मण्डलं तदुपरि पीततांकारबीजं पश्येत्। ततोऽपि पीततांकारबीजात् निःसृत्य जगन्मोहान्धकारापहारिभिर्मयूखसमूहैर्दशसु दिक्षु ये चापर्य्यन्ता लोकधातवो विद्यन्ते, तान् सर्व्वानवभास्य तत्रस्थानप्यसंख्येयानप्रमेयान् बुद्धबोधिसत्त्वांश्चाकाशदेशेऽप्यानीयावस्थाप्यन्ते। तदनु तेषामाकाशदेशावस्थितानां महाकारुणिकानां बुद्धबोधिसत्त्वानां दिव्यपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टा[2]पताकादिभिर्महतीं पूजां कृत्वा पापदेशनां कुर्य्यात्। यत्किञ्चिदनादिसंसारे संसरता मया पापकं कर्म्म[4] कायेन वा मनसाऽपि कृतं कारितं क्रियमाणमनुमोदितं वा तत् सर्व्वं प्रतिदेशयामि, इत्यनेन विधिना[5] प्रतिदेश्य पुनरकरणसंवरं प्रतिगृह्य पुण्यानुमोदनां कुर्य्यात्। सुगतप्रत्येकश्रावकजिनानां तत्सुतानामपि बोधिसत्त्वानां [6]सदेवकसब्रह्मकलोकानां यत् [7]कुशलं तत् सर्व्वमनुमोदयामीति। तदनु रत्नत्रयशरणगमनम्—

बुद्धं शरणं गच्छामि यावदाबोधिमण्डतः[8]।

---

[1] ०शशाङ्क० dropped in A.
[2] ०घण्टा० dropped in A.
[3] A समावेश्यं सरता।
[4] A omits.
[5] A विना।
[6] A सदैव०।
[7] A भूकुशलं।
[8] मण्डलः in A.

धर्म्मं शरणं गच्छामि यावदाबोधिमण्डतः[1]।
सङ्घं शरणं गच्छामि यावदाबोधिमण्डतः[1] ॥

इति[2]। पश्चात् मार्गाश्रयणम्, मार्गस्तथागतोक्तः स चाश्रयणीयो मया[3] नान्य इति। तदनु अध्येषणां कुर्य्यात्। जगदर्थमासंसारं कुर्व्वन्तो भगवन्तस्तथागतास्तत्सुता अपि तिष्ठन्तु मां परिनिर्व्वान्तु इति। तदनु याचना, तादृशीं निरुत्तरां धर्म्मदेशनां भगवन्तस्तथागता देशयन्तु, यया झटित्येव संसारिणः सत्त्वा भवबन्धनान्निर्मुक्ता भवन्तीति। तदनन्तरं पुण्यपरिणामनां कुर्य्यात्। सप्तविधानुत्तरपूजापापदेशनाकुशलमूलमुपजातं तत् सर्व्वं सम्यक्सम्बोधये[4] परिणामयामीति। अथवा समासतः सप्तविधानुत्तरपूजासूचकं श्लोकमेनं पठेत्—

सर्व्वं पापमहं दिशामि परमं प्रीत्यानुमोदे[5] शुभान्
आ[6] जन्मस्थितयेऽर्थये भगवतः सद्धर्म्मरत्नस्य च।
रत्नानां त्रयमभ्युपैमि शरणं बोधौ दधे मानसं
तन्मार्गं च समाश्रये शुभविधीन् सम्बोधये नामये॥

इत्यनेन सप्तविधानुत्तरपूजां विधाय ॐ मुः[7] इति विसर्ज्जयेत्। अथवा—

शीलचन्दनलिप्ताङ्गा ध्यानप्रावरणावृताः।
बोध्यङ्गकुसुमाकीर्णा विहरध्वं यथासुखम्॥

इत्यनेन। तदनन्तरं चतुर्ब्रह्मविहारं मैत्रीकरुणामुदितोपेक्षासंज्ञकं वक्ष्यमाणक्रमेण भावयेत्। तत्र केयं मैत्री?

1 मण्डलः in A.
2 A omits.
3 A मा।
4 A ०म्बोधिं।
5 A ०मोदान्।
6 या जन्म० in A.
7 AN ॐ आः हूं।

सर्व्वसत्त्वेष्वेकपुत्रप्रेमतालक्षणा, अथवा हितसुखोपसंहारा-कारेति। करुणा पुनः कीदृशी? दुःखाद् दुःखहेतोः समुद्धरणकामता, त्रिदुःखदुःखमहानलप्रज्वलितसंसार-सौहृभवनप्रविष्टान् जन्तून् ततोऽपि समुद्धरामीत्यध्या-शयो वा करुणा, अथवा त्रिदुःखदुःखितानां सत्त्वानां संसाराम्बुधेः समुद्धरणेच्छा। मुदिता तु ईदृशी। प्रमोदो मुदिता, अथवाऽसदृशे बुद्धत्वे तदुपाये च सर्व्व एव संसारिणः सत्त्वा मया प्रतिष्ठापयितव्या इत्यध्याशयो मुदिता, यद्वा विश्वेषां यानि कुशलानि तेषु तद्भोगै-श्वर्य्यादिषु च आकृष्टचित्तता। कोपेक्षा? प्रतिघानुनय[1]-निबन्धनमपहाय हिताहितेषु जन्तुषु परमहिताचरण[2]-मुपेक्षा, यद्वा सर्व्वस्मिन् प्रेमानुशयरहित परहित[3]धर्म्म-तायां स्वरसवाहिनी प्रवृत्तिरुपेक्षा, अथवा [4]लाभालाभ-यशोऽपयशोनिन्दास्तुतिसुखदुःखेत्याद्यष्टलोकधर्म्मप्रमुख-सकलाप्रस्तुतव्यापारोपेक्षणमुपेक्षा। चतुर्ब्रह्मविहार-भावनानन्तरं सर्व्वधर्म्मप्रकृतिपरिशुद्धतां भावयेत्। सर्व्व एव धर्म्माः प्रकृत्या स्वभावेन परिशुद्धा अहमपि प्रकृति-परिशुद्ध इत्यादिकमामुखीकुर्य्यात्। इमां च सर्व्वधर्म्म-प्रकृतिपरिशुद्धतामनेन मन्त्रेणाधितिष्ठेत् ॐ स्वभाव-शुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति। यदि प्रकृति-परिशुद्धाः सर्व्वधर्म्माः कुतस्तर्हि संसारमावहति? ग्राह्य-ग्राहकादिमलावृतत्वात्। तद्विगमोपायः सन्मार्गभावना, तया स निरुद्धः स्यात्। अतः प्रकृतिपरिशुद्धाः सर्व्व-

[1] A प्रतिघ्रानयन०।  [2] N परममहिताचरण, A ०हितावरणः।
[3] ०परहित० dropped in A.  [4] A लाभयशो०।

धर्म्मा इति सिद्धम्। सर्व्वधर्म्मप्रकृतिपरिशुद्धतां विभाव्य सर्व्वधर्म्मशून्यतां विभावयेत्। तत्रेयं शून्यता। [1]ग्राह्यग्राहकादिसकलकल्पनाप्रपञ्चवञ्चितचित्ताद्वैतप्रकाशमात्रात्मकं सचराचरं विश्वमिति चिन्तयेत्। इमामेव शून्यतामनेनापि मन्त्रेणाधितिष्ठेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति। तदनु पूर्व्वहृदिस्थमृगाङ्कमण्डलमध्यवर्त्तिलसन्नी[2]लोत्पलकिञ्जल्काभ्यन्तरस्थितनिष्कलङ्कनिशानाथमण्डलोपरिस्थितात् पीततांकारबीजाद् भगवतीमार्य्यतारामुत्तमश्यामवर्णां द्विभुजां प्रहसितवदनां निरुत्तराशेषगुणशालिनीं निःशेषदोषरहितां दिव्यसुवर्णमाणिक्यमुक्तारत्नाद्याभरणभूषितां मनोहारिहारावली[3]शतालङ्कृतकुचयुग्मां दिव्यकङ्कणकेयूरादिमण्डितबाहुद्वयां मेखलामलमणिगणकिरणावलीसुशोभितनितम्बभागां नानारत्नखचितरणन्[4]नूपुरविशोभितचरणयुगलां पारिजातादिकुसुममञ्जरीपरिमलपरिकलितचारुनिबद्धकेशां भगवदमोघसिद्धितथागतरत्नविराजितशिरोदेशां सातिशयमूर्त्तिमतीं परमशृङ्गारोज्ज्वलविग्रहां अभिनवयौवनवतीं शरदमलनीलोत्पलनेत्रां दिव्यसर्व्वपटाम्बरावृतशरीरां शकटचक्रप्रमाणमितकमलोपरिसितरश्मिमण्डलोपविष्टामर्द्धपर्य्यङ्कस्थितां दक्षिणकरेण वरदां वामेन [5]विकचकान्तेन्दीवरं बिभ्रतीं निष्पाद्य चिन्तयेत्। एवंरूपां भगवतीं यावदिच्छति तावद् विभावयेत्।

[1] ग्राह्य°, dropped in N.
[2] C °वर्त्तुलवन्नी°।
[3] A °वलीन°।
[4] C °चलन्नूपुर°।
[5] N विकचकाचका°।

तदनन्तरमस्या एव भगवत्या हृदिस्थहिमांशुमण्डलमध्यावस्थितमञ्जुनीलसरोजकिञ्जल्कान्तर्गतकलङ्काङ्कवर्जितकुमुदबान्धवमण्डलमध्यावलीनपीतताँकारबीजविनिर्गतानेकमरीचिमालाभि[1]स्त्रैलोक्यालोककारिणीभिस्तयाऽनादिसंसिद्धा भगवती ज्ञानसत्त्वरूपाऽप्याकाशादानीयते[2]। आनीय तामाकाशदेशेऽवस्थाप्य रत्न[3]भाजनावस्थितसुगन्धितोयेन सुरभिकुसुमेन च तस्या एव भगवत्याश्चरणार्घं दत्त्वा दिव्यपुष्पधूपदीपनैवेद्यगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकादिभिर्बाह्यगुह्यपूजाभिर्बहुविधाभिश्च तामेव भगवतीं पूजयेत्। पुनः पुनः सम्पूज्य स्तुत्वा च मुद्रां दर्शयेत्। सम्पुटाञ्जलिं कृत्वा मध्यमे सूचीं कुर्यात्। तयोः पर्व्वद्वयोपरि किञ्चित् सङ्कोच्य तर्ज्जन्यौ धारयेत्। अङ्गुष्ठौ समौ कृत्य तत्पर्व्वद्वयसमीपे स्थापयेत्। अनामिके करपुटे स्थाप्य कनिष्ठे प्रसार्य्य श्लिष्टीकृत्य दर्शयेदिति विकचोत्पलमुद्रेयम्। अनया मुद्रया तामेव भगवतीं ज्ञानसत्त्वरूपां सन्तोष्य अत्रैव समयसत्त्वरूपाया भगवत्या मन्त्वं भावयेदित्यनयोरद्वैतमधिमुञ्चेत्।

तदनु निशीथिनीनाथमण्डलमध्यनिविष्ट[4]विकचनीलाम्बुजकिञ्जल्कान्तर्लीननिष्कलङ्केन्दुमण्डलोपरिस्थितपीतताँकारबीजनिर्गताश्चापर्य्यन्ताश्च तारादेव्या दशदिग्लोकधातून् समव[5]भास्य तत्स्थितानामपि सत्त्वानां नानारत्नवर्षणेन दारिद्र्यादिदुःखमपनयन्ति। क्षणिकनैरात्म्यादि-

---

[1] ०स्त्रैलोक्या० ...... कुसुमेन repeated in C.

[2] A ०दानीयन्ते।

[3] A ०लजावस्थित०।

[4] A ०मध्यविष्ट०।

[5] N ०धातुमव०।

धर्म्मदेशनामृतेन तान् सन्तर्पयन्ति। पुनः पुनर्नाना-प्रकारं जगदर्थं कृत्वा विश्वमपि तारारूपं निष्पाद्य तथापि पीतताँकारबीजे ताश्चान्तर्भवन्तीत्येवमादिस्फुरणसंहरण-क्रमेण यावत् खेदो न जायते तावद् भावयेत्। भावनातः खिन्नो मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ तारे तुत्तारे तुरे स्वाहा। महाप्रभाव एवायं मन्त्रराजः सर्व्वैरेव तथागतै-र्वन्दितः पूजितः सत्कृतश्चेति ध्यानाद् व्युत्थितो[1] जगत् तारारूपं दृष्ट्वा भगवत्यहङ्कारेण यथेष्टं विहरेदिति। प्रायोऽमुना क्रमेण भगवतीं भावयतोऽष्टमहासिद्धयश्चर-णयोर्निपतन्ति, किं पुनरन्याः सिद्धयः! अपि तु ताश्च सुतरामेव। यश्च विजनगिरिगुहासीनः सन् भगवतीं भावयेत् स खलु प्रत्यक्षत एव तां पश्यति। स्वयमेव भगवती तस्याः श्वासप्रश्वासादिकं ददाति। किं बहु वक्तव्यं, परमदुर्ल्लभं बुद्धत्वमपि[2] करतलगतं तस्यावतिष्ठते।

॥ इति किञ्चिद्विस्तरं तारासाधनं समाप्तम्।

पुण्यं मया भगवतः खलु साधने यत्
प्राप्तं प्रकृष्टममलं विपुलं च तेन।
तारे त्रिलोकविदिते वरसाधनं ते
कृत्वा जनो जिनपुरं त्वरितं प्रयातु॥

तारायाः साधनं किञ्चिद्विस्तरं विरचय्य यत्[3]।
लब्धं तेन शुभं लोकः[4] प्रयातु शमपत्तनम्॥

। कृतिरियं पण्डितस्थविरानुपमरक्षितानाम्॥

---

[1] A व्यथितो।
[2] A बुद्धत्वं रिपुकर०।
[3] A विलम्ब्य तत्।
[4] A लोकैः।

99.

नम आर्य्याष्टमहाभयतारिण्यै।

यस्याः स्मरणमात्रेण नष्टमष्टभयानकम्।
तां प्रणम्य प्रवक्ष्यामि साधनं च शिशो शृणु॥
ध्यात्वा गगनमध्ये तु तारामष्टभयापहाम्।
पूजां मनोमयीं कृत्वा कुर्य्यात् पापस्य देशनाम्॥
पुण्यानुमोदनां पश्चादात्मपुण्यस्य यातनाम्।
आत्मभावं ततो दद्यात् शरणानि त्रिधा पुनः॥
करोत्यकरणं पश्चात् शून्यतायास्त्वनन्तरम्।
स्वहृच्चन्द्रे[1] ततः पद्ममष्टदलविकाशिनम्॥
तन्मध्ये ताँ विचिन्त्यैव नीलाभमुत्पलं ततः।
तस्य मध्ये पुनर्बीजं वह्निरश्मिप्रभास्वरम्॥
तेन देवीं समुत्पाद्य सर्व्वालङ्कारभूषिताम्।
सव्यतो वरदां देवीं वामे तूत्पलकरां तथा॥
एकवक्त्रां सुबिम्बां च नवयौवनसंस्थिताम्।
सुगन्धिपुष्पकेशां च पद्मचन्द्रोपरिस्थिताम्॥
अर्द्धपर्य्यङ्कमवष्टभ्य रक्षयेद् भुवनत्रयम्।
अष्टदेव्यन्तराले च[2] भावयेत्ताररूपिणीम्।
स्फुरन्मन्त्रतया योगी कृत्वा ध्यानमनाविलः॥

ॐ तारे तुत्तारे तुरे स्वाहा। ॐ ॐ स्वाहा पूर्व्वे, ॐ ता स्वाहा दक्षिणे, ॐ रे स्वाहा पश्चिमे, ॐ तु स्वाहा उत्तरे, ॐ त्ता स्वाहा वह्निकोणे, ॐ रे स्वाहा नैरृत्यां, ॐ तु स्वाहा वायव्ये, ॐ रे स्वाहा ऐशान्याम्।

---

[1] N ०चन्द्रं। [2] A ०न्तरालेषु।

सर्व्वाः श्वेताः स्फुरद्रूपा यथा देवी तथा पराः ॥
ॐ ताँ तारिण्यै वज्रपुष्पं प्रतीच्छ स्वाहा पुष्पं देय
गन्धनैवेद्यादिकं उत्पलमुद्रया निवेदयेदिति ।

कृत्वा साधनमेवेदं नवदेवीसमन्वितम् ।
हत्वाऽष्टभयं च सर्व्वं करोतु जगदुत्तरम् ॥

॥ आर्य्याष्टमहाभयताराया: साधनं समाप्तम् ॥

---

100.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं रक्तआःकारज-रक्तपद्मोपरि सितटाँ[1]कारजपद्मभाजने सूर्य्यस्थनीलहुँकार-जसबीजकर्त्ति[2]परिणामेन कृष्णा[3]मार्य्यताराभट्टारिकां चतुर्भुजैकमुखीं त्रिनेत्रां खर्व्वलम्बोदरां दंष्ट्राकरालवदनां प्रत्यालीढपदेन शवा[4]रूढां नागाष्टकभूषणां व्याघ्रचर्म्म-वसनां अवलम्बमानमुण्डमालां पञ्चमुद्राविभूषितां खड्ग-कर्त्तिधारिदक्षिणकरामुत्पलकपालधारिवामकरां माक्षोभ्य-नाथपिङ्गलजटाजूटां[5] अतिघोराट्टहासभीमरूपां निष्पाद्य ॐ ह्रीँ हुँ फट् इति मन्त्रं[6] विषयप्रज्ञाधि[7]कारेण जपेत् ।

निरंशुमालिकां ध्यात्वा खड्गस्थाने विचक्षणः ।
स्फुरत्संहारयोगेन संजपेत् मन्त्रमुत्तमम् ॥

॥ इति महाचीनक्रमार्य्यतारा[8]साधनम् ॥

---

[1] ANC ०ताँ० ।
[2] A कर्त्ता० ।
[3] AN कृष्टा० ।
[4] A ०पदां पश्चशवा०, N ०पदां शवा० ।
[5] A जूटीं ।
[6] N अभिमन्त्रं ।
[7] A ०कारं, N कारे ।
[8] B ०क्रमतारा० ।

101.

प्रत्यालीढपदार्पिताङ्घ्रिशववह्[1]द्घोराट्टहासा परा
खड्गेन्दीवरकर्त्रिकार्पितभुजा हुँकारबीजोद्भवा।
खर्व्वा नीलविशालपिङ्गलजटाजूटोग्रनागैर्युता
जाड्यं न्यस्य कपाल[2]के त्रिजगतां हन्त्युग्रतारा स्वयम्॥

महाचीनक्रमां नत्वा तारां त्रिभवतारिणीम्।
तत्साधनमहं वक्ष्ये यथा गुरूपदेशतः॥
एकलिङ्गे श्मशाने वा शून्यागारे च सर्व्वदा।
तत्रस्थः साधयेद् योगी विद्यां त्रिभवमोक्षणीम्[3]॥
मृदुमस्तरक[4](स)मासीनोऽन्येषु कोमलेषु वा।
विष्टरेषु समाश्रित्य साधयेत् सिद्धिमुत्तमाम्॥
झटित्याकारयोगेन त्रिवज्रं सुसमाहितः।
त्रिषु स्थानेषु तं ध्यात्वा रश्मिं विस्फारयेत् ततः॥
त्रिभवचारिणः सत्त्वानवभास्यानयेत् पुनः।
संहारे च पुनर्ध्यायाच्छून्यं विश्वं समन्ततः॥

ततः—

पठेत् जिनमन्त्रकं ॐ शून्यतादिस्वभावकम्।
अन्तरीक्षं ततो ध्यायादाःका[5]राद् रक्तपङ्कजम्॥
भूयस्तस्योपरि ध्यायात् टाँका[6]रात् पद्मभाजनम्।
तस्य मध्ये पुनर्ध्यायात् हुँकारं नीलसन्निभम्॥

---

[1] A ०द्घोरा हृष्टा च।
[2] A ०कंति।
[3] B मोच्छिणीं।
[4] C ०मचूलक०, N ०चूलक०।
[5] A आका०, B आंका०।
[6] AC ताङ्का०।

ततो हुँकारजं पश्येत् कर्त्रिकां बीजभूषिताम् ।
कर्त्रिपरिणतं ध्यायादात्मानं तारिणीसमम् ॥

प्रत्यालीढपदां घोरां मुण्डमालाप्रलम्बिताम् ।
खर्व्वलम्बोदरां भीमां नीलनीरजराजिताम् ॥

त्र्यम्बकैकमुखां दिव्यां घोराट्टहासभासुराम् ।
सुप्रहृष्टां शवारूढां[1] नागाष्टकविभूषिताम् ॥

रक्तवर्त्तुलनेत्रां च व्याघ्रचर्म्मा[2]वृतां कटौ ।
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ॥

ललज्जिह्वां महाभीमां सदंष्ट्रोत्कटभीषणाम् ।
खड्गकर्त्रिकरां सव्ये वामोत्पलकपालधाम् ॥

पिङ्गोग्रैकजटां ध्यायात् मौलावक्षोभ्यभूषिताम् ।
भावनाचलनिष्पत्तौ भवेद् योगी महाकविः ॥

जडोऽपि यदि मूर्खः स्याद् भावनारसतत्परः ।
लभते [4]मञ्जुवाणीं तु लक्षमन्त्रस्य जापतः ॥

[5]त्र्यक्षरोऽसौ महामन्त्रः [6]हुँकारान्तो हृदि स्थितः ।
पञ्चरश्मिसमायुक्तो अज्ञानेन्धनदाहकः ॥

तस्य द्वारविधिं वक्ष्ये योगाचारानुसारतः ।
प्रथमं [7]हपरं दत्त्वा चतुर्थस्वरभूषितम् ॥

---

[1] A प्रहृष्टाङ्गे चारूढां ।  [2] A ०वृता कात्रिं, N ०वृतकटिं ।
[3] B reads ०धरां, which, though more grammatical, spoils the metre.
[4] A मञ्जुवर्गान्तु ।  [5] A व्यद्य० ।
[6] C ऊँकारान्ता, B ऊँकारान्तां ।
[7] B मं सरं, ANC मंपरं ।

रेफारूढं स्फुरद्दीप्तमिन्दुबिन्दुसमन्वितम् ।
हँकारं[1] च ततो दद्यात् चतुर्थेनैव भूषितम् ॥

दीर्घाकार[2]समायुक्तं हँकारं योजयेत् पुनः ।
हँकारं च ततो दद्यात् सम्पूर्णं सिद्धमन्त्रकम् ॥

निरंशुमालिकां ध्यात्वा खड्गस्थाने विचक्षणः ।
स्फुरत्संहारयोगेन संजपेत् मन्त्रमुत्तमम् ॥

कल्पयेत् स्थिरचित्तेन पण्डितोऽहं महाकविः ।
अजस्रभावनाभ्यासाद् भवत्येव न संशयः ॥

ताराया: साधनं कृत्वा यन्मयो[3]पचितं शुभम् ।
भवन्तु प्राणिनस्तेन पण्डिता जिनशासने ॥

कृतिः शाश्वतवज्रस्य सेयं मेधाप्रसाधनी ।
अगाधाः पण्डिता अत्र क्षन्तुमर्हन्ति साधवः ॥

॥ महाचीनक्रमतारासाधनं समाप्तम् ॥

---

[1] C उँ ।
[2] C दीर्घोकार० ।
[3] AN यन्ममा० ।

## 102.

नमः सिततारायै ।

पूर्व्ववच्छून्यतापर्य्यन्तं विभाव्य ।

सितारविन्दमध्यस्थां ताँभूतां चन्द्रविष्टराम् ।
आबद्धवज्रपर्य्यङ्कां वरदोत्पलधारिणीम् ॥
शरच्चन्द्रकराकारां पृष्ठचन्द्रसमाश्रिताम् ।
सर्व्वालङ्कारसम्पूर्णां षोडशाब्दवपुःक्रमाम् ॥
ध्यात्वाऽऽर्य्यतारां हृदये तस्याश्चक्रं सितद्युति ।
अष्टकोष्ठकमष्टाभिरक्षरैः परिपूरितम् ॥
ॐहाव्यञ्जनमध्यस्थसाध्यनामाद्यनाभिकम् ।
ध्यायादेकाग्रचित्तः सन् षण्मासान् दृढनिश्चयः ॥
जपेदखिन्नचित्तः सन् मन्त्रमेनं दशाक्षरम् ॥

तत्रैष मन्त्रः ॐ तारे तुत्तारे तुरे स्वाहा ।

मृत्युदोषैर्न्न लिप्तः स्यात् ताराहृच्चक्रभावकः ।
लाभी च सर्व्वसिद्धीनां षण्मासावधि तत्परः ॥

॥ मृत्युवञ्चनतारासाधनम् ॥

---

[1] Ab सितं ।

# साधनमाला ।

## 1.

ॐ नमः सर्व्वबुद्धबोधिसत्त्वेभ्यः ।

श्रीमच्चित्तसमयं वन्दे सर्व्वसम्पत्सुखोदयम् ।
भवदुर्गतिखिन्नानां चिन्तारत्नमिवाद्भुतम् ॥
अस्त्येव साधनं सम्यक् पूर्व्वाचार्य्यैरिहोदितम् ।
किन्तु विस्तरभीरूणां संक्षिप्तमुपदिश्यते ॥

इह खलु श्रीचित्तसमयराजे महातन्त्रराजे महातन्त्रे[1] मन्त्रमण्डले रजोमण्डले[2] वा विधिवल्लब्धाधिकारो मन्त्री तदुक्तसमयसम्वरस्थः पूर्व्वसेवां चिकीर्षुः पर्व्वतारण्यादिषु गुहागृहारामशयनादिषु वा विविक्तविजनेषु मनोरमेषु वसन् आदौ तावदिमां मूलविद्यां बुद्धप्रतिमाया अग्रतो[3] मण्डलकं[4] पुष्पाभिकीर्णं कृत्वा प्रणम्य बोधिचित्तमुत्पाद्य सर्व्वबुद्धबोधिसत्त्वेभ्य आत्मानं निर्यात्य तत्प्रणामालम्बन[5]जापमभ्यसन्[6] सहस्रं जपेत् । ततः सर्व्वमन्त्राणां लक्षजापः[7] कृतो भवति । सर्व्वरक्षादिमन्त्राश्चास्य सिद्धा भवन्ति । तत्रेयं विद्या—

---

[1] A reads तन्त्रमण्डले ।
[2] रजोमण्डले dropped in all other MSS except N.
[3] A reads •रान्तर• ।
[4] ANa मण्डलम् ।
[5] ANa •जप ।
[6] •सन् in N.
[7] ANa •जापम् ।

नमः सर्व्वबुद्धबोधिसत्त्वानां अमला मलहारका अनन्ताः ससुताः सर्व्वजिना असौमनिष्ठा वरदा[1] मम देन्तु[2] अत्युदारं वरमग्र्यं सम सर्व्वदा अनन्तम्। तत्र इमे वज्रपदाः। अरर असम सम[3] समन्तानन्त धर्म्मं ते खण खण महावीराचले सम सम असह्यमहाबले कण कण महावराग्निके हह हह[4] वज्रवज्राह्वये धर धर हुँ हुँ मण्डलं ममबला[5]ग्रविक्रमे कुरु कुरु तुरु तुरु सर्व्वथा सर्व्वं हि ज्वल ज्वल अग्रे अग्रिणि हुँ फट्[6] स्वाहा।

ततः सर्व्वकर्म्मावरणक्षयार्थं सर्व्वतथागतहृदयं शताक्षरं तेनैव विधिना अष्टसहस्रं जपेत्। सद्धर्म्मदूषणानन्तर्य्यादिकं कर्म्मावरणं प्रहीयते। इदं च तत्—

नमस्त्रैयध्विकानां तथागतानां सर्व्वत्राप्रतिहतावाप्ति-धर्म्मतावलीनां ॐ[7] असम सम समन्ततोऽनन्ततावाप्ति-शासनि हर हर स्मर स्मरण विगतराग बुद्धधर्म्मे ते सर सर समबला हस हस त्रय त्रय[8] गगनमहावर[9]लक्षणे[10] ज्वल ज्वलनसागरे स्वाहा।

ततः स्वपराभ्युदयसाधनाङ्गमेवं पूर्व्वमेवाविधिमनु-तिष्ठेत्। तत्रादौ प्रातरेवोत्थाय सर्व्वबुद्धबोधिसत्त्वान् स्वामिनो[11] अध्यासयेत्। एवं प्रणमेत्—

लोकधातुष्वनन्तेषु यावन्तः ससुता जिनाः।
कायेन मनसा वाचा तान् सर्व्वान् प्रणमाम्यहम्॥

---

[1] ANa ०वर।
[2] *sic.* correct form is ददतु।
[3] ANa असमसमन्ता०।
[4] ANa ऊऊ ऊऊ।
[5] ANa ०वराग्र०।
[6] ANa फट् फट्।
[7] ANa वं।
[8] ANa चयं चयं।
[9] ANa महाबल।
[10] ANa रम्भणे।
[11] *sic.* ANa ०नाध्या०।

ततो बोधिचित्तमुत्पादयेत्—

उत्पादयामि सम्बोधौ चित्तं बोधाय देहिनाम् ।
भद्रचर्य्यां चरिष्यामि सर्व्वसत्त्वहितोदयाम् ॥

ततः सर्व्वविघ्नविनाशार्थमचलहृदयममोघचण्डं[1] वज्रमुद्रां बद्ध्वा त्रिरुच्चारयेत् । तत्रेयं वज्रमुद्रा । दक्षिणहस्तमूर्द्ध्वं प्रसृतं कृत्वा वृद्धाङ्गुष्ठेन तर्ज्जन्यग्रमा[2]क्रमेत् । शेषा वज्रलक्षणाः । मन्त्रः । नमः समन्तवज्राणां चाट् अमोघचण्ड महारोषण स्फाटय हुँ भ्रमय भ्रमय हुँ त्रट् हाँ माँ । स्वस्तिकं च बध्नीयात् । श्लिष्टाङ्गुलिमभ्यन्तरमुष्टिं कृत्वा मध्यमे सूच्यौ तर्ज्जन्यौ[3] चाङ्गुष्ठाग्र ईष[4]त्संसक्ते[5] धारयेत् । मन्त्रः । ॐ हर हर महानिमित्त हुँ फट् स्वाहा ।

ततो मुखशौचादिकं कृत्वा सुखासनोपविष्टः पटपुस्तकप्रतिमादीनामन्यतमस्याग्रतो दशदिक्स्थितबुद्धबोधिसत्त्वानवलम्ब्य मुक्ताकुसुमावकीर्णं मण्डलकं[6] कृत्वा पूर्व्ववद् गाथया सर्व्वाङ्गतः प्रणम्य बोधिचित्तमुत्पाद्य एव सर्व्वबुद्धबोधिसत्त्वेभ्य आत्मानं निर्यातयेत् । अहमेवंनामा सर्व्वबुद्धबोधिसत्त्वानामात्मानं निर्यातयामि सर्व्वथा सर्व्वकालं प्रतिगृह्णन्तु मां सर्व्वबुद्धबोधिसत्त्वा अधितिष्ठन्तु मां महाकारुणिका नाथाः सिद्धिवरदायकाश्च[7] भवन्त्विति ।

ततः सर्व्वपापानि देशयेत् । सर्व्वपापान्[8] रागद्वेष-

---

[1] ANa अमोघचण्ड० ।    [2] N ०न्यग्रया ।
[3] तर्ज्जन्यौ dropped in ANa.    [4] A ईषदं ।
[5] NNa ससक्तं ।    [6] ANa मण्डलं ।
[7] Na ०वलदायका० N ०वरदाका० ।
[8] ANa ०पापानुराग० ।

मोहजान् सार्व्वकालिकानशेषान्[1] देशयामि यथा बुद्धा भगवन्तो जानन्तीति ।

[2]ततः पुण्यमनुमोद्यम् । सर्व्वबुद्धबोधिसत्त्वानां ये पुण्यज्ञानसम्भारा लौकिकलोकोत्तरास्त्रैकालिकास्तानग्र्यानुमोदनयाऽनुमोदेया यथा बुद्धा भगवन्तो जानन्तीति ।

ततः पर्य्यङ्कावस्थित इमां समयमुद्रां बध्नीयात् । प्रणामाञ्जलिः शिरसि स्थितः समयमुद्रा । मन्त्रः । नमः सुसिद्धे[3] साधनि अग्ने करुणे वरदे तयि तयि अतिबले नमोऽस्तु[4] वरसिद्धिदायकेभ्यो[5] महात्मपेभ्यः स्वाहा । अनया सर्व्वमुद्रामन्त्राणां समयः सन्दर्शितो भवति ।

ततः पूर्व्ववद् वज्रमुद्रां बद्धा अचलहृदयमनुस्मरेत् । नमः समन्तवज्राणां अचल कालचण्ड साधय[6] हुँ फट् । ततो वज्रोष्णीषमुद्रां शिरसि न्यसेत्, दक्षिणमुष्टौ अङ्गुष्ठकं स्थितकं कुर्य्यात् । मन्त्रः । नमः सर्व्वबुद्धबोधिसत्त्वानां त्रिशि[7]खाग्नि नमोऽस्तु ते । समन्ता[8]त्रिगुणाचलाग्रधर्म्मं विधुनाहि[9] क्लेशदुःखजालान् जगतः सर्व्वसुखान् ददाहि[10] चाशु तवेदं त्रिसमये कुरु स्वाहा । अनया मन्त्री महायानान्न परि[11]हीयते निर्विघ्नसिद्धिश्च भवति । पुनश्च महां महारक्षां पञ्चसु स्थानेषु न्यसेत् । महारक्षा भवति । उत्तानमञ्जलिं कृत्वा कन्यसा[12]नामिके करमध्ये

---

[1] N drops अशेषान् ।

[2] N drops ततः......जानन्तीति ।

[3] ANa सुसिद्ध ।

[4] ANa नमो ।

[5] ANa वरदायिभ्यो ।

[6] ANa ॰साधये ।

[7] ANa त्रिशिखोग्नि ।

[8] A समन्तादसमन्ता ।

[9] A बन्धुना हि, Na विधुनादि, N विधुनादि ।

[10] *sic.* A ददहि ।

[11] A ॰मानानुपरि ।

[12] A ॰ङ्गमन्यसा, Na कन्यानाा॰ ।

कन्यसा बहिःसूचीषदवनता अनामिका तस्या उपरि अङ्गुष्ठो न्यसेत् । मध्यमा सूची[1] पूर्व्वा तस्याः पार्श्वे[2] तर्जन्यौ कुञ्चयित्वा तृतीयपर्व्वे न्यसेत् । असह्या नाम महामुद्रा । मन्त्रः । नमः समन्तवज्राणां ॐ हँ[3] स्फाटयामहे हुँ फट् ।

ततो महाकवचमुद्रया अजितवज्रया कवचं कुर्य्यात् । कन्यसाङ्गुष्ठौ शङ्कु[4]लाकारेण अन्याः संसक्तमूलमध्या[5]ग्राः । अजितवज्रा । मन्त्रः । नमः समन्तवज्राणां ॐ हँ हुँ[6] वज्रमये वरकवचे ह्रो वज्र वज्र हुँ फट् ।

तदेवं मारादिभिः सुतरामधृष्यो[7] भवति । एवमात्मरक्षां कृत्वा स्थानरक्षां कुर्य्यात् । तत्र वज्रासनमुद्रया आसनं वज्रमयमधितिष्ठेत् । पर्य्यङ्कं बद्धा उत्तानवामकरस्योपरि दक्षिणकरं निवेशयेदुत्सङ्गे[8] वज्रासनमुद्रा । मन्त्रः । नमः समन्तवज्राणां ॐ हँ हुँ वज्रासने वँ हुँ फट् ।

ततो वज्रमण्डपमुद्रया स्वस्थानं वज्रमयमधितिष्ठेत् । प्रणामाञ्जल्या तर्ज्जनीद्वयमनामिकाद्वयं च मध्य[9]पर्व्वभग्नमभ्यन्तरतः प्रवेश्य चतुःस्थूणाकारेण शेषाः सूच्याकारेण वज्रमण्डपमुद्रा । मन्त्रः । नमः समन्तवज्राणां ॐ हँ हुँ वज्राग्रभुवने[10] मं हुँ फट् । ततो वज्रप्राकारं तन्मुद्रया न्यसेत् । उत्तानमञ्जलिं कृत्वा अनामिकाद्वयं मध्ये न्यस्य मध्यमा सूची तर्ज्जनीयुगलं वज्राकारेण तृतीयपर्व्वे

---

[1] सूची dropped in ANa.
[2] ANa पार्श्वेत ।
[3] ANa हुं हं ।
[4] N पंक० ।
[5] ANa ०मध्यमा० ।
[6] ANa हुं ।
[7] ANa सुरामधृष्यो ।
[8] ANa ०दुत्तमाङ्गे ।
[9] ANa मध० ।
[10] A ०यमुवनमे ।

न्यसेत् अङ्गुष्ठौ च पार्श्वतः[1]। प्राकारमुद्रा। मन्त्रः। नमः समन्तवज्राणां ॐ हँ हुँ वज्रमण्डले बन्ध बन्ध हुँ फट्।

ततस्तदुपरि वज्रपञ्जरं तन्मुद्रया न्यसेत्। प्रणामाञ्जलेरनामिकायुगलं तर्ज्जनीयुगलं विपरीतपृष्ठभग्नमिति। अनरमिकातर्ज्जन्योरुपरि चक्रेण तावेव[2] देयौ[3] त एव देये विपरीतपृष्ठभग्नं मध्यमा सूची तथा कनिष्ठिकाङ्गुष्ठौ। पञ्जरमुद्रा। मन्त्रः। नमः समन्तवज्राणां ॐ हँ हुँ वज्राग्रभुवने[4]मुः हुँ फट्।

ततो वज्रज्वालावहितस्तन्मुद्रया[5] न्यसेत्। अभयकरस्योपरि वामं संहताङ्गुलीकं दक्षिणेन भ्रामयेत्। वज्रज्वाला। मन्त्रः। नमः समन्तवज्राणां ॐ हँ हुँ वज्रज्वाले[6] हुँ फट्।

ततः सीमां बध्नीयात्। दक्षिणकरमुष्ट्या[7] तर्ज्जनीमुच्छ्रितां कृत्वा दक्षिणेन भ्रामयेत्। असीमा नाम सीमाबन्धनी। अस्या मन्त्रः। नमः समन्तवज्राणां ॐ हँ हुँ महासीमाबन्धे बन्ध बन्ध वज्रे वज्रिणि हुँ फट्।

ततः स एवं कृतरक्षापरिकरः स्वस्थानस्थितेभ्य एव बुद्धबोधिसत्त्वेभ्यस्तथागतसम्भवमुद्रया अर्घ्यं[8] प्रकल्पयेत्। ततस्ते समन्वाहरन्ति सिद्धिवरदायकाश्च भवन्ति। मुष्टिकरसंस्थाना[9] कनिष्ठिकाभ्यां विकसिताभ्यां तथागतसम्भवमुद्रा। मन्त्रः। नमः सर्व्वबुद्धबोधिसत्त्वानां आः अमलविक्रान्ततेजिनि अरजे स्वाहा। ततो बाह्यगन्धा-

---

[1] ANa चङ्कुष्ठौ पार्श्वतः। [2] A भावेव।
[3] A देयां। [4] ANa ०भुवन।
[5] ANa ०ह्रि तन्मुद्रया। [6] ANa omit वज्रज्वाले ॐ।
[7] ANa पुष्ट्या। [8] ANa चर्यं। [9] ANa ०स्थामा।

ह्युपचारा[1] सम्भवे[2] अचलवज्रमुद्रया परिशोध्य गन्धादीन् प्रति प्रति[3] स्वमन्त्रैरष्ट वारानभिमन्त्र्य पूजां कुर्य्यात्। तत्र गन्धमन्त्रः। नमस्त्र्यैयध्विकानां सर्व्वतथागतानां असमगन्धोत्तमे भगवति स्फुर[4] हिमं गगनकं महोदये[5] सर्व्वार्थसाधनि स्वाहा। पुष्पमन्त्रः। नमस्त्र्यैयध्विकानां सर्व्वतथागतानां आवर्त्ता[6] वर्त्तमहापुष्पवति स्वाहा। धूपमन्त्रः। नमःस्त्र्यैयध्विकानां सर्व्वतथागतानां अग्रे अग्रशिखे[7] धूमशिखे[8] स्वाहा। दीपमन्त्रः। नमस्त्र्यैयध्विकानां सर्व्वतथागतानां आलन्ते ज्वलन्ते दीपज्योतिशिखे[9] स्वाहा। नैवेद्य[10] मन्त्रः। नमस्त्र्यैयध्विकानां सर्व्वतथागतानां अरर परर करर बलिदे बलिं ददाहि महाबलि स्वाहा। ततो दशदिग्लोकधातुस्थितचित्रपूजाङ्गान्येवं निर्यातयेत्। प्रणामाञ्जलिं बद्धा ये असमा अपरिग्रहा दशदिग्लोकधातुषु[11] पूजाङ्गविशेषाः स्थलजा रत्नपर्व्वतकल्पवृक्षादयो जलजाः सामुद्ररत्नादयः कनकपङ्कजादयश्च ये चान्ये सर्व्वलोकधातुषु दिव्यमनुष्यकाः सर्व्वरूपशब्दगन्धरसस्पर्शादयस्तान् सर्व्वान् बुद्धबोधिसत्त्वेभ्यो निर्यातयामीत्युदाहरेत्। मनोमयांस्तु पूजामेघा[12] नेवं प्रवर्त्तयेत्। पूर्णमुद्रां सङ्कुचि[13] ताग्रप्रणामाञ्जलि[14] लक्षणां बद्धा एवं वदेत्। सर्व्वबुद्धबोधिसत्त्वाधिष्ठानबलेन समप्रणिधिपुण्यबलेन

---

[1] N गन्ध्याह्य॰, ANa गन्धाद॰।
[2] ANa ॰सम्भव। [3] The second प्रति is dropped in ANa.
[4] N स्फारहिम॰। [5] ANa ॰दय।
[6] N अवर्त्ता॰। [7] ANa ॰शिख।
[8] ANa ॰शिख [9] ANa ॰शिख।
[10] N निवेद्य॰। [11] ANa ॰धातु।
[12] ANa ॰मोघा। [13] ANa संकुरिता। [14] ANa ॰लिर्ल॰।

विद्यामन्त्रबलेन च सर्व्वबुद्धबोधिसत्त्वपर्षन्मण्डलेषु परी-
हाराः समन्तभद्रबोधिसत्त्वचर्य्याभिर्निर्हृता[1] महापूजा-
मेघाः प्रसरन्तामिति चिन्तयित्वा इमां पूजाधिष्ठानकरीं
महाविद्याराज्ञीमष्टौ वारानुच्चारयेत्। नमः सर्व्वबुद्ध-
बोधिसत्त्वानां सर्व्वथा उद्गते स्फुर[2] हिमं गगनकं समन्ततः
स्वाहा।

ततः सर्व्वबुद्धबोधिसत्त्वानां विचित्रगुणवर्णसङ्कीर्त्ति-
मेघसमुद्रा धर्म्मसङ्कीर्त्तिमेघसमुद्राश्च सर्व्वलोकधातुविशो-
धकाः सर्व्वत्र प्रवर्त्तन्तामिति चिन्तयित्वा इमां स्तुति-
सङ्कीर्त्तिमेघाभिर्निर्हारकरीं विद्याराज्ञीमष्टौ वारानुच्चार-
येत्। नमः सर्व्वबुद्धबोधिसत्त्वानां सर्व्वत्र संकु-
सुमिताभिज्ञाराशिनि[3] नमोऽस्तु ते स्वाहा। ततः सर्व्व-
लोकधातुसमुद्रेषु सर्व्वत्र सर्व्वसत्त्वात्मभावसमाः सर्व्वबुद्ध-
बोधिसत्त्वनिर्म्माणमेघाः सर्व्वारम्भणेभ्यो निश्चार्य्य सर्व्व-
सत्त्वानां सर्व्वदुःखानि प्रशमयन्तु सर्व्वलौकिकलोकोत्तर-
सम्पद्दे यावत् समन्तभद्रकायादिशुद्धिं[4] प्रापयन्त्विति
चिन्तयित्वा इमं[5] महाविद्याराजमष्टौ वारानुच्चारयेत्।
नमः सर्व्वबुद्धबोधिसत्त्वानां नमोऽस्तु ते महावज्र सर्व्वसत्त्व-
हितङ्कर तिष्ठ सर्व्वत्र सर्व्वेषां[7] धर्म्माणामधिष्ठाय स्वाहा।
सर्व्वं चैतत्[8] पूजादिकं मन्त्रादिबलेनावितथं सम्भवतीति
श्रद्धेयम्। कुशलमूलं चैतत् अनुत्तरसम्यक्सम्बोधावेवं परि-
णामयेत्। यथा बुद्धा भगवन्तो अभ्यनुजानन्ति परिणाम्य-

[1] ANa ०रहीता।
[2] ANa स्फुर।
[3] ANa ०नाशि०।
[4] ANa ०कायादि।
[5] ANa ०यतु इति।
[6] ANa इमां।
[7] ANa सर्व्वधर्म्मा०।
[8] ANa सर्व्वेषु तत्र।

मानमेतत् कुशलमूलं तथाहं परिणामयामीत्यनेन पुण्ये-नाहं समन्तभद्रचर्य्यया[1] बोधिमभिसम्बुध्य सर्व्व[2]सत्त्वानपि समन्तभद्रचर्य्याशुद्धौ प्रतिष्ठापयामीति[3] ।

ततः सर्व्वबुद्धबोधिसत्त्वाधिष्ठानप्रतिलम्भार्थं तन्मुद्रां बद्ध्वा पूर्व्वोक्तं शताक्षरमनुस्मरेत् पञ्चाक्षरं वा । हस्त-द्वयमन्योन्यपृष्ठं संसक्तमूर्द्धमुखाङ्गुलीकं संयोज्य तर्ज्जन्यौ कनिष्ठिके च शङ्कु[4]लाकारेण मध्यमानामिकासूच्योर्म्मध्ये[5] अङ्गुष्ठद्वयं सममूर्द्धमुखं धारयेत् शताक्षरमुद्रा । पञ्चाक्षर-मुद्रा तु[6] सम्पुटाञ्जलिं कृत्वा तर्ज्जनी[7]द्वयेनाङ्गुष्ठाग्रं पीड़येत्, शेषास्तु तथैव[8] सूच्याकाराः । मन्त्रः । नमः सर्व्वबुद्धबोधि-सत्त्वानां आः वीर हुँ खँ ।

ततः सर्व्वमुद्रासंग्रहभूतं[9] समन्तावभासोष्णीषं[10] धर्म्मचक्रं वा बध्नीयात् । प्रसृतसमोत्तानोभयपाणिनाऽनामिके कर-मध्ये नखेन नखं परिधायाङ्गुष्ठाग्रेण न्यसेत् । कन्यसौ[11] सूच्याकारेण संहताग्रौ तथैव मध्यमे[12] समनखशिखासंसक्ते मध्यप्रदेशिन्यौ सूच्याकारेण[13] समन्तावभासोष्णीषम् । एवं तर्ज्जन्यौ संचार्य्य नखेन[14] नखमालभेत मण्डलाकारेण । धर्म्मचक्रमुद्रा । अनयोर्यथाक्रमं मन्त्रः । आः मँ हँ । ॐ धुन यातय च्छिन्द चक्रेण वज्रिणि हुँ अनयोरन्यतरां बद्ध्वा

---

[1] ANa ०चर्य्या ।
[2] N reads सर्व्वं सर्व्वं० ।
[3] N ०पयेयमिति ।
[4] ANa सकला० ।
[5] ANa ०म्मध्य ।
[6] तु dropped in ANa.
[7] ANa तर्ज्जनीना० ।
[8] ANa सूर्य्या० ।
[9] ANa ०भुत ।
[10] ANa ०ष्णीष ।
[11] ANa ०कम्यसौ ।
[12] ANa मध्यमा ।
[13] ANa drop संसक्ते......सूच्याकारेण ।
[14] ANa नखखं instead of नखेन नखं ।

मन्त्रं सकृदुच्चार्य्य स्थितो निषण्णो वा जपेत्। मारादिभिर्नाभिभूयते, सिद्धिश्चास्याभिमुखीभवति। ततः शीघ्रसिद्ध्यर्थं[1] तावद् धर्म्मोदयमुद्रां बद्धा तन्मन्त्रमनुस्मरेत्। वामहस्तेन मुष्टिं बद्धा तर्ज्जनीकनिष्ठाङ्गुष्ठौ च प्रसारयेदूर्द्धं धर्म्मोदयमुद्रा। मन्त्रः। नमः सर्व्वबुद्धबोधिसत्त्वानां आः सर्व्वथा सर्व्ववाचके स्वाहा। स्वमुद्रया च मन्त्रं सकृदुच्चार्य्य समयं दर्शयेत्। स्वमुद्रा तु यथायोगं वेदितव्या[2]।

ततः सर्व्वबुद्धबोधिसत्त्वप्रणामालम्बनजापमभ्यसन्[3] यथाभिलषितं मन्त्रं न द्रुतं न विलम्बितं असत्सङ्कल्पवर्ज्जितं मन्त्राक्षरगतचित्तं[4] तावज्जपेत् यावन्न खेदो भवति। तत उत्थायार्य्य[5] गण्डव्यूहादिसूत्राणि तथागतहृदयं सकृदनुस्मृत्य वाचयेत्। पूजयित्वा अन्ततः प्रणम्य वा भुञ्जीत। भुञ्जता चानेन मन्त्रेणाहारमष्ट वारानभिमन्त्रितं कृत्वा [6]अग्रपिण्डं सर्व्वबुद्धबोधिसत्त्वेभ्यो निवेद्य मध्यमाचया भोक्तव्यम्। तत्रायं मन्त्रः। नमः सर्व्वबुद्धबोधिसत्त्वानां ॐ वज्रन्दरे[7] तेजोमालिनि स्वाहा। भुक्तशेषाद् वार्यचलायामोच्छिष्ट-हृदयेन सकृदभिमन्त्र्योत्सृष्टपिण्डो दातव्यः। स तत्रानुबन्धः सुखसिद्धितां[8] ददाति। भुक्तविश्रान्तश्च पापदेशनादिकं कृत्वा सद्धर्म्मारात्म एव तिष्ठेत्। यदि[9] शक्तो भवति अपराह्णेऽपि सर्व्वमेतत् रक्षादिपरिकरं पूजादिकं च कृत्वा जपेत्, नो चेत् पूर्व्वाह्णकृतमेव रक्षादि[10]

[1] ANa मन्त्र।
[2] ANa वदितव्या।
[3] N ०भ्यसन्।
[4] ANa मतं चित्तः।
[5] ANa ०त्थायार्घ्यं।
[6] ANa अग्रं।
[7] ANa वज्रन्दर।
[8] N तत्रानुबद्ध।
[9] ANa चविसक्तो।
[10] ANa रक्षादि।

अविसर्जितं [1]स्थितमेव हृदमधिमुच्याचलवज्रमुद्रया समन्त्रया विघ्नोत्सार्य्य पञ्चाक्षरादीनामन्यतमेन मुद्रासहितेन रक्षां कृत्वा पूजास्तुत्यादिकं विधाय पूर्व्ववत् जापं कुर्य्यात्। विकाले च प्राकारपञ्जरादिकं विसर्ज्य रश्मिमालिन्या कवचं कुर्य्यात्। अन्योन्याङ्गुलिसंश्लिष्टामभ्यन्तरमुष्टिं कृत्वा मध्यमे सूच्याकारेण प्रसारयेत् तर्ज्जनीयुगलं तस्या[2]स्तृतीयपर्व्वे न्यसेत्, अङ्गुष्ठौ च पार्श्वतः। रश्मिमालिनीमुद्रा। मन्त्रः। नमस्त्रैयध्विकानां तथागतानां महासमयगतिं गते समते सम सर्व्वथा सत्त्वचारणके[3] धर्म्मधात्वभ्यन्तरसङ्गते स्वाहा। पूर्व्वरात्रापररात्रजागरिका च सद्धर्म्मस्वाध्यायादिना कर्त्तव्या। मध्यमे यामे मत्कुणरहितायां शय्यायां सर्व्वबुद्धबोधिसत्त्वान् सर्व्वाङ्गतः प्रणमन्नेव स्वपेत्[4] विज्ञप्तिं च कुर्य्यात्। अधितिष्ठन्तु मां सर्व्वबुद्धबोधिसत्त्वा अनुत्तरसिद्धिवरदायकाश्च भवन्तु सर्व्वोपद्रवांश्च प्रश[5]मयन्त्विति। अयमेव च विधिः [6]प्रत्यहं यावत् पौर्णमास्यां लक्षजापो वा यावद् वा सिद्धिनिमित्तानि प्रादुर्भवन्ति। ततः पौर्णमास्यादितिथिषु कृतभक्तच्छेदोपवासः [7]पोषधसम्वरी पल्लवोपविष्टः कुशपिण्डकोपविष्टो वा चैत्यपटपुट[8]पुस्तकप्रतिमादीनामन्यतमस्याग्रतः [9]कृतकुसुमावकीर्ण[10]मण्डलकः कृतरक्षापूजादिपरिकरः पूर्व्व-

---

[1] ANa स्थितमेव०।
[2] ANa भूम्या०।
[3] ANa ०चारणक।
[4] ANa प्रणमेत् न च भवेत्।
[5] ANa प्रशम०।
[6] प्रत्यहं dropped in ANa.
[7] ANa ०पोषध।
[8] ANa चैत्यपत०।
[9] A ०कृतकुसुम०।
[10] N ०वर्ण०।

वद् धर्म्मोदयमुद्रां बद्धा[1] तन्मन्त्रमनुस्मरेत्। ततः स्वदेवता-मुद्रां बद्धा तन्मन्त्रं सप्ताष्ट[2]वारानुच्चार्य्य समयं दर्शयेत्।

ततः सर्व्वबुद्धबोधिसत्त्वान् प्रणम्य चक्रपूजादिकं गृहीत्वा समन्तभद्रतथागतकायादि[3]शुद्धिमभिलषन् स्वसमीहित-सिद्धौ हृदयमाधाय सर्व्वबुद्धबोधिसत्त्वप्रणामालम्बन-जापमभ्यसन् सर्व्वबुद्धबोधिसत्त्वपुण्यज्ञानसम्भारानु-मोदनाभ्यासचेतनया[4] सन्ध्यारागात् प्रभृति तावत् जपेद् यावत् अर्द्धरात्रे सूर्य्योदये वा तच्चक्रादिकं अवश्यं प्रज्वलति। ज्वलिते[5] चाकाशात् बुद्धोत्पाद इव महा-निमित्तानि पुष्पवृष्टिदुन्दुभिध्वनिदिव्यघोषतथागतसाधु-कारादीनि बुद्धक्षेत्रकम्पनादीनि चात्य[6]द्भुतानि भवन्ति सर्व्वविद्याधरकुलानि च सन्निपतन्ति। तैरभिषिच्यते। सर्व्वलोकधातुषु बुद्धबोधिसत्त्वाराधकः पञ्चाभिज्ञः सर्व्वबुद्ध-बोधिसत्त्वाभिनन्दितो बोधिसत्त्वचर्य्याचारी विद्याधरराजो भवति अनन्तविद्याधरस्त्री[7]परिवारः सुखानुयायी न च तस्मात् कायाद्धीयते। तेनैव च कायेनानुपूर्व्वसम्भारोप-चयतः[8] सर्व्वबोधिसत्त्वभूमिराक्रामति यावदभिसंबुद्ध्यते चेति। अन्याश्च बुद्धबोधिसत्त्वदर्शनचिन्तामणिभद्रघटादि-सर्व्वलौकिकलोकोत्तरसिद्धयोऽनेनैव विधिना[9] सामान्य-विषयपटलदृष्टेन वा विधिना तन्त्रमवलोक्य निर्व्वि-चिकित्सैः साधनीयाः। नियतं सिध्यन्तीत्ययमुपायवतां

---

1 N ०दयाम्बध्वा।
2 A सप्तातष्ट०।
3 ANa ०गतकादि०।
4 ANa ०चेतरया।
5 N ज्वलिता।
6 A चाद्भुता०।
7 ANa ०धरपरि०।
8 A ०यचतः।
9 A विधान।

साधनविधिः अनुपायैस्तु यथाशक्ति साधनं कर्त्तव्यम्। यथोक्ते नाहं शक्त इति नावसादितव्यम्[1]। अन्तत एकामप्यात्मरक्षां कृत्वा सीमाबन्धनं च पूजादिकं च चिन्तयित्वा तन्मन्त्रानुच्चार्य्य यावदिच्छं जपेत् साधयेद् वा। वीर्य्यानुरूपं[2] कर्म्मानुरूपं चावश्यमेव सिध्यति। एकोऽपि त्रैलोक्यं रक्षितुं क्षमति तन्त्रवचनात्। अमोघसिद्धिश्चायं त्रिसमयराजः निर्विघ्नसिद्धिश्च। मनीषितविधिरिति पूर्व्वसेवादिविधिरहितं सर्व्वबुद्धबोधिसत्त्वालम्बनमात्रं कृत्वा जगदर्थचित्तेन मन्त्रानुष्ठानम्।

अत्र च येन तेनापि विधिना मनीषितेन वा मन्त्राः साध्यमानाः सिध्यन्ति। तद्यथा अत्रैवोक्तं विविक्तविजने स्थाने सङ्गनिकायपरि[3]वर्ज्जिते सत्त्वाननुतापिना विनापि [4]पूजया विनापि पटेन विनापि स्नानादिसमुदाचारेण विनिपतितेनापि साध्यमवश्यं सिध्यतीति। पुनरुक्तं द्वे चात्यद्भुते। यथा यथा मन्त्राः साध्यन्ते तथा तथा अनुरूपा भवन्ति। येन च विधिना[5] योज्यन्ते[6] तेनैव सिध्यन्तीति। पुनरप्युक्तम्—

बोधिचित्तं दृढं[7] यस्य निःशङ्का च मतिर्भवेत्[8]।
विचिकित्सा न कर्त्तव्या तस्येदं सिध्यति ध्रुवम्॥

इति। तस्माद् वीर्य्यमुत्पाद्य विचिकित्सां विहाय साधयितव्यमवश्यं सिध्यति। अत्र च सिद्धार्थिना[9] समयरक्षणे

---

1 ANa नावसीतितव्य, N नावसातितव्यं।
2 A ०नुक्षायं।
3 A ०मित्रर्ज्जि०।
4 ANa ०पूजा।
5 A विना।
6 ANa योद्यन्ते।
7 ANa दृढयस्य।
8 A मतिभवेत्।
9 ANa ०र्थेना।

दृढतरयत्नवता भाव्यम्। तन्मूलत्वात् सर्व्वसिद्धीनां च स च समयः। न सद्धर्म्मः प्रतिक्षेप्तव्यः,[1] न गुरुरवमनना कार्य्या, न मद्यपानं कार्य्यं, न मन्त्रश्रव्या कार्य्या, न पञ्चाकारा भक्षणीया न लङ्घनीया इत्येवमादिरवश्यं तन्त्रे ज्ञातव्यः। विस्तरभयात्तु[2] न लिख्यते। स्नातुमिच्छता च चिसमयजापिनार्य्याचलहृदयेनामोघचण्डेनैव वज्रमुद्रा-युक्तेन सर्व्वमृत्तिकादिस्नानौषद्रव्याभि[3]मन्त्रणादुष्टोत्सारण-सीमाबन्धादिकं कार्य्यम्। तेनैव सर्वविघ्नाः प्रशाम्यन्ति।

॥ इति चिसमयराजस्य साधनं समाप्तम्

कृतिरियं पण्डितकुमुदाकरमति[4]पादानाम् ॥

---

[1] ANa प्रतिक्षप्तव्य। [2] Na भयाचैव।
[3] Na ०मन्त्रदुष्टो०। [4] A ०करपादा०।

## 2.

नमः सर्व्वबुद्धबोधिसत्त्वेभ्यः ।

असमाचलाः समतसारधर्म्मिणः
करुणात्मका जगति दुःखहारिणः ।
असमन्तसर्व्वगुणसिद्धिदायिनो
अमलाचलाः समवराग्रधर्म्मिणः ॥

गगनंसमोपमकला न विद्यते[1]
गुणलेशरेणुकणिकेऽप्यसीमिके[2] ।
सदसत्त्वधातुवरसिद्धिदायिषु
विगतोपमेषु असमन्तसिद्धिषु ॥

सततामला करुणवेगतोत्थिता
प्रणिधानसिद्धिरविरोध[3]धर्म्मता ।
जगतोऽर्थसाधनपरासमन्तिनी-
सततं विरोचति महाह्रपात्मनाम् ॥

न निरोधतां करुणचारिकाकुला[4]
व्रजते[5]त्रिलोकि[6]वरसिद्धिदायिका ।
अमितामितेषु सुसमाप्तितां गता[7]
गतिं गतेष्वपि[8]अहो सुधर्म्मता ॥

त्रिसमयेऽग्रसिद्धि वरदा ददन्तु[9] मे
वर[10]दानताग्रमतितां गताः सदा ।

---

[1] ANa नैवद्यते ।
[2] ॰प्यसीमिके dropped in A.
[3] A रविरोध॰ ।
[4] A चपचला ।
[5] Na व्रजातो ।
[6] ANa ॰लोकवर॰ ।
[7] AN ॰गतिं ।
[8] A च ।
[9] AN ददातु ।
[10] A दानाग्र॰ ।

सकलास्त्रिलोकिवरदाग्रसाधका
नाथास्त्रियध्वगतिका अनाहताः ॥

इति त्रिसमयराजकल्पोक्ता वज्रधरसंगीता स्तुतिः ।

इदं तत् सर्व्वबुद्धानामद्भुत[1]गुणविस्तरम् ।
सिध्यन्ति सर्व्वमन्त्रा वै सकृदुच्चारितेऽपि हि ॥
अनेन स्तोत्रराज्ञा वै तोषितास्ते तथागताः ।
ददन्ति [2]विपुलां सिद्धिं कल्पस्थां कल्पचोदिताम् ॥
दर्शयन्ति च आत्मानं आसेचनकविग्रहम् ।
वैरोचनमहानाथमक्षोभ्यं रत्नसम्भवम् ॥
अमिताभं जिनं शुद्धममोघराजं च सर्व्वतः ।
रसं रसायनं तत्त्वं प्रवदन्ति वराणि[3] च ॥
अशेषाः सिद्धयो रम्या विपुला अर्थसम्पदः ।
सर्व्वाशापरिपूरिं च ददन्ति मनसेप्सिताः ।
ज्ञानमायुर्बलं वेगं ददन्ति परमं शुभम्[4] ॥

इति । एतदेव स्तोत्रं वज्रमण्डला[5]लङ्कारमहायोग-तन्त्रेऽपि सानुशंसं सम्पठितमिति ।

नमो बुद्धाय ।

बुद्धांस्त्रैयध्विकान् नत्वा [6]बुद्धपुत्रांश्च भावतः ।
वक्ष्यामि समयं किञ्चित् श्रीमत्त्रिसमयोदितम् ॥
न सद्धर्मः प्रतिक्षेप्यो[7] न सन्त्यज्यः[8] कदाचन ।
सम्बुद्धा बोधिसत्त्वाश्च न कार्य्या तेष्वनाहतिः ॥

---

[1] N ०सद्भुत० । [2] Na विपुल० । [3] A वरांसि ।
[4] ANa शुभं । [5] N ०लाङ्कार० । [6] A बुद्धपत्रच ।
[7] ANa ०क्षप्याः । [8] A सन्त्याज्यः ।

गुरौ शिष्या नावज्ञा न वक्तव्याश्च देहिनः ।
न स्वयं मन्त्रमुद्राश्च कार्या नाख्याश्च नैव ताः ॥
मात्सर्यं मद्यपानं च करणीयं न सर्व्वथा ।
वज्राकारा न लङ्घ्याश्च[1] भञ्जनीयाश्च नैव ते ॥
न मन्त्रश्रवणं कार्यं न मुद्रादिषु[2] गौरवम् ।
न बालधर्म्मता कार्या गुरौ वा देवतासु वा ॥
अभिचारो न कर्त्तव्यः सुशीलानय[3] राधयोः ।
न कार्य्यं करणीयं वा नानुमोद्यं[4] च किल्बिषम् ॥
संक्षेपात् प्रतिकूलं यत् तन्न कार्य्यं परात्मनोः ।
समयोऽयं महाकल्पे श्रीमत्त्रिसमये स्मृतः ॥
कौक्कृत्यमाजीवमलं रतिं संगणिकासु च ।
विचिकित्सकता भूरिः परिष्कारपरिग्रहः ॥
आलस्यं लीनचित्तत्वं आत्मोत्कर्षादयस्तथा ।
अन्तरायकरा धर्म्माः कल्पराजेऽत्र कीर्त्तिताः ॥
दोषैरमीभिर्निर्म्मुक्तः पूर्व्वोक्तसमये स्थितः ।
सर्व्वासङ्गोज्झितः श्राद्धः स्थिरसम्बोधिमानसः ॥
जगत्त्रयहितोद्युक्तः वाङ्मनःकायचेष्टितः ।
सिद्धिं त्रिसमयोक्तेन साधयेद् विधि[5]नेप्सिताम् ॥

[ त्रिसमयराजसाधनम् । ]

॥ कृतिरियं पण्डितरत्नाकरगुप्तपादानाम् ॥

---

[1] A लंघाश्च ।  [2] A ॰दिष्व ।  [3] Na ॰नय॰ ।
[4] Na ॰मोदं ।  [5] ANa ॰विनेप्सि॰ ।

## 3.

[1]नमः शाक्यमुनये तथागताय ।

नत्वा सर्व्वतथागतान् गुणगणाधारान् परार्थे गुरोः
श्रीवज्रासननामभूषिततनोः संसारदोषप्रहैः ।
अस्पृष्टवरबुद्धतादमशमं [2]तत्साधनं तत्त्वतो
नानावर्णतथागतादिरचनादेहं [3]तथा लिख्यते[4] ॥

ततः पुरतो भगवन्तं वक्ष्यमाणविधिना वर्णभुजादिसमन्वितबुद्धं [5]सर्व्वतथागतादिसमन्वितं विचिन्त्य पुष्पादिकं प्रयच्छेत् । ॐ नमो अक्षोभ्याय हुँ ॐ वज्रपुष्पे हुँ स्वाहा । प्रत्येकं वारत्रयं दद्यात् । ॐ नमो वैरोचनाय ॐ ॐ वज्रपुष्पे हुँ[6] स्वाहा । ॐ नमो [7]रत्नसम्भवाय त्राँ ॐ वज्रपुष्पे हुँ स्वाहा । ॐ नमोऽमिताभाय ह्रीँ ॐ वज्रपुष्पे हुँ स्वाहा । ॐ नमोऽमोघसिद्धये[8] खँ ॐ वज्रपुष्पे हुँ स्वाहा । ॐ नमो लोचनायै [9]लाँ ॐ वज्रपुष्पे हुँ स्वाहा । ॐ नमो मामकी माँ ॐ वज्रपुष्पे हुँ स्वाहा । ॐ नमः पाण्डरायै पाँ ॐ वज्रपुष्पे हुँ स्वाहा । ॐ नमस्तारायै ताँ ॐ[10] वज्रपुष्पे हुँ स्वाहा । पुनरप्यक्षोभ्यरूपवज्रासनाय प्रभूतप्रभूततरं पुष्पं दद्यादनेनैव क्रमेण । ॐ वज्रधूपे हुँ स्वाहा, ॐ वज्र-

---

[1] N नमो बुद्धाय, A नमो वज्रासनाय ।
[2] C सत्साधनं । [3] AN सदा ।
[4] A कथ्यते । [5] सर्व्वतथागतादिसमन्वितं found only in Ab.
[6] ॐ dropped in A. [7] A वज्रसम्भवाय ।
[8] C सिद्धि । [9] C लं । [10] ॐ dropped in C.

गन्धे हुँ स्वाहा, ॐ वज्रनैवेद्ये हुँ स्वाहा, ॐ वज्रदीपे हुँ स्वाहा, इत्यादिभिः[1] पूजाविधिं कृत्वा मैत्र्यादिभावनापुरःसरं ततः स्वहृद्य[2]कारपरिणतं चन्द्रमण्डलं तस्योपरि हुँकारं सुवर्णवर्णं[3] तद्रश्मिनिर्गतान् गुरुबुद्धबोधिसत्त्वान् दृष्ट्वा ततः स्नान[4]पूजामेघ[5]प्रसरैः सम्पूज्य ततः पापदेशनां पुण्यानुमोदनां[6] परिणामनां त्रिशरणगमनं जिन[7]मार्गा[8]श्रयणं बोधिचित्तोत्पादं च कुर्य्याद् रत्नत्रयं मे शरणमित्यादिना। ततः शून्यतां विभा[9]वयेत्। सर्व्वधर्म्मान् निःस्वभावरूपान् विभाव्य[10] अक्षररूपं बोधिचित्तस्वरूपं प्रभास्वरमात्मानं पश्येत्। दृढीकरणार्थं मन्त्रमुच्चारयेत् ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहम्। तदेव ज्योतीरूप[11]परिणतं चन्द्रमण्डलम्। तस्योपरि हुँकारं अकारादिषोड़शस्वरपरिवेष्टितं पुनरपि ककारादिवर्णैन[12] परिवेष्टितं शुक्लवर्णं सकलसमस्तपरिणतं चन्द्रमण्डलरूपं[13] विचिन्तयेत्। तस्योपरि हुँकाराक्षरबीजं[14] तत्परिणतं वज्रं पीतवर्णं तत्रापि वज्रवरटके[15] हुँकारं[16] समस्तमेतत् परिणम्य वज्रासनरूपं

[1] AN इत्यादि। [2] A स्वहृदय॰।
[3] वर्णं dropped in A; C वर्णं।
[4] ANC read पुष्पादिभिः after स्नान।
[5] A मोत्र, Ab मेध्य। [6] पुण्यानुमोदनां dropped in A.
[7] जिन॰ dropped in ANC. [8] C ॰श्रयात्।
[9] A विला॰। [10] Ab ॰वयित्वा।
[11] AN ॰रूपं तत्परि॰। [12] वर्णैन dropped in AN.
[13] रूपं dropped in AN. [14] ANC ऊँकार॰।
[15] AN ॰वरटकं। [16] C समन्तमे॰।

सुवर्णवर्णं[1] तस्य चतुर्म्मारासनम्[2]। ते च स्कन्ध[3]क्लेश-मृत्यु देवपुत्रमाराः[4] गौररक्तकृष्णश्यामवर्णाः। यथाक्रमेण मूर्त्तिमेषां विभाव्य एभिर्मारैः परिघटितसिंहासनं [5]तस्योपरि विश्वपद्मं वज्रं च तत्र स्थितं भगवन्तं द्विभुजं वज्र[6]पर्य्यङ्कनिषण्णं सव्यकरं भूस्पर्शमुद्रान्वितं अपसव्य-मुत्सङ्गस्थितं रक्तवस्त्राच्छादितगात्रं शान्तमात्मानं विभावयेद् योगी। ततोऽहङ्कार[7]मुत्पादयेत्। ॐ धर्म्म-धातुस्वभावात्मकोऽहम्। ततो भगवतो दक्षिणे [8]मैत्रेयं बोधिसत्त्वं गौरवर्णं[9] द्विभुजं जटामकुटधारिणं सव्य[10]गृहीत-चामररत्नं अपसव्येन[11] नागकेशरपुष्पच्छटाधारिणं तथा वामे लोकेश्वरं बोधिसत्त्वं शुक्लवर्णं दक्षिणे गृहीत-चामररत्नं वामेन कमलधारिणं[12] भगवन्मुखं व्यव-लोकयन्तौ[13] तौ[14] भावयेत्।

पश्चात् षडङ्गन्यासं कुर्य्यात्। भगवतो [15]चक्षुषोरु-भयोश्चन्द्रमण्डलं तदुपरि क्षिँकारं शुक्लवर्णं, श्रोत्रयोश्चन्द्र-मण्डलोपरि जँकारं नीलवर्णं, नासापुटयोश्चन्द्रमण्डलोपरि खँकारं पीतवर्णं, जिह्वायां चन्द्रमण्डलोपरि गँकारं रक्तवर्णं, ललाटचन्द्रमण्डलोपरि स्कँकारं श्यामवर्णं, स्तन-द्वये[16] चन्द्रमण्डलोपरि सँकारं शुक्लवर्णं इति षडङ्गन्यासं

---

[1] वर्ण dropped in N.
[2] Ab ०र्म्मारिरासनं।
[3] A स्कन्द०।
[4] Ab ०मारं।
[5] Ab ०तमस्योपरि।
[6] AAb पर्य्यङ्क०।
[7] ANC ऊँकारं।
[8] C मैत्रियं।
[9] गौरवर्ण dropped in A.
[10] AN सव्ये।
[11] ANC ०सव्ये।
[12] C ०धारिणौ।
[13] AN ०कयन्तो।
[14] तौ only in Ab.
[15] ANC भगवतश्चक्षु०।
[16] A तन्वमध्ये, NC स्तनमध्ये।

विभाव्य, ततः स्वहृदि चन्द्रमण्डले हुँकारपरिणत वज्रं[1] तद्वज्रवराटके चन्द्रमण्डलोपरि हुँकारं तत्सर्व्वं परिणाम्य[2] ज्ञानसत्त्वं समय[3]सत्त्ववद् विचिन्तयेत्।

ततः शिरसि चन्द्रमण्डलं तस्योपरि उँकारपरिणतं चक्रं शुक्लवर्णं तन्मध्ये चन्द्रस्थउँकारं चेति[4] भगवतः कायविशुद्धिभावना। कण्ठे चन्द्रमण्डलं तस्यो[5]परि आः-[6]कारपरिणताष्टदलपद्मं रक्तवर्णं तन्मध्ये[7] चन्द्रमण्डलस्थं आः[8]कारमिति भगवतो वाग्विशुद्धिभावना। नाभेरूर्द्ध्वं चन्द्रमण्डलं तस्योपरि हुँकारपरिणतं वज्रं कृष्णवर्णं तन्मध्ये चन्द्रमण्डलस्थं[9] हुँकारमिति भगवतश्चित्तविशुद्धि-भावना। बुद्धत्वफलदायिनी बुद्धसिद्धिरिति। ततः आकाशस्थितं भगवन्तं [10]हृद्बीजरश्मिना आकृष्य जः हुँ वं होः इत्यक्षरचतुष्टयेन पुरतः स्थापयेत्। तस्मै अर्घ्य-पाद्याचमनं[11] प्रोक्षणं[12] च दद्यात्। पश्चात् क्षीरादिभोजनं प्रयच्छेत् इत्यमृतास्वादो[13] विहितः। ततः सर्व्वबुद्धान् नमस्यामीत्यनया स्तुत्या[14] स्तुतिं कुर्य्यात्। ततो ज्ञानसत्त्वेन सह समयसत्त्वमेकीकृत्य समयस्त्वं समयस्त्वं[15] समयमहं ॐ आः हुँ[16] इत्यनेन मन्त्रेणाद्वयं कुर्य्यात्। पश्चाद्

---

[1] Ab ०णतं वज्र।  [2] AN ०णाम्य।  [3] C सत्त्वमि०।

[4] A चिन्तं।  [5] ANC मण्डलस्योपरि।

[6] AN आकार०।  [7] A तन्मध्य।

[8] Ab omits आःकारमिति......०मण्डलस्थं।

[9] A ०मण्डल।

[10] N हृदयबीज, C रश्मना Ab हृद्बीजार्चिषा।

[11] N ०द्यासनं, C ०द्याचमं।  [12] AC प्रोक्षं।

[13] A ०तास्वादो।  [14] स्तुत्या dropped in AN.

[15] N adds a third समयस्त्वं।  [16] हुँ dropped in N.

भावनाखिन्नो जपं कुर्य्यात्। ॐ आः वज्र हुँ[1] स्वाहा इति जप[2]मन्त्रः। पश्चात् सम्यक्सम्बोधौ पुण्यं परिणाम्य विसर्ज्ज्य[3] विहरेत् यथेच्छयेति। अनेन पुण्येन सर्व्व[4]-सत्त्वास्तथागतज्ञानप्राप्ताः शीघ्रं भवन्तु।

॥ वज्रासनभट्टारक[5]साधनोपदेशविधिः परिसमाप्तः ॥

---

4.

पूर्व्वोक्तेन[6] विधानेन शून्यताभावनानन्तरं चन्द्र-मण्डले नीलं हुँकारमकारादिमितषोड़शस्वर[7]परिवेष्टितं ततः सितककारादिच[8]तुस्त्रिंशद्व्यञ्जनपरिवेष्टितं सर्व्वमेत-त्परिणाम्य चन्द्रमण्डलं तदुपरि पुनस्त[9]देव बीजं तत्परिणामेन पीतवज्रं तद्वरटकेऽपि तद्बीजं सर्व्वमेतत् परिणम्य श्रीमद्वज्रासनबुद्धभट्टारकमात्मानं झटिति [10]निष्पादयेत्। द्विभुजैकमुखं पीतं चतुर्म्मारसंघटितमहा-सिंहासनवरं, तदुपरि विश्वपद्मवज्रे वज्रपर्य्यङ्कसंस्थितं वामोत्सङ्गस्थितवामकरं [11]भूस्पर्शमुद्रादक्षिणकरं बन्धूकरा-गारुणवस्त्रावगुण्ठिततनुं सर्व्वाङ्गप्रत्यङ्गासेचनकविग्रहं विचिन्त्य ॐ धर्म्मधातुस्वभावात्मकोऽहमिति अहङ्काह-

---

[1] AC हूँ फट्। [2] A अयं। [3] Ab विसर्ज्जयित्वा।
[4] सर्व्व dropped in Ab. [5] C ०सामध्ये।
[6] N पूर्व्वोक्तवि०। [7] A षोड़शस्वर०। [8] A तस्त्रिंश०।
[9] A न्यस्त०। [10] AN विष्पा०। [11] C भूस्पृश०।

ङ्कारं कुर्य्यात्। तदनु भगवतो दक्षिणे मैत्रेयं[1] बोधिसत्त्वं सुवर्णगौरं द्विभुजं जटामकुटधारिणं गृहीतचामरदक्षिण-करं नागकेशरपल्लवधर[2] वामकरम्[3]। तथा वामे लोकेश्वरं बोधिसत्त्वं शुक्लं जटामुकुटिनं[4] चामरधारिदक्षिणभुजं कमलधारिवामकरम्। एतद्द्वयं भगवन्मुखमभिवीक्ष्यमाणं पश्येत्। ततः षडङ्गन्यासं[5] कुर्य्यात्। भगवतश्चक्षुषोश्चन्द्रस्थ[6]-सितक्षिँकारं श्रोत्रयोश्चन्द्रस्थनीलजँकारं ततो[7] नासापुटे चन्द्रस्थपीतखँकारं जिह्वायां चन्द्रस्थलोहितगँकारं ललाटे चन्द्रस्थहरितस्कँकारं स्तनान्तराले चन्द्रस्थसितसँकारं। ततो हृदि चन्द्रस्थ[8]हुँकारजवज्रं तद्वरटकेऽपि सचन्द्रहुँकारं, कण्ठे चन्द्र[9]मण्डले आःकारजपद्मे चन्द्रस्थ[10]आःकारमिति वाग्विशुद्धिभावना। शिरसि चन्द्रे सितॐकारजाष्टारचक्रे चन्द्रस्थॐकारमिति कायविशुद्धिभावना। नाभेरूर्द्ध्वं चन्द्रस्थसवज्रहुँकारमिति चित्तविशुद्धिभावनेति। ततो हृद्बीजसमाकृष्टज्ञानसत्त्वमर्घ्यपाद्या[11]दिनानाविधपूजासन्त-र्पणस्तुतिप्रणामपूर्व्वकं समयसत्त्वेन सहैकीकृत्य ॐ समयस्त्वं समयस्त्वं समयमहं ॐ आः हुँ इति मन्त्रेणा-द्वयाहङ्कारमुत्पादयेत्। ततो भावना[12]खिन्नो मन्त्रं जपेत्। ॐ आः वज्र हुँ स्वाहा।

॥ इति वज्रासनसाधनं समाप्तम् ॥

---

[1] C मैत्रियं। [2] C ०पल्लवामर०। [3] A चामरकरं।
[4] A जटमुकुटिं। [5] C कुर्व्वीत। [6] A ०श्चन्द्रस्थितं।
[7] N ततो पुटे ; A omits ततो। [8] A चन्द्रऊंकार०।
[9] A चन्द्रमण्डले [10] A चन्द्र आः०।
[11] C ०पाद्यनाना०। [12] C ०खीनो।

## 5.

नमो बुद्धाय भगवते।

आदौ मुखादिशुद्धिं विधाय स्वहृद्यकारपरिणतचन्द्रे पीतहुँकारं पश्येत्। तत्किरणैराकृष्य गुरुबुद्धादीन् पूजयेत्। ततोऽपि पापदेशनादिकं विधाय शून्यतां चामुखीकृत्य तन्मन्त्रेणाधितिष्ठेत्। ततः पूर्व्वप्रणिधानसंचोदनया[1] रूपकायमभिनिर्म्माणयेत् सत्त्वार्थविधये। शशिमण्डलमध्ये पीतहुँकारं पश्येत् अकारादिसित[2]षोडशस्वरवेष्टितम्, ततोऽपि बहिः सितककारादिवर्णसमूहै र्वेष्टितं तत्सकल-परिणतं शशिमण्डलमकलङ्कमवलोक्य सव्यकरेण भूस्पर्श-मुद्रं उत्सङ्गस्थितावसव्य[3]हस्तं काषायवस्त्रावगुण्ठनं नील-गौर[4]रक्तश्यामचतुर्म्मारोपरि विश्वपद्मवज्रावस्थितं शान्तं लक्षणव्यञ्जनेनान्वितगात्रम्। तस्य भगवतो दक्षिणे मैत्रेय-बोधिसत्त्वं गौरं द्विभुजं जटा[5]मुकुटिनं सव्यकरेण चामर-रत्नधारिणं अवसव्येन नागकेशरपुष्पच्छटा[6]धारिणम्। तथा वामतो लोकेश्वरं शुक्लं दक्षिणकरेण चामरधरं [7]वामकरेण कमलधरम्। भगवन्मुखावलोकनपरौ च तौ भावयेत्। ततः षडङ्गन्यासं कुर्य्यात्। भगवतश्चक्षुषोश्चन्द्रस्थित[8]शुक्ल ह्रिँकारं, श्रोत्रयोः शशिमण्डलावस्थितं जँकारं नीलं, नासापुटे

---

[1] AN ०चोदना।  [2] ०सित० dropped in N.

[3] A ०सव्यहस्ते०।  [4] C drops ०गौर...... ०बोधिसत्त्व

[5] A ०मुकुटिनं।  [6] A ०च्छत्र०।

[7] A drops वामकरेण कमलधरं।

[8] A स्थितचक्र०।

चन्द्रस्थपीतलँकारं, जिह्वायां चन्द्रस्थं रक्तगँकारं, ललाटे चन्द्रस्थं श्यामखँकारं, स्तनमध्ये चन्द्रस्थशुक्लसँकारं चिन्तयेत्। तदनु ज्ञानसत्त्वभावनां कृत्वा शिरसि चन्द्रमण्डलोपरि ॐकारजं सितमष्टारचक्रं तदुपरि चन्द्रस्थं ॐकारं, कण्ठे चन्द्रोपरि आःकारजमष्टदलपद्मं तन्मध्ये चन्द्रस्थं आःकारं, हृदि चन्द्रस्थहुँकारजं वज्रं स्वबीजगर्भं कायवाक्चित्तविशुद्ध्या च एतदेवं भावयेत्। इति भगवन्तमाखेदं यावद् भावयित्वा मन्त्रं जपेत्। तत्रैष मन्त्रः। ॐ आः [5] वज्र हुँ स्वाहा।

॥ इति वज्रासनसाधनं समाप्तम् ॥

---

[1] C अंकारं। [2] AN आकारं। [3] A आकारं। [4] A एतच्चयं। [5] A ग्रन्थस्य।

6.

आर्य्यषड़क्षरीमहाविद्यायै नमः[1] ।

आदौ तावन्मन्त्री सुखासनोपविष्टः मुखशौचादिकं कृत्वा [2]स्वहृदि चन्द्रस्थसितह्रीःकारविनिर्गतरश्मिभिर्गुरु-बुद्धबोधिसत्त्वान् पुरतो बुद्धादीन्[3] दृष्ट्वा सम्पूज्य त्रिशरण-गमनादिकं[4] कुर्य्याद् रत्नत्रयं मे[5] शरणमित्यादिना । यावन्तः सत्त्वाः सत्त्वसंग्रहेन संगृहीताः अण्डजा वा जरायुजा वा [6]संस्वेदजा वा औपपादुका वा रूपिणो वा अरूपिणो वा संज्ञिनो वा असंज्ञिनो वा नैवसंज्ञाना-संज्ञिनो वा यावत्[7] कश्चित् सत्त्वधातुः प्रज्ञप्यमानः प्रज्ञप्य ते[8] सर्व्वे मया अनुपधिशेष[9]निर्व्वाणधातौ प्रतिष्ठापयि-तव्या इति । ततः ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभाव-शुद्धोऽहं इति वारत्रयमुच्चारयेत्[10] । तदनु शून्यतां मुहूर्त्त-मालम्बयेत्[11] । तदनन्तरं[12] स्वहृदये[13] सितपद्मोपरि चन्द्र-मण्डलं तस्योपरि सितह्रीःकारं ततो निश्चरद्[14]नेकरश्मि-शतसहस्रं ध्यात्वा तेन सर्व्वसत्त्वानामशेषा[15]नादिकाल-[16]सञ्चितं रागादिक्लेशसमूहं सत्त्वानां विशोध्यन्ते[17] । तत्

---

[1] This *Namaskāra* is given only in Ab.

[2] स्वहृदि......पुरतो is dropped in Ab and B.

[3] बुद्धादीन् dropped in ANC.

[4] A शरणादिकं ।

[5] A ०त्रयशरणं० ।

[6] A स्वस्व० ।

[7] N यावान् ।

[8] ते dropped in NC.

[9] A अनुपधिशेषेण ।

[10] Ab ०चार्य्यं ।

[11] Ab मुहूर्त्तमात्रं ध्यात्वा ।

[12] Ab तदनु ।

[13] ABNC हृदये ।

[14] Ab ततोऽनेक० ।

[15] ABNC तेनाशेषा० ।

[16] A अन्वित ।

[17] AB विशोध्य तत् ।

पुनस्तत्रैव प्रवेशयेत्[1] । तत्परिणतमात्मानं लोकेश्वररूपं सर्व्वालङ्कारभूषितं शुक्लवर्णं चतुर्भुजं वामतः पद्मधरं, दक्षिणतो अक्षसूत्रधरं, अपराभ्यां हस्ताभ्यां हृदि संपुटाञ्जलिस्थितं ध्यायात्[2] । दक्षिणे मणिधरं तद्वर्णं[3] भुजान्वितं पद्मान्तरोपरिस्थं वामे तथैव अपरपद्मस्थां[4] षडक्षरीं महाविद्याम् । ततः ॐ महासुख वज्रसत्त्व जः हुँ वँ होः[5] सुरतस्त्वं अललललहोः अः अः अः अः इत्यधिष्ठानमन्त्र[6]राजमुच्चारयेत् । एवं ध्यात्वा[7] ततो लोकेश्वरात्महृदय[8]चन्द्रमण्डलादक्षसूत्राकारं शुक्लवर्णं मुखेन निर्गत्य नाभौ प्रविशन्तं चक्र[9]भ्रमणयोगेन इमं[10] मन्त्रराजं सर्व्वबुद्धहृदयचिन्तामणिकल्पं पश्येदनिमित्तयोगेन । ततो जपं कृत्वा [11]भ्रमणप्रवेशनादिकं प्राप्याचिरेणैव[12] कालेन श्राद्धः [13]कृपावान् गुरुभक्तो योगी सिध्यति ।

ॐ मणिपद्मे हुँ इति[14] जापमन्त्रः । तत उत्थानकाले इमं मन्त्रराज[15]मुच्चार्य्योत्तिष्ठेत् । ॐ वज्रसत्त्व समयमनुपालय[16] वज्र[17]सत्त्वत्वेनोपतिष्ठ, दृढो मे भव, सुतोष्यो मे भव;

---

[1] A प्रवेशस्तत् ।
[2] ध्यायात् omitted in Ab.
[3] A तद्वर्णा० N तत्तद्वर्णा० ।
[4] A पद्मस्था ।
[5] A हाः ।
[6] Ab मन्त्रमु० ।
[7] Ab ध्यानं कृत्वा ।
[8] AN ०हृदये ।
[9] A ०भ्रम० ।
[10] AC इयं, Ab इदं ।
[11] A भ्रमणावेशेना०, BN भ्रमणावेशना० ।
[12] A प्राप्यादि० ।
[13] A क्रिया० ।
[14] इति dropped in ANC.
[15] A मुच्चाप्ययेति० ।
[16] A ०पालयन् ।
[17] A ० सत्त्वो तेनो० ।

सुपोष्यो मे भव, अनुरक्तो मे भव, सर्वसिद्धिं मे प्रयच्छ, सर्वकर्मसु च मे चित्तं श्रेयः कुरु, हुं हहहह होः भगवन् सर्वतथागतवज्र मा मे मुञ्च वज्रीभव महासमयसत्त्व आः। एवमुक्त्वा यथासुखं विहरेदिति।

॥ आर्य्यषडक्षरीमहाविद्यासाधनं समाप्तम् ॥

---

7.

पद्मकुलोद्भवं नाथं[1] सर्व्वबुद्धकृतमौलिनम्।
प्रणम्य साधनं[2] वक्ष्ये सर्व्वरोगविनाशनम्।

प्रथमं तावदाचार्य्यानुगता[3] सिद्धिः—

[4]तस्माच्च सर्व्वभावेन गुरुं पूजयेद् यत्नतः।
गुरुणा परितुष्टेन[5] कर्म्मसिद्धिः प्रजायते॥
मण्डलप्रविष्टस्य सिद्धिरनुज्ञाता च सर्व्वथा।
स्वसमयसम्वरं रक्षयन् सिध्यते ध्रुवम्॥

मुखशौचादिपूर्व्वकं देवगृहे पटादिगतभट्टारकमवतार्य्य स्वहृदये [6]आद्यक्षरेण चन्द्रमण्डलं तस्योपरि अष्टमस्य चतुर्थकं बीजं सप्तमद्वितीयेना[7]सनं प्रथमचतुर्थेन मण्डितं षोड़शेन संयुक्तं शुक्लवर्णं मनोरमं ततो विश्वरश्मीन्निसार्य्य तै रश्मिभिर्निष्पन्नान् गुरून् सबुद्धमूर्त्तीन् दृष्ट्वा पूजयित्वा अभिवन्द्य चानेन मन्त्रेण ॐ वज्रपुष्पे हुँ, ॐ वज्रधूपे हुँ, ॐ वज्रदीपे हुँ, ॐ वज्रगन्धे हुँ, ॐ वज्रनैवेद्ये हुँ ततो—

---

[1] AN ध्रो। [2] C सालं। [3] A चार्य्यान् गता।
[4] The metre in both these *Ślokas* is faulty.
[5] A परितुष्टो न। [6] A आद्याद्य०। [7] AC द्वितीय ना०।

[illegible] ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दृढो मनः ॥
आबोधेः शरणं यामि बुद्धं धर्मं गणोत्तमम् ।
बोधौ चित्तं करोम्येष स्वपरार्थप्रसिद्धये ॥

[3]उत्पादयामि परमं वरबोधिचित्तं
निमन्त्रयामि बहुसर्व्वसत्त्वान् ।
इष्टां चरिष्ये वरबोधिचारिकां
बुद्धो भवेयं जगतो हिताय ॥

इति । प्रणिधिपूर्व्वकं सर्व्वधर्म्मनैरात्म्यं भावयेत् अनेन मन्त्रेण । ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम् ।

बीजं मायोपमाकारं[4] त्रैधातुकमशेषतः ।
दृश्यते स्पृश्यते चैव यथा माया हि[5] सर्व्वतः ।
न चोपलभ्यते चैव सर्व्वस्य जगतः स्थितिः ॥

इत्यधिमुच्य । ततोऽनादिकालीनमसत्कल्पनाबीजमपनीय स्वभावमधिमुच्येत्[6] । ॐ स्वभावशुद्धाः सर्व्वधर्माः स्वभावशुद्धोऽहम् । ततः पूर्व्वोक्तबीजनिष्पन्नं पद्मं तस्योपरि ह्रीःकारं तत्सर्व्वं निष्पन्ने सति [8]श्रीमल्लोकनाथं वज्रपद्मगर्भचन्द्रस्थं वज्रपर्य्यङ्कं शशिप्रभं कुन्देन्दुवर्णमुज्ज्वलं जटामुकुटधरं शान्तं अमितभकृतशेखरं[9] व्याघ्रचर्म्मनिवसनं चतुर्भुजं नानालङ्कारभूषितं, दक्षिण-

---

[1] A ०मोचं । [2] A ०मोद्य ।

[3] In A instead of these two lines we have उत्पादं यामी चक्र । In the same *Sloka* N reads चाइं instead of बक्र ।

[4] N adds विचिन्त्य after मायोपमाकारं ।

[5] A मायां लि० । [6] A ०मुचेत् । [7] C तस्तव ।

[8] A श्रीमन् । [9] A ०कृतशेखरं ।

करे अक्षमालाधरं, वामकरे[1] पद्ममणिविभूषितं, द्वौ हस्तौ संयुक्तौ सर्व्वराजेन्द्रमुद्रा हृदि संस्थितं ततोऽहङ्कारं कुर्य्यात् अहमेव लोकेश्वर इति। ततो ज्ञानसत्त्वमाकृष्य यथोपदेशतः स्वमन्त्रेणार्घ्यपाद्यादिकं दद्यात्। समाजमुद्रया एकीकृत्यानेन मन्त्रेण सह विन्यसेत्। ॐ सुरतवज्र अललललहोः समयस्त्वं समयस्त्वं समयमहम्। यथोपदेशतो अभिषेककवचपट्टबन्धाधिमोक्षणसमतालपूजास्तुतिं च कृत्वा भावनापूर्व्वकं जपं कुर्य्यात्। स्वहृदि[2] चन्द्रोपरि षडक्षरं प्रदीपमालामिव गृहान्तरद्योतिनीं पश्येत्। मन्त्रः[3] ॐ मणिपद्मे हुँ। अक्षरलक्षं जपेत्। ततो द्वितीयतृतीयेन विगतकल्मषो भवति, पञ्चानन्तर्य्यकारिणोऽपि कोटिजापेन सिद्ध्यति। तत उत्थातु[4] कामोऽर्घ्यादिकं दत्त्वा विशिष्टाहङ्कारेण विहरेत्। चतुःसन्ध्यं जपित्वा कुशलमूलं परिणम्याभि[5]प्रेतसिद्धये अर्द्धरात्रौ[6] ज्ञानसत्त्वं विसर्ज्ज्य[7] शताक्षरं चोच्चार्य्य कायवाक्चित्तरक्षां च कृत्वा यथासुखं विहरेदिति। यदि रोगादि नाशयितुं इच्छति तदा यथो[8]पदेशतः पुष्यनक्षत्रेणापतितगोमयेन भट्टारकस्याग्रतश्चतुरस्रं मण्डलकं कुर्य्यात्। अभिप्रेतषडक्षरविदर्भित[9]मष्टोत्तरशतं जपेत्। षण्मासेन सिध्यति न [10]संशय इति।

॥ कारण्डव्यूहाम्नायेन रचितं साधनं समाप्तम् ॥

---

[1] AN चामर। [2] स्वहृदिन्द्रो॰। [3] मन्त्रः dropped in A.
[4] A ॰तुमामा॰। [5] A ॰णम्याभिज॰। [6] A दूर्द्धरात्रौ।
[7] A विसृच्य। [8] A यथोय॰।
[9] A ॰मष्टाक्षर॰। [10] A वर्षंमय, C द्धताय।

8.

पूर्व्वविधानेन चन्द्रमण्डलं सप्ततृतीयकं बीजं चयोदशाक्रान्तं इन्दुबिन्दुविभूषितं तेनैव निष्पन्नं श्रीमल्लोकनाथं जटामकुटधरं शान्तं चन्द्रांशुमिव निर्म्मलं सर्व्वालङ्कारभूषितं वामेन पद्मधरं दक्षिणे वरदं पद्मचन्द्रासनस्थं भावयेत् । हस्तद्वयेन मुष्टिं कृत्वा मध्यमपद्म[1]-संकोचमिव अनया मुद्रया मुद्रयेत् । ततो जापं कुर्य्यात् ॐ मणिपद्मे हुँ । अक्षरलक्षेण विगतकल्मषो भवति, द्वितीये तृतीये स्वप्नानि पश्यति, पञ्चानन्तर्य्यकारिणोऽपि कोटिजापेन सिध्यति ।

॥ श्रीमल्लोकनाथसाधनं समाप्तम् ॥

9.

ह्रीःकारज्ञाननिष्पन्नो [3]हालाहलो [4]महद्वपुः ।
त्रिनेत्रं त्रिमुखं चैव जटामकुटमण्डितम् ॥
अर्द्धचन्द्रधरं देवं कपालकृतशेखरम् ।
जिनबिम्बजटान्तःस्थं सर्व्वाभरणभूषितम् ॥
सितारविन्दनिर्भासं शृङ्गारादिरसान्वितम् ।
षड्भुजं हसितं[5] वक्त्रं व्याघ्रचर्म्म[6]सुवाससम् ॥

---

[1] मध्यसं० ।
[2] A त्वप्राप्ति ।
[3] A हलाहलो ।
[4] C महावपुः ।
[5] A सहितं ।
[6] C ०चर्म्मायसवाससं ।

दक्षिणे करे वरदं द्वितीये चार्द्धमालिकाम्[1] ।
तृतीये शरनर्तनं वामे धर्म्मविघूर्णितम् ॥
द्वितीये कुसुमं चैव तृतीये धनुरेव च ।
दक्षिणे त्रिशूलं चैव सर्व्वैः परिशोभितम् ॥
वामे पूर्णकपालं तु पुष्पैर्नानासुगन्धिभिः ।
रक्तपद्मस्थितं चैव ललिताक्षेप संस्थितम् ॥
रत्नाचलगुहान्तःस्थं भावयेद् योगचिन्तकः ।
स्फुरद्बुद्धमयैर्बिम्बैः विविधैः प्रातिहार्य्यकैः ॥
सर्व्वाहारं तु भुञ्जानो निर्विकल्पसमाधिना ।
अन्तर्ज्जल्पो जपेन्मन्त्रान् भावयेत् क्रमयोगतः ।
क्षिप्रं च प्राप्यते बोधिरनुत्तरसुखावहा[5] ॥

॥ सर्व्वकामप्रसाधनहालाहलपरितोष[6]वज्रा नाम समाधिः ॥

---

1 A °मालिकां ।
2 A °लवें A °लन्तु ।
3 A °ताद्धच° ।
4 A मयोत्तमे ।
5 A °सुखामदा ।
6 A परितो वन° ।

10.

हृच्चन्द्रे न्यस्य ह्रीःकारं[1] धर्म्मनैरात्म्यभावनम् ।
कृत्वा संस्कार्य्यं[2] तस्माच्च रश्मीन् नभःसमान् ॥
तैश्च लोकेश्वराकारं जगत् स्थावरजङ्गमम् ।
कृत्वा सम्बोधिसत्त्वार्थं जातं हृदि प्रवेश्य च ॥
तं ह्रीःकारं परावृत्य झटिति ज्ञानयोगतः ।
तं स्मितं रक्तवर्णं तु पद्मराग[3]समद्युतिम् ॥
पञ्चबुद्ध[4]मकुटधरं [5]हर्षेणोत्फुल्ललोचनम् ।
वामतो स्पर्द्धया नालं धृत्वा षोड़शपत्रकम्[6] ॥
पद्मं विकाशयन्तं च हृदि दक्षिणपाणिना ।
मयूरोपरि मध्यस्थे निषण्णं चन्द्रमण्डले ॥
सत्त्वपर्य्यङ्क[7]माभुज्य [8]सश्रृङ्गाररसोत्सवम् ।
चैत्यान्तःस्थमहाकर्म्म कूटागारविहारिणम् ।
भावयेद् वज्रधर्म्माग्र्यं[9] नित्यं बोधिमवाप्नुयात् ॥

भावनाखिन्नो हृच्चन्द्रे न्यस्य मालामिवाविक्षिप्तचित्तो जपेत् । तत्रायं जप्यो मन्त्रः ॐ वज्रधर्म्म ह्रीः ।

॥ साधनोपायिका संक्षिप्ता वज्रधर्म्मस्य ॥

---

[1] A जीःकारं ।
[2] AN संस्थार्य्यं ।
[3] C ०मयं ।
[4] AN ०मुकुटं ।
[5] N हर्षोत्फुल्ललोचनं । A हर्षोत्फुल्लवनं ।
[6] N ०यत्नकं ।
[7] A ०मातुष्य ।
[8] A सशृङ्कसार० ।
[9] A ०धर्म्माग्रः ।

11.

नमः षडक्षरीलोकेश्वराय ।

सम्यक् [1]परहितोद्युक्तमनसाऽऽलम्ब्य देहिनाम् ।
निःशेषदुःखोपशमं सत्सुखे च प्रतिष्ठितम् ॥
तन्मना हृदि सञ्चिन्त्य भावयेच्छुभ्रदीधितिम् ।
तत्प्र[2]भाभिः स्फुरन्तीभिस्तनुं[3] स्वामवभासयेत् ॥
विश्रम्य विधिवन्मन्त्री संहृत्य सद्वितर्कितः ।
स्फुटमुच्चारयेन्मन्त्रं श्वेतदीधितिभास्वरम् ॥
स्वनाभिमण्ड[4]लेनैवं प्रवेश्य हृदि संहरेत् ।
इति कुर्व्वन् त्रिधा ध्यायात् कायवाक्चित्तशोधनम् ॥
तत्र स्वदेहसंस्थेन कायादेः शुद्धिमात्मनः ।
बहिर्गतेन मन्त्रेण प्राणिनां तु[5] विचिन्तयेत् ॥
इष्टोच्चारित[6]मन्त्रोत्थं पुरतो देवताचयम् ।
मन्त्रोच्चारणसंहारक्रमात् प्रत्येकमाचरेत् ॥
विचित्रपूजानिर्म्माणं [7]तन्निष्पादनमेव च ।
परिपूरिं ततः शुद्धिमिष्टार्थे परिणामनाम् ॥
मन्त्रजापं ततः कुर्य्यात् विधिनाऽन्ते जपस्य तु ।
पूजादि पूर्व्ववत् कृत्वा देवतां हृदि संहरेत् ॥
समाधिप्रतिलम्भादौ चतुःसन्ध्यमिमं विधिम् ।
कुर्व्वन् लक्षं जपेन्मन्त्री विजनेषु गृहादिषु ॥

---

[1] AC संरहि० ।    [2] A प्रभालिस्फुरती० ।
[3] A समव० ।    [4] ABN ०लैवैनं ।
[5] A प्राणिनाञ्च विचि० ; N प्राणिना सुवि ।
[6] C मन्त्रौर्थं ।    [7] BN तन्निर्य्यातन० ।

आसनमित्तीं[1] विना आर्य्यो जापस्फुरणसंस्कृतैः[2] ।
पापप्रमादो सर्व्वेन चतुरस्रं च मण्डलम् ॥
कारयित्वा पटाग्रस्य पुरो ध्यात्वाथवा विभुम् ।
मण्डलार्चनमर्घ्यां[3] वा कृत्वा कुर्य्यादमून् विधीन् ॥

तत्रायं देवताकारोपदेशः —

पर्य्यङ्किनं सितं साक्षमालाब्जं[4] सम्पुटाञ्जलिम् ।
दृष्ट्वा विभुं तत्प्रतिमां देवीं वीरासनाश्रिताम् ॥
आर्य्यां तु चिन्तयेत् पीतां वामे रत्नच्छटाभृताम्[5] ।
रिक्त[6]सव्यकरां रत्नमौलिं वीरासनानुगाम् ॥

॥ इत्यार्य्य[8]षडक्षरी[9]महाविद्यालोकेश्वरभट्टारकोपदेश-
परम्परायातसाधनविधिः ॥

---

[1] A आसननिन्तीपिना ।
[2] A स्फुरणस्कृतैः ।
[3] A मर्थाम्बा, C मर्वाम्बा ।
[4] A ०मालाजं, C ०मनोज्ञं ।
[5] A ०च्छटा भृतं ।
[6] AC रक्त०
[7] AC विभुं क्षमा० ।
[8] AC इत्याचार्य्य० ।
[9] A ०षडक्षर० ।

12.

क्वचित्[1] षड़क्षरीसाधने भगवान् समणि[2]पुस्तकाङ्कित-पद्मधरः, मणिधरस्तु पुस्तकरहितमणिपद्मधरः, षड़क्षरी तु मणिरहितपुस्तकपद्मधरा। पूजामन्त्रः[3] ॐ लोकेश्वर पुष्पं प्रतीच्छ स्वाहा एवं धूपं दीपं[4] इत्यादि बोद्धव्यम्। अन्यदेवतायां तत्सम्बोधनं कार्य्यम्। ज्ञानमण्डलाकृष्टावयं मन्त्रः, ॐ महासुख वज्रसत्त्व जः[5] हुँ वं होः सुरतस्त्वं अललललहोः[6] अः[7] अः अः अः॥

[षडक्षरीसाधनम्]

---

13.

नमः खसर्पणाय।

प्रथमं तावन्मन्त्री सुखासनोपविष्टः[8] कृतमुखशौचादिकः शुचाववकाशे[9] स्वहृदि[10] अकारेण चन्द्रमण्डलं विभाव्य तदुपरि सितह्रीःकारं तद्रश्मिभिराकृष्याग्रतोऽम्बरे गुरुबुद्ध-

---

[1] A इति।
[2] A सपुस्त०।
[3] ABNC ०मन्त्रास्तु।
[4] AC नैवेद्यादि।
[5] AC ०सत्त्वा।
[6] होः dropped in A.
[7] Ab अः, C अः अः अः।
[8] Ab drops कृतमुख...०वकाशे।
[9] AB ०काशे।
[10] A हृदि।

बोधिसत्त्वादीनानीय हृद्बीजरश्मिसम्भवपूजामेघैः सम्पूज्य पापदेशनादिकं कृत्वा चतुर्ब्रह्मविहारभावनां च ततः शून्यतां भावयेत्, [1]ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति चाधितिष्ठेत्। तदनु पूर्व्ववत् ह्रीःकारं विभाव्य गगनकुहरे संस्फार्य्य[2] संहृत्य तदुद्भूतं[3] लोकेश्वरमात्मानं भावयेत् शीतांशुकोटिप्रभं जटामकुटिनं अमिताभकृत-शेखरं सर्व्वालङ्कारविभूषितं [4]स्मेरमुखं अर्द्धपर्य्यङ्केन[5] पद्मचन्द्रासनस्थं दक्षिणेन वरदं [6]वामेन पद्मधरम्। दक्षिणपार्श्वे आर्य्यतारासुधनकुमारौ वामपार्श्वे भृकुटी-हयग्रीवौ। ततः शिरसि ॐकारं, कण्ठे आःकारं, हृदि हुँकारमिति सञ्चिन्त्य खेदपर्य्यन्तं यावत् तिष्ठेत्। खेदे तु मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ ह्रीः स्वाहा।

॥ इत्यार्य्यखसर्पणलोकेश्वरसाधनम् ॥

---

[1] ॐ dropped in A.

[2] A संस्थार्य्य।

[3] A चात्यद्भूतं, B रतदुद्भूतं।

[4] C मेव॰।

[5] A ॰पर्य्यंकिनो।

[6] AC वामे पद्मं।

14.

नमः खसर्पणाय ।

अभिमतफलदानोल्लासि[1]कल्पद्रुमश्रीः
सुगतनय[2]महाध्वक्षेमे[3]कृत्सार्थवाहः ।
भवसमसमभावः सर्व्वभावस्वभावः[4]
शमयतु जगदंहः[5] सोऽयमम्भोजपाणिः[6] ॥
प्रातर्मुखादिसंशुद्धिं विधाय विजनालये[7] ।
ह्वच्चन्द्रबीजकिरणैः मृदुविष्ट[8]रसंस्थितः ॥
स्वबीजं हृदये ध्यात्वा पूर्णेन्दुपरिभास्वरम् ।
संचोद्य[9] तत्करै[10]रग्रे समानीय [11]नभोऽङ्गणे ॥
श्रीमत्खसर्प[12]णं नाथं गुरुबुद्धौघ[13]सत्सुतान् ।
पूजयेद् विविधैः पूजामेघैस्तद्बीजसम्भवैः ।
ततोऽभिवन्द्य[14] कुर्व्वीत पापस्य देशनादिकम् ॥

यदनादिमति संसारे संसरता मया कृतमकुशलं कारितं वा क्रियमाणं वा परेणाभ्यनुमोदितं तत् सर्व्वं [16]भगवतामग्रतो देशयामि ।

संबुद्धबुद्धपुत्रैरार्य्यैरन्यैश्च यत् कृतं कुशलम् ।
अनुमोद्य तदवशेषं सम्यक् परिणामयामि सम्बोधौ ॥

---

[1] A ०दानासि०, C ०दाङासि० ।
[2] सुगततनय० ।
[3] A ०महाध्वय०, C ०महार्थध्वय० ।
[4] स्वभावः dropped in C
[5] A जगदन्तः ।
[6] A ०मम्भोजप० ।
[7] C ०वये ।
[8] ANC ०विस्तर०
[9] A संवाद्य ।
[10] A तत्किरणै ।
[11] AC नभोऽङ्गणे ।
[12] A खसर्पणं ।
[13] ANC तत्सुतान् ।
[14] C ०भिवन्द्य ।
[16] A भगवतोऽग्रत ।

बुद्धं गच्छामि शरणं करुणामयमुत्तमम्[1] ।
धर्मं च सर्व्वधर्मेषु रसरूपं[2] निरञ्जनम् ॥

मुदितादिभूप्रविष्टं च बोधिसत्त्वगणं[3] तथा निर्वृतिं च करुणात्मकान् बुद्धान् परहित[4]विधानाय चिरस्थितये[5] याचयामि, सर्व्वावरणविमूलनहेतुभूतायां बोधौ चित्तमुत्पादयामि ससुतसुगतैक[6]मार्गं च आशयविशुद्ध्या समाश्रितोऽस्मि । तत एकानेकवियोगादेतत् सकलमेव चलाचलं जगत् शून्यमिति विचिन्त्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं इति शून्यतामधितिष्ठेत् । अधिष्ठाय प्रकृतिविशुद्धाः[7] सर्व्वे इमे धर्मास्तथाहमित्यवलोक्य ॐ स्वभावशुद्धाः सर्व्वधर्माः स्वभावशुद्धोऽहमिति पठेत् । ततो विज्ञानमात्रात्मको[8] भावकः पूर्व्वप्रणिधिसञ्चोदितः पंकारपरिणतविश्ववर्णकमले अकारजं[9] पूर्णशशिमण्डल[10]ममलं तत्रोपरि ह्रीःकारमतिप्रभास्वरं स्फुरत्[11]-किरणसमूहव्याप्तनभःस्थलं विभाव्य तत्परिणतं स्वबीजगर्भं[12] नालालङ्कृतं विकचकमल[13]मवलोकयेत् । तत एतत् सकलपरिणतमात्मानं भगवन्तं ध्यायात् हिमकर-

---

[1] AC ०मुत्तरं ।
[2] AC सर्व्वधर्म्मेण सरूपञ्च ।
[3] A गतथा ; तथा dropped in Ab.
[4] AC परं ।
[5] AC चिरस्थितयो ।
[6] A ससुगतसुगममार्गञ्च, N समतसुगतमार्गञ्च ।
[7] इमे dropped in A.
[8] AN मात्रात्मका ।
[9] Ab अंकार० ।
[10] AC मण्डलं ।
[11] N ०स्फुरत्० ।
[12] A स्वबीजं भगे ।
[13] A विकचकमलनाल, C विकचनाल ।

कोटिकिरणावदातं देहं ऊर्द्ध[1]जटामकुटं अमिताभशेखरं[2] विश्वनलिननिषसं शशिमण्डले अर्द्धपर्य्यङ्कनिषसं सकला-लङ्कारधर[3]विग्रहं स्मेरमुखं द्विरष्टवर्ष[4]देशीयं दक्षिणे वरदकरं[5] वामकरेण सनालकमलधरं करविगलत्पीयूष-[6]धाराभ्यवहाररसिकं[7] तदधः समारोपितोर्द्ध्वमुखं महा-कुक्षिमतिकृशमतिशितिवर्ण्णं[8] सूचीमुखं तर्पयन्तं[9] श्रीमत्पोतलकाचलोदरनिवासिनं करुणास्निग्धविलोकनं[10] शृङ्गाररसपर्य्युपासितं अतिशान्तं नानालक्षणालङ्कृतम्।

तस्य पुरतस्तारा दक्षिणपार्श्वे सुधनकुमारः। तत्र तारा श्यामा[11] वामकरविधृतं सनालमुत्पलं दक्षिणकरेण विकाशयन्ती[12] नानालङ्कारवती अभिनवयौवनोद्भिन्न-कुचभारा। सुधनकुमारश्च कृताञ्जलिपुटः कनकाव-भासिद्युतिः[13] [14]कुमाररूपधारी वामकक्षविन्यस्तपुस्तकः सकलालङ्कारवान्।

पश्चिमे भृकुटी हयग्रीव उत्तरे। तत्र भृकुटी चतुर्भुजा हेमप्रभा जटाकलापिनी[15] वामे त्रिदण्डीकमण्डलुधारि-हस्ता दक्षिणे [16]वन्दनाभिनयाक्षसूत्रधरकरा त्रिनेत्रा।

---

1 ABNC ऊर्द्ध०। 2 ANC अमिताभकृत०।
3 A कृतजालधर०। 4 AN ०देश्मीयां, Ab ०देहं।
5 A नवनकरं। 6 BCb ०लितपीयष, AC त्पायुषं।
7 A ०नासिकं। 8 ०मतिश्चितिवर्णं dropped in Ab.
9 AC तर्ज्जयन्तं। 10 ABNC ०स्निग्धावलोकनं।
11 Ab श्यामवर्णा। 12 A omits ०कुचभारा। सुधन०, C ०कुचतारा।
13 Ab ०भासद्युतिः। 14 A माररूप०।
15 A जकलपिणी। 16 N बन्धना०।

हयग्रीवो रक्तवर्णः सर्व्वलम्बोदरः ऊर्द्धज्वलत्पिङ्गल-केशः भुजग[1]यज्ञोपवीती कपिलतरश्मश्रुश्रेणीपरिचितमुख-मण्डलः रक्तवर्तुल[2]त्रिनेत्रः [3]भृकुटीकुटिलभ्रूकः व्याघ्र-चर्माम्बरः दण्डायुधः दक्षिणकरेण वन्दनाभिनयी। एते सर्व्व एव स्वनायकाननप्रेरितदृष्टयो यथाशोभमवस्थिता-श्चिन्तनीयाः। ततः स्वहृदि शशिमण्डलोपरि ह्रीःकारं विभाव्य तस्माच्च नानाकारान् रश्मीन् संस्फार्य्य[4] त्रैधातु-कमापूर्य्य सर्व्वसत्त्वान् लोकेश्वरपदे[5] प्रतिष्ठाप्य तान् रश्मीन् पुनस्तत्रैव बीजाक्षरे[6] प्रवेशयेत्। पुनस्तत्किरणैरेव ज्ञानसत्त्वमाकृष्य समयसत्त्वेन सह क्षीरनीरयो[7]रिव एक-रूपतां[8] ध्यायात्। ततः कायवाक्चित्तविशुद्ध्या यथाक्रमं शिरसि सितं ॐकारं[9] कण्ठे रक्तमाःकारं हृदि कृष्णहुँकारं विचिन्तयेत्। अमी चानवरतनिःसरदनन्त[10]किरणजाल[11]-विध्वस्त[12]निखिलसत्त्वराशिकलुषसङ्घाता[13] इति भावनां यथाशक्ति स्फुटीकुर्य्यात्।

पाटवं धारणां प्रज्ञां सौभाग्यारोग्यसम्पदम्।
लभते भावनायोगात् साक्षात्कारं च[14] वीर्य्यवान्॥

भावनाखिन्नस्तु मन्त्रमेकाग्रचेतसा जपेत्। तत्रायं मन्त्रः ॐ ह्रीः स्वाहा। अमी च वर्णाः शरद्-

---

1 A भुजत०, C भुजङ्ग०। 2 A ०वर्त्तुल०।
3 AAbC भ्रकुटी। 4 AC संस्थाप्य।
5 AC ०पद०। 6 AC ०द्वार।
7 A ०नीरयोनि। 8 A ०रूपतौ।
9 A ०समोंकारं, C सितमां। 10 A ०वगतु।
11 C ०ज्ञान०। 12 AN ०विध्वस्त०।
13 Ab संघातो, B संङ्घाता। 14 AC करणञ्च।

मणितारकामालिकेव प्रभास्वराः स्फुरदनेकरश्मयः। जपखेदात्तु[1] पुण्यं परिणामय्य उत्थाय[2] यथासुखं देवताहङ्कारमुद्वहन् विहरेत्।

विधाय साधनं हृद्यं[3] श्रीमल्लोकेश्वरस्य यत्।
मया पुण्यं समासादि तेनास्तां तत्पदं जगत्॥

॥ इति खसर्पणसाधनं समाप्तम्।
कृतिः[4] पद्माकरमतिपादानाम्॥

---

## 15.

नमः श्रीखसर्पणाय।

इह शुभङ्करनामा उपासकः शुभकर्म्मकारी करुणायमानः स किल पोतलकगमनोद्यतः गच्छन् खाड़ीमण्डले[5] खसर्पणनामा ग्रामोऽस्ति तत्रोषितः। तस्य तु भगवतार्य्यावलोकितेश्वरेण प्रत्यादेशो दत्तः। मा गच्छ त्वमिहास्मान् वैरोचनाभिसंबोधितन्त्रराजक्रमेण स्थापय तेन महान्

---

[1] A जपेदत्तु।

[2] A परिणामोत्थाय।

[3] A गद्यं।

[4] Ab इति।

[5] A खातौ,॰ C खाटौ॰।

स्तत्रासौ भविष्यति। तत्रासौ भगवन्त मीदृशमेव कारितवान् एवंविधा श्रुतिः। तत्र भगवतः साधनाय दृष्टिसम्पत्तिः[2] क्रियते। तथाहि वरं भिक्षोः शीलविपत्तिर्न पुनर्दृष्टि-विपत्तिरिति अतस्तत्र तावत् क्षणिकान्[3] निरात्मकान् सर्व्वधर्म्मान् व्यवलोक्य व्यपगतसकलविकल्पः कृपाशयोऽहो बत अमी सत्त्वाः क्लेशकर्म्मादिभिरुपद्रुताः, ततो जाति-जरामरणदुःखैरतीव पीड्यमानाः सन्तोऽनेकप्रकार-दुःखमनुभवन्ति। ततोऽहं लोकेश्वरो भूत्वा तेषां दुःखापन-यामि सर्व्वज्ञज्ञाने प्रतिष्ठापयामि। इत्येवं प्रतिज्ञा-त्रयं कृत्वा स्वहृदि पंकारजसहस्रदलपद्मवरटकमध्ये अकारजं चन्द्रमण्डलोपरि आः ताँ[4] सुँ[5] भ्रूँ हुँ इति पञ्च बीजानि विन्यस्य एतद्रश्मिमालाभिः सञ्चोद्यानीय तान् गुरुबुद्धबोधिसत्त्वान् गगनतले पुरोवर्त्तिनः कृत्वा वन्दना-पूजापापदेशनात्रिशरणगमनादि[6] सप्तविधां पूजामेकादश-विधां वा कृत्वा मैत्रीकरुणादिचतुर्ब्रह्मविहार[7]भावनां कुर्य्यात्। ततः ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं इत्यु-च्चार्य्य शून्यताबोधिं कृत्वा भगवानवलोकितेश्वरो योगात्मना भूयते। स च शरत्काण्डगौरः जटामुकुटी शिरसि अमिताभधारी सर्व्वालङ्कारभूषितः रत्नसिंहासनोपरि सहस्रदलपद्मस्थः ललिताक्षेपः[8] द्विभुजैकमुखः वामेन

---

[1] A तलोलौ०।
[2] A सम्पति।
[3] A क्षणिकान्।
[4] A ताँ।
[5] A सं।
[6] A omits त्रिशरणगमना०।
[7] A ०विहारी०।
[8] A ललिताद्वय।

पद्मधारी दक्षिणेनामृतधारा[1] स्रवद्वरदः सत्त्वपर्य्यङ्कासीनः। अग्रतस्तारा कनकश्यामवर्णा[2] उन्नतपीनपयोधरा सर्व्वालङ्कारभूषिता उत्पलकलिकासन्नकरद्वयार्पितनेत्रा[3]। तदनु सुधनकुमारः कनकोज्ज्वलः रत्नाभरणो[4] रत्नमुकुटी वामकक्षावसक्तकमलिकः[5] कृताञ्जलिपुटः। तदनु भृकुटी जटामकुटिनी मूर्ध्नि चैत्यालङ्कृता कनकोज्ज्वला रक्तवस्त्रपरिधाना दक्षिणहस्तेन नमस्कारं कुर्व्वाणा अपरेणाक्षमालाधरा वामकराभ्यां त्रिदण्डीकमण्डलुव्यग्रा। तदनु हयग्रीवो ज्वलद्भासुरः पिङ्गलोर्द्धकेशः[6] नागाभरणो रक्तवर्णः लम्बोदरो व्याघ्रचर्म्माम्बरः दण्डहस्तः। एवं पञ्चात्मको भगवान् भावनीयः सपरिवारः पूजयितव्योऽप्येवंविधः। ततः कृतमण्डले तत्रादौ मण्डलं कृत्वा रक्षां कुर्य्यात्। ॐ मणिधरि वज्रिणि रक्ष रक्ष मां हुँ फट् स्वाहा। ॐ वज्ररेखे[7] हुँ मण्डलमन्त्रः। ॐ आगच्छ भगवन् मण्डलकसिंहासने ॐ आः इति मन्त्रकृतोऽध्येषणायां[8] कृतमण्डलमध्यसिंहासनोपरि सहस्रदलपद्मस्थं पञ्चात्मकं पूजयेदिति। तत्र पूजामन्त्राः—ॐ वज्रपुष्पे हुँ। ॐ वज्रधूपे हुँ। ॐ वज्रगन्धे हुँ। ॐ वज्रालोके[9] हुँ। ॐ वज्राहारे हुँ। इति संपूज्य संस्तुत्य मन्त्रजापं कुर्य्यात्। ॐ सर्व्वतथागतपूजामेघप्रसरसमूहे हुँ। पूजाधिष्ठान-

---

[1] A drops धारा।
[2] A ०वर्णाः।
[3] C त्रिनेत्रा।
[4] A वस्त्राभरणो।
[5] AC ०सक्तमलिकः।
[6] AN नागा०।
[7] A ०रेख।
[8] A ०ध्येषणा।
[9] AC ०वज्रगन्धे।

मन्त्रः ॐ श्चाः ताँ हुँ स्हुँ ह्रँ फट् फट् स्वाहा । ॐ सर्व्वतथागतसुललितनमितैर्नमामि भगवन्तं जः हुँ वँ होः प्रतीच्छ कुसुमा[2]ञ्जलिं नाथ होः इति वन्दनामन्त्रः । ॐ मुः स्वाहा इति विसर्ज्जनमन्त्रः । ॐ ख ख खाहि खाहि गृह्ण गृह्ण गृह्णन्तु सार्व्वभौतिका इमं बलिं स्वाहा इति बलिमन्त्रः । अथ पूजारम्भकाले एवमुच्चार्य्य चित्तं शोधनीयं यत् सर्व्वदुश्चरितेभ्यो विरतिं करोमि[4], सर्व्वबुद्धबोधिसत्त्वशिक्षां शिक्षिष्ये[5], यावत् पूजाविधिं न समर्थयामि[6] । यद्येवं न क्रियते तदा रागजं द्वेषजं मोहजं कुशलमूलं स्यात् । इह सर्व्व एव सत्त्वा[7] रागद्वेष-मोहाश्रयाः । तथाहि राग[8]जकुशलमूलेन नन्दोपनन्दौ नागराजानौ, द्वेषजेन [9]रावणः, मोहजेन वैश्रवणो यक्षो भूतः । इत्यतो रागद्वेषमोहादीन् परिहृत्य [10]चित्त-विशुद्ध्या करुणामयचित्तेन सर्व्वाण्येव दानादिकुशल-मूलानि कर्त्तव्यानि ।

॥ इति खसर्पणसाधनं समाप्तम् ॥

---

[1] A ॐ श्चाँ त्राँ टँ ऊँ फट् स्वाहा । [2] A ०माञ्जलिम्मय० ।
[3] A खाहिहि० । [4] A ०ङ्करोषि ।
[5] A शिष्ये । [6] A समन्वयामि, N समक्षयामि ।
[7] A सर्व्वत्वा । [8] A रागकु० ।
[9] A रागेण C रमणः । [10] A चित्तशुद्ध्या ।

16.

नमो लोकेश्वराय ।

प्रथमं तावन्मन्त्री सुखासनोपविष्टः स्वहृदि अकारेण चन्द्रमण्डलं ततः ह्रीःकारं सितवर्णं तदुद्भूतसित-रश्मिभिरग्रतोऽम्बरे गुरुबुद्धबोधिसत्त्वान् पश्येत्। तान् स्वहृद्बीजरश्मिभिः सम्पूज्य पापदेशनादिकं कुर्य्यात्। ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति अधिष्ठयेत्। आत्मानं शून्यतायां व्यवलोक्य पूर्व्वोक्तह्रीःकारेण स्फुरण-संहरणक्रमेण लोकेश्वररूपमात्मानं भावयेत् सर्व्वाङ्ग-सितवर्णं जटामुकुटमण्डितम् अमिताभकृतशेखरं सर्व्वा-भरणभूषितं अर्द्धपर्य्यङ्किनं दक्षिणे वरदहस्तं वामे पद्मधरं पद्मचन्द्रासनस्थम्। दक्षिणपार्श्वे आर्य्यवसुधारासुधनौ, वामपार्श्वे भृकुटीहयग्रीवौ। भगवतः शिरसि चन्द्रे ॐ कण्ठे आः हृदि हुँ एवं विभावयेत्। ध्यानात् खिन्नो योगी मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ ह्रीः स्वाहा ।

॥ आर्य्यावलोकितेश्वरखसर्पणसाधनं समाप्तमिति ॥

---

[1] This *Sādhana* is only to be found in Ab. See fol. 28.

17.

नमः सिंहनादाय ।

द्विभुजैकमुखं शुक्लं त्रिनेत्रं सिंहवाहनम् ।
सिंहनादमहं वन्दे सर्व्वव्याधिहरं गुरुम् ॥

आदौ तावन्मन्त्री मुखशौचादिकं कृत्वा मनोऽनुकूले स्थाने सुखासनोपविष्टः शुक्लअकारपरिणतं चन्द्रमण्डलं तदुपरि शुक्लह्रीःकारं हृदि पश्येत् । तद्रश्मिभिस्त्रैधातुकमवभास्याकनिष्ठभुवनवर्त्तिनं सिंहनादं सर्व्वगुरुबुद्धबोधिसत्त्वानाकृष्य पुरत आकाशदेशे संस्थाप्य तदनु पूजापापदेशनादिकं कृत्वा चतुर्ब्रह्मविहारान् विभाव्य शून्यताज्ञानवज्रस्वभावाः[2] सर्व्वधर्म्माः ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं इत्यनेन मन्त्रेण शून्यतामधितिष्ठेत् । ततः प्रणिधान[3]मनुस्मृत्य शुक्लपँकारपरिणतं कमलं[4] तदुपरि शुक्लअकारपरिणतं चन्द्रमण्डलं तदुपरि शुक्ल[5]आःकारपरिणतं श्वेतसिंहं तदुपरि शुक्ल[6]अँकारपरिणतं श्वेतपद्मं तद्वराटके शुक्लह्रीःकारं स्फुरद्रश्मिविसरं एतत् सर्व्वं परिणम्य सिंहनादरूपमात्मानं पश्येत् सर्व्वाङ्गशुक्लं द्विभुजं एकमुखं त्रिनेत्रं जटामुकुटधरं अमिताभालङ्कृतशिरसं[7] महाराजलीलया स्थितं सिंहासने व्याघ्रचर्म्माम्बरधरं स्फुरत्पञ्चतथागतं असमुल्लितपञ्चचीरं [8]अर्द्धचन्द्रालङ्कृतं वामहस्तस्थितशुक्लपद्मोपरि सितखड्गं तत्समीपस्थितं शुक्लपद्मोपरि नानासुगन्धिकुसुमपरिपूर्णशुक्लकरोटकं

---

[1] A ह्री ।
[2] A स्वभावात्मको ।
[3] N ०मनुस्मृत्य, C ०मनुस्मृत्य ।
[4] A omits कमलं...०परिणतं ।
[5] A आ० ।
[6] N ॐकार० ।
[7] A ०शिरः ।
[8] N ०चन्द्राङ्कितं ।

दक्षिणे सितपद्मोपरि सितफणिवेष्टितं सितत्रिशूलदण्डं [illegible] भगवन्तं ध्यात्वा ध्यानात् खिन्नो मन्त्री मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ आः सिंहनाद हूं फट् स्वाहा। विधिरत्र प्रतिमाकृतेः[1] पटगतस्य वा भगवतः पुरतः प्रतिमण्डलमेकवारधारण्या। तत्रेयं धारणी—नमो रत्नत्रयाय नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ अकटे विकटे निकटे[2] कटंकटे करोटवीर्य्ये स्वाहा।[3] अपतितगोमयमभिमन्त्र्य अष्टौ मण्डलकान् कुर्य्यात्। प्रतिमण्डलं त्रयोदश वारान् आवर्त्तयन् धारणीं प्रतिमण्डलामलितशेषगोमयं धारण्या सप्त वारानभिमन्त्र्य तेन व्याधिं[4] प्रलेपयेत्। सप्तमे दिवसे त्रयोदशे दिवसे [5]एकविंशतितमे वा पञ्चानन्तर्य्यकारिणोऽपि सिध्यन्ति[6] यदि न सिध्यन्ति[7] तदाऽहं पञ्चानन्तर्य्यकारी स्याम्।

॥ सिंहनादसाधनं समाप्तम्।

विधाय साधनं धन्यं यदलाभि[8] शुभं मया।
सिंहनादस्य नाथस्य निर्व्याधि स्यात् ततो जगत्॥

। कृतिरियं पण्डितावधूतश्रीमदद्वयवज्रपादानाम्॥

---

[1] A ०प्रतिमाकृतो। [2] AC reads चिकटे after निकटे। [3] A ०स्वाहणी, N ०स्वाहणीं, C ०स्वाहणा। [4] A व्याधि। [5] A ०विंशतिखान्त०। [6] AC सिध्यति। [7] AC सिध्यति। [8] A यदचलाभिः।

१६.

नमो लोकनाथाय ।

पूर्व्ववत् क्रमयोगेन लोकनाथं प्रतिष्ठमम् ।
[1]ह्रीःकाराक्षरसंभूतं जटामुकुटमण्डितम् ॥
वज्रधर्म्मजटान्तःस्थं [2]अशेषरोगनाशनम् ।
वरदं दक्षिणे हस्ते वामे पद्मधरं तथा ॥
ललिताक्षेपसंस्थं तु महासौम्यं प्रभास्वरम् ।
[3]वरदोत्पलकरा सौम्या तारा दक्षिणतः स्थिता ॥
वन्दनादण्डहस्तस्तु [4]हयग्रीवोऽथ वामतः ।
रक्तवर्णो[5] महारौद्रो व्याघ्रचर्म्माम्बरप्रियः ॥
[6]तद्दरटकाष्ट[7]दले पद्मे मैत्रेयादिं [च] विन्यसेत् ।
मैत्रेयः पीतवर्णश्च नागपुष्पवरप्रदः ।
क्षितिगर्भः श्यामवर्णः कलशं चाभयं तथा ॥
वज्रपाणिश्च मुक्ताभो वज्रहस्तो वरप्रदः ।
खगर्भो [8]नभःश्यामाभो चिन्तामणिवरप्रदः ॥
मञ्जुघोषः कनकाभः खड्गपुस्तकधारकः(विश्वः) ।
गगनगञ्जो[9] रक्तवर्णो नीलोत्पलवरप्रदः ॥

---

[1] A ह्रीःकारत्वसं० ।
[2] AC अशेषाराग्रनागरं ।
[3] A वरदालङ्कारा, B वरदोत्पला ।
[4] C ०ग्रीवोऽर्थ० ।
[5] C रक्तवर्णो ।
[6] The passages from तद्दरटकाष्टदले......मञ्जुघोषानुचारक: cannot be found in any other recension except A.
[7] MS तद्दारटकाष्टदले ।
[8] MS नभश्यामाभो ।
[9] MS गगनगञ्जा ।

विष्कम्भी तु श्यामवर्णो रत्नोत्तमवरप्रदः ।
समन्तभद्रः पीताभो रत्नोत्पलवरप्रदः ॥
धूपादिचतुर्देवी च वज्राङ्कुश्यादिद्वारगाः ।
वर्णायुधे यथापूर्व्वं मण्डलस्यानुसारतः ॥
एवंविधैः समायुक्तं लोकनाथं प्रभावयेत् ।
सर्व्वक्लेशमलातीतो भवेत् पूर्णमनोरथः ॥

अत्र मन्त्रः ॐ ह्रीः स्वाहा ।

॥ इति लोकनाथसाधनं समाप्तम् ॥

---

19.

[2]लोँबीजात् सर्व्वं पूर्व्ववद् विधाय शुद्धिपर्य्यन्तं ततो लोँ[3] परिणम्य लोकनाथं चन्द्रप्रभं सर्व्वाभरणोज्ज्वलं जटामुकुटिनं पद्मचन्द्रोपरि पर्य्यङ्किनं वामे पद्मधरं दक्षिणे वरदं चिन्तयेत्। समयमुद्रा। मुष्टिद्वयं बद्ध्वा मध्याङ्गुल्यौ पद्मसंको[4]चाकारेण योजयेत्। ॐ मणिपद्मे हुँ मन्त्रं जपेत्।

॥ लोकेश्वरसाधनं समाप्तम् ॥

---

[1] MS वज्रीकुशादि० ।　[2] AC लाँ ।
[3] AC लां ।　[4] A ०सङ्काचाका० ।

20.

नमः सिंहनादाय ।

प्रथमं मुखशौचादिकं कृत्वा सुखासनस्थो योगी स्वहृदि सूर्य्यमण्डले आःकारं दृष्ट्वा पुरतो गुरुबुद्धादीनानीय पापदेशनादिकं कुर्य्यात् । ततः शून्यतामामुखीकृत्याधिष्ठाय च प्रणिधिमनुस्मरेत् । ततः [1]अकारपरिणतं[2] चन्द्रं तस्योपरि ॐकारपरिणतं रक्तपद्मं तदुपरि आःकारपरिणतं श्वेतसिंहं तस्योपरि चन्द्रे ह्रीःकारसम्भवं सिंहनादभट्टारकं श्वेतं जटामकुटिनं त्रिनेत्रं द्विभुजं तपस्विवेशधरं महाराजलीलया स्थितं वामहस्तादुत्थितपद्मोपरि ज्वलद्दूर्द्धखड्गं दक्षिणे सितत्रिशूलं सितफणिवेष्टितं वामे नानासुगन्धिपुष्पैः पूर्णं श्वेतकपालं अमिताभमुकुटिनं [3]स्फुरत्पञ्चतथागतं महानिर्म्माणरूपिणं ध्यायात् । जपमन्त्रः ॐ आः ह्रीः सिंहनाद हुँ फट् ।

॥ इति सिंहनादसाधनम् ॥

---

[1] A आकार० ।

[2] A has ऊँकारं तत्परिणतं after this.

[3] AC स्मरेत् ।

21.

नमो रत्नत्रयाय ।

नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ कटे विकटे निकटे कटंकटे करोटे करोटवीर्ये स्वाहा । एषा भगवत आर्यावलोकितेश्वरस्य पुरतः प्रत्यूषे अपतितगोमयेनाष्टौ मण्डलकान् कृत्वा प्रतिमण्डलं त्रयोदश वारानुच्चारयितव्या । ततः सप्त वारान् गोमयशेषमभिमन्त्र्य व्याधिमुपलेपयेत् सर्व्वव्याधीनुपशमयति । यदि सप्तमे दिवसे त्रयोदशे वा एकविंशतितमे [1]वा दिवसे पञ्चानन्तर्यकारिणोऽपि न [2]सिध्यन्ति तदा [3]अहं पञ्चानन्तर्य्यकारी स्यामिति ।

॥ सिंहनादानाम धारणी समाप्ता ॥

---

[1] वा omitted in AN.

[2] A सिध्यति ।

[3] अहं dropped in AN.

22.

नमः सिंहनादाय।[1]

प्रथमं तावन्मन्त्री मुखशौचादिकं कृत्वा मद्गुविहरे[2] उपविश्य सुखासनस्थः स्वहृदि चन्द्रमण्डले सितहींकारं दृष्ट्वा तद्रश्मिसमाकृष्टान् गुरौ गुरुबुद्धबोधिसत्त्वान् ध्यायात्। ततस्तु पूजापापदेशनादिकं कृत्वा शून्यतां विभाव्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं[3] इत्यनेनाधितिष्ठेत्। ततो झटिति पँकारपरिणतं रक्तपद्मं तदुपरि सिँकार[4]-परिणतं श्वेतसिंहं तस्योपरि चन्द्रे ह्रींकारसम्भवं सिंह-नादलोकेश्वररूपमात्मानं ध्यायात् शुक्लममिताभजटा-मुकुटिनं त्रिनेत्रं द्विभुजं तपस्विवेशधरं महाराजलीलया स्थितं वामहस्तादुत्थित[5][6]पद्मोपरि ज्वलत्खड्गं दक्षिणे सित-त्रिशूलं सितफणिवेष्टितं वामे नानासुगन्धिपुष्पैः पूर्णं श्वेतकपालं स्फुरत्पञ्चतथागतं[7] महानिर्म्माणरूपिणं[8] ध्यायात् इति। जपमन्त्रः ॐ आः ह्रीः सिंहनाद हुँ[9] फट्।

॥ सिंहनादसाधनं समाप्तम्[10] ॥

---

[1] This *Namaskāra* is only to be found in Ab.

[2] मद्गुविहरे उपविश्य not to be found in ANC.

[3] Instead of the *Mantra* ॐ शून्यता etc. Ab has स्वभाव-शुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहं।

[4] Ab मध्यात्। [5] A तदुपरिणतं।

[6] A ॰दुत्थितमपरि। [7] Ab ॰तथागताः।

[8] Ab रूपं, C रूपितं। [9] Ab adds स्वाहा after हुँ।

[10] This Colophon is not to be found in any other MS. except Ab.

23.

तदनन्तरं धारणी भवति। नमो रत्नत्रयाय नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ अकटे विकटे निकटे कटंकटे करोटे करोटवीर्य्ये स्वाहा। अयं [1]मन्त्रोपचारः भगवतोऽग्रतः प्रत्यूषे अपतितगोमयेनाष्टौ मण्डलकान् कृत्वा प्रतिमण्डलके[2] त्रयोदश वारानुच्चारयेत्। ०गोमयशेषं सप्ताभिमन्त्र्य [3]व्याधिमुपलेपयेत् सर्व्वव्याधीनुपशमयति। यदि सप्तमे दिवसे त्रयोदशे दिवसे [4]एकविंशतितमे वा दिवसे पञ्चानन्तर्य्यकारिणोऽपि न सिध्यत्ययं तदाऽहमेव पञ्चानन्तर्य्यकारी भविष्यामि।

॥ सिंहनादधारणी समाप्ता ॥

---

24.

नमः खसर्पणाय।

नत्वा खसर्पणं नाथं नाथभूतं च दुःखिनाम्।
संक्षिप्तात् विस्तरं किञ्चित् साधनं तस्य लिख्यते॥

प्रथमं तावन्मन्त्री पाणिपादादिकं वारिणा प्रक्षाल्य परमशुचिर्भूत्वा विजनगिरिगुहायां स्थाने शुचौ वा क्वचित् चित्तानुकूले मृदुविष्टरामलोपविष्टः स्वहृदि प्रथमस्वरपरिणतं निर्द्दोषदोषाकरमण्डलमालोक्य चेतसा तन्मध्ये

---

[1] C मन्त्रोप०। [2] Ab ०मण्डले।
[3] A व्याधिमूलेपयचेत्। [4] AC ०विंशतिमे।

शरदिन्दुगतं[1] किरणावलीप्रोज्ज्वलं ह्रीःकार[2]बीजं पश्येत्। ततोऽपि ह्रीःकारबीजात् निःसृत्य [3]जगन्मोहतम[4]स्तोमध्वंस-[5]कारिभिरङ्कुशाकारैर्म्मरीचिविसरैर्दशसु दिक्षु ये चानन्त-लोकधातवः अवतिष्ठन्ते तान् सर्व्वान् प्रकाश्य तत्र स्थिता अप्यसंख्येया अप्रमेयाश्च गुरुबुद्धबोधिसत्त्वा नभोदेशे चाकृष्य संस्थाप्यन्ते। पश्चात् तेषां नभोदेश-वर्त्तिनां[6] परमकारुणिकानां गुरुबुद्धबोधिसत्त्वानां पुष्पधूप-दीपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकादि-भिरतिशयवतीं पूजां विधाय पापदेशनां कुर्य्यात्। [7]यत्किञ्चित् अस्यां जातावन्यासु वा[8] जातिष्वनादिनिधने जातिसंसारे संसरता मया पापकं कर्म्म कायेन वाचा मनसापि कृतं कारितं क्रियमाणमनुमोदितं तत्सर्व्वं [9]भगवतां त्रैलोक्यमहोत्सवानां गुरुबुद्धबोधिसत्त्वानां पुरतः प्रतिदेशयामीत्यनेन विधिना प्रदेश्य[10] [11]पुनरकरणसंवरं प्रतिगृह्य पुण्यानुमोदनां कुर्य्यात्। संबुद्धप्रत्येक[12]श्रावक-बुद्धानां तत्सुतानामपि बोधिसत्त्वानां सत्त्वानामपि त्रैलोक्योदरवर्त्तिनां यदेव कुशलं तत्सर्व्वं अनुमोदयामीति। तदनु रत्नत्रयशरणगमनम्। बुद्धं शरणं गच्छामि द्विपदाना-मग्र्यम्, धर्म्मं शरणं गच्छामि विरागाणामग्र्यम्, सङ्घं शरणं

---

[1] C शरदिन्दुगतं।
[2] AC ह्रीःकारं।
[3] AC जगन्मो।
[4] AC स्तोम०।
[5] AC ध्वंस०।
[6] C वृत्ति।
[7] NA omits यत्किञ्चित् ......पुण्यानुमोदनां कुर्य्यात्।
[8] A सुजातिष्वनादि०।
[9] C भगवतो।
[10] A प्रतिदेश्य।
[11] A पुनरक०।
[12] A श्रावकानां।

तिष्ठन्तु यावत् त्रिदिवेश तावत्
निर्वान्तु मा ते चिरतः प्रजानाम् ।
यद्देशना वै सन्तु तादृशी वा
पर्याय कुर्व्वन्तु महाप्रभावाः ॥
संसारसिन्धोः सहसापि सत्त्वाः
पारं यथा यान्ति सुखं प्रभूतम् ।
पुण्यं प्रभूतं यदिहापि सर्व्वं
संबोधये तत् परिणामयामि ॥
जिनेभ्यस्तत्सुतेभ्यश्च गुरुभ्यो जगतामहम् ।
आत्मानं सर्व्वभावेन निर्य्यातयामि सर्व्वदा ॥

इत्यमीभिः सप्तविधां पूजां विधाय ॐ आः हुँ मुरिति विसर्ज्जयेत् । तदनन्तरमप्रमाणानि चत्वारि मैत्रीकरुणामुदितोपेक्षाणि[1] वक्ष्य[2]माणक्रमेण ध्यायात् । तत्रेयं मैत्री सर्व्वसत्त्वेषु[3] अतिशयितहितैकपुत्र[4]कलेहलक्षणा । करुणा तु कीदृशी ? अगाधापारसंसार[5]सागरमध्ये पतितानन्तसत्त्वधातून् समुद्धरामीत्यध्याशयः । मुदिता पुनः कीदृशी ? धातुत्रयावस्थितानां सत्त्वानां [6]यानि सुचरितानि तेषु तद्भोगैश्वर्य्यादिषु[7] हृष्टचित्त[8]ता । केयमुपेक्षा ? [9]प्रतिघानुनयनिबन्धनमपहाय हिताहितेषु सत्त्वेषु परम[10]हिताचरणं चतुःप्रमाणभावनानन्तरं सर्व्वधर्म्मप्रकृतिपरिशुद्धतां[11]

---

[1] AC ०यक्षामि ।
[2] Nb लक्ष्यमाण० ।
[3] A ०सत्त्वेरतिशयित० ।
[4] ANb ०पुत्रलेह० ।
[5] AC ०संसारसारसागर० ।
[6] A पानिसुचरितानि ।
[7] A omits तद्भोगैश्वर्य्यादिषु ।
[8] A हृष्टचित्तता ।
[9] ANb प्रतिघातक्षमि० ।
[10] A ०हिताचरणां ।
[11] A omits तां...चक्षमपि ।

चिन्तयेत्। सर्व्वे स्वामी धर्म्माः प्रकृत्या स्वरूपेण परिशुद्धाः अहमपि प्रकृतिपरिशुद्ध इत्यादिक्रममामुखयेत्। इमामेव सर्व्वधर्म्मप्रकृतिपरिशुद्धतां ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्यनेन दृढीकुर्य्यात्। न च प्रकृतिपरिशुद्धे[1] सर्व्वधर्म्मे[2] सद्यो मुक्तिप्रसङ्गो दुर्व्वारः स्यात्। सत्यं परमयं प्रसङ्गोऽसङ्गत एव। कुतोऽसङ्गतः? संसारहेतुकरागादिमलशवलत्वात् सर्व्वधर्म्माणाम्। कथं पुनः तदपगमः[3] स्यात्? विशिष्टमार्गभावनया। तया स निरुद्ध्यते। अत एवाह भगवान् निरोधः साक्षात् कर्त्तव्य इति। तस्मात् प्रकृतिपरिशुद्धाः सर्व्वधर्म्मा इत्यादि वचनमुपपन्नमेव इत्यलं बहुभाषितया। सर्व्वधर्म्मप्रकृतिपरिशुद्धतामामुखीकृत्य सर्व्वधर्म्मशून्यतां ध्यायात्। तत्रेयं शून्यता मनोमात्रमेवेदं तेन तेनाकारेण [4]प्रकाशात्मकं प्रतिभासते यथा स्वप्ने नास्ति मनसो बाह्यं[5] मनोग्राह्यं[6] ग्राह्या[7]भावात्। ग्राहकमपि मनो नास्ति। ततश्च मनः[8]स्वरूपाः सर्व्वधर्म्माः। तेषां ग्राह्य[9]ग्राहकादिसकल[10]कल्पनाप्रपञ्चशून्यतातत्त्वं परमार्थ इति यावत्। [illegible]मर्थं अद्वैतप्रकाशमात्रात्मकं सचराचरं जगदिति चिन्तनीयम्। इमामेव शून्यतां ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं इत्यमुना मन्त्रेणाधितिष्ठेत्। तदनु कलङ्काङ्कनिर्म्मुक्त-

---

[1] ANb ०परिस्रुद्धिन।
[2] ANb सर्व्वधर्म्मे।
[3] A तदुपश्चमः।
[4] A प्रकाश्यात्मं।
[5] ANb वाक्यं।
[6] A ग्राव्यं।
[7] A ग्राह्या।
[8] A ०स्वरूपाः।
[9] A ग्राह्य०।
[10] A सकल्प।

सुधाकरमण्डलारूढं[1] शुभातिशुभं[2] ह्रीःकारबीजं भगवन्तं श्रीमत्खसर्पणलोकेश्वरं शरद[3]मलहरिणाङ्कमण्डलशतोदयातिशुभ्रदेहं परमशृङ्गारोज्ज्वलरमणीयमूर्त्तिं नानारत्नाद्याभरणविराजित[4]विग्रहं जटामकुटधारिणं[5] विकसितपुण्डरीकलोचनं भगवदमिताभजिनरत्नविशोभितशिरोदेशं हेम[6]वालुकासलि[7]लक्षालिताव[8]दाताम्बरावृतशरीरं शकटचक्र[9]प्रमाणमतिकमनीयसिताम्भोरुहोपरि स्थितं निष्कलङ्कविधुमण्डलासनस्थं अर्द्धपर्य्यङ्किनं सव्यकरेण वरदं अवसव्येन[10] विकसितमनोहारिसितारविन्दधरं एवम्भूतं भगवन्तं निष्पाद्य तद्रूपमात्मानं विभावयेत्। भगवतो दक्षिणपार्श्वे चार्य्यतारा-सुधनौ वामपार्श्वे च भृकुटी-हयग्रीवौ चिन्तनीयाविति। शिरसि निष्कलङ्केन्दुमण्डलोपरि ॐकारम्, तदनु कण्ठे विमलसोममण्डलोपरि आःकारम्, हृदये त्वमलकुमुदबन्धुमण्डलोपरि हुँकारं पश्येत्। तदनेन क्रमेण यावदिच्छति तावद् भावयेत्। तदनन्तरमस्यैव समयसत्त्वरूपस्य भगवतो लोकनाथरूपस्य[11] हृदिस्थ[12]कलङ्काङ्कविविक्तशशिमण्डलोपरिस्थितकार्त्तिकेन्दुकुन्दसन्निभह्रीःकारबीजविनिर्गतापर्य्यन्तरश्मिविसरैस्त्रैलोक्याज्ञाना[13]न्धकारा-

---

[1] A रूढ्यत् Nb रूढा । [2] A शुभातिशुभ्यत्, Nb शुभ्रातिशुभ्रा ।

[3] A शरदसहरि० । [4] A ०विराजिविग्रहं ।

[5] A drops ०णं......०रुहोपरि ।

[6] C हिम० । [7] Nb ०वालुकाशनिश्चालि० ।

[8] Nb ०दातां वरा० । [9] Nb शतचक्र० ।

[10] वरदं अवसव्येन dropped in A.

[11] A ०नाथस्य । [12] C reads कमलं after हृदिस्थ० ।

[13] C omits ०ान्धकारापहारिभिः ।

पद्मादिभिर्गत्वा[1] अनादिसंसिद्धो भगवान् ज्ञानसत्त्वरूपः सुदूरात्[2] दीपदेशादानीयते[3]। समानीय[4] तमेव भगवन्तं[5] पुरतो नभःप्रदेशे च संस्थाप्य नानारत्नखचितचामीकरादिभाजनावस्थितसुगन्धोदकेन सुरभिकुसुमेन च तस्यैवानीतज्ञानसत्त्वरूपस्य भगवतो[6] लोकनाथस्य चरणार्घं दत्त्वा तदनु दिव्यपुष्पधूपदीपनैवेद्यगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टा[7]पताकादिभिर्बाह्यगुह्यपूजानिवहैर्नानाप्रकारैस्तमेव भगवन्तं ज्ञानसत्त्वात्मकमर्च्चयेत्। पुनः पुनरभ्यर्च्य स्तुत्वा च जः हुँ वँ होः इत्यनेनाक्षरचतुष्टयेन मुद्रां दर्शयेत्। किञ्चिदुच्छ्रितं[8] संपुटाञ्जलिं कृत्वा मध्यमे सूचीकुर्य्यात्, शेषाश्चाङ्गुल्यः किञ्चित् सङ्कोच्य सम्मुखमसंश्लिष्टा धारयेत्, अङ्गुष्ठौ तर्ज्जनीद्वयसमीपे स्थापयेदिति विकसितकमलमुद्रेयम्। अनया मुद्रया तमेवानीतं भगवन्तं ज्ञानसत्त्वलक्षणं परितोष्यापि समयसत्त्वरूपे भगवत्यन्तर्भाव्य ओँ आः[9] हुँ इत्यनेनानयोरद्वैतमधिमुच्येत्। तदनन्तरं कलङ्कपटलनिर्म्मुक्त[10]शुभ्रांशुमण्डलमध्यावलीनां अनौषधीशमण्डलशतकरनिकरोज्ज्वलह्रीःकारबीजविनिर्गता असंख्येया अप्रमेयाश्च भगवतः श्रीखसर्पणलोकेश्वरभट्टारकदश[11]दिग्वर्त्तिनोऽनेकलोकधातून् अवभास्य तत्र स्थिता-

---

[1] C omits गत्वा......ज्ञान०।
[2] ANb सुदूराद्दिपं देशा०।
[3] A ०दानीय।
[4] समानीय omitted in A.
[5] A भवन्तं।
[6] A ०सत्त्वस्य।
[7] ध्वज dropped in A.
[8] A ०दुच्छनं, Na ०दुच्छूतं, C ०दुच्छुनं। [9] A आः।
[10] A ०मुतांशु०। [11] ANb ०कादशी०।

नामपि सत्त्वानां स्वर्णमाणिक्यमुक्ताराजपट[1]प्रवाल-वैदूर्यैन्द्रनीलादिरत्नवर्षणेन दारिद्र्यादिदुःखमपहरन्ति। निरुत्तरक्षणिकनैरात्म्यादिधर्मदेशनायाः पीयूषधारा-प्रबन्धेन तान् सन्तर्पयन्ति। पुनः पुनरनवरतं[2] नानाप्रकारं परार्थं कृत्वा जगदपि भगवल्लोकेश्वररूपेण निष्पाद्य तत्रापि [3]हिमार्चिर्मण्डलमध्यवर्त्तिनि स्फटिकमणिकिरणसङ्काश-ह्रीःकारबीजे त एव भगवन्तः समागत्यान्तर्भवन्तीत्येव-मादिस्फुरणसंहरणक्रमेण यावत् खेदो न जायते तावद् भावयेत्। तत्रापि भावना[4]खिन्नो मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ ह्रीः स्वाहा। मन्त्रोऽयं भगवतो लोकनाथस्य हृदयम्। असाधारणप्रभाव एवासौ मन्त्रराजः सर्व्वैरेव जिनवरैरभ्यर्चितः[5] सत्कृतो नमस्कृतश्चेति। समाधेरुत्थितो जगल्लोकेश्वररूपं वीक्ष्य तदहङ्कारेण यथेष्टं विहरेत् इति। प्रायोऽनेन विधिना भगवन्तं चिन्तयेत् खड्गाञ्जनादि-प्रमुख[6]सकला महासिद्धयः समागत्य पादयोः पतन्ति, किं पुनः क्षुद्रसिद्धयः? अपि तु ताश्च नितरामेव। ये विजनवन[7]श्मशानगिरिगुहासीना भगवन्तं भावयन्ति ते च अचिरादेव नियतमत्रभगवन्तं पश्यन्ति। स्वयमेव भगवांस्तेषां आश्वास[8]प्रश्वासादिकं दद्यात्। यातु[9] किं बहु-

---

[1] AC ०राजपट्ट०।
[2] A पुनश्चरणात, Na भरणवत।
[3] A मार्चि०।
[4] A भावनात्।
[5] Nb वभ्यर्च्चा०।
[6] AC ०प्रख०।
[7] ANb ०वर०।
[8] A आश्वासादिकं।
[9] ANb यावत्।

[1]वचनीयं परमातिदुर्लभं बुद्धत्वं[2] अपि तेषां पाणितलाव-लीनबदरकफलमि[3]वावतिष्ठति इति।

॥ किञ्चिद् विस्तरं श्रीखसर्पणलोकेश्वरसाधनं समाप्तम्।

श्रीखसर्प्पणनाथस्य कृत्वा साधनमुत्तमम्।
यत् पुण्यमर्ज्जितं तेन यातु लोकः पुरं मुनेः॥

। कृतिः स्थविरानुपमरक्षितानाम्॥

---

25.

सिंहनादमहं वन्दे सर्व्वव्याधिहरं गुरुम्।
भावनायोगमात्रेण मुच्यते सर्व्वकिल्बिषात्[4]॥

प्रथमं तावत् मुखशौचादिकं कृत्वा शुचिवस्त्रप्रावृतः पवित्रभूमौ सुखासनोपविष्टः स्वहृदि चन्द्रे ह्रीःकारं विभाव्य तेन रश्मिनाकृष्य सर्व्वतथागतान् पूजयित्वा पापदेशनादिकं कुर्य्यात्। ततो मैत्रीकरुणामुदितोपेक्षा[5]श्च विभाव्य स्वभावशुद्धमन्त्रोच्चारणपूर्व्वकं शून्यतां भावयेत् ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहं ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं इति। [6]एतदनन्तरं प्रतिभासमात्रकं स्वकायमवलोक्य रक्तरेफ[7]परिणतं रक्ताष्ट-

---

[1] A किम्बचनीयं।
[2] बुद्धत्वं dropped in A.
[3] ANb ०मिव तिष्ठति।
[4] N ०किल्बिषैः।
[5] A चतुर्विभाव्य।
[6] A तदन०।
[7] C ०रिफ०।

दलपद्मोपरि ह्रीःकारपरिणामेन श्वेतसिंहं तस्योपरि पृष्ठ-
चन्द्रे ह्रीःकारं सरश्मिकं तेनैवाकृष्य सर्व्वतथागतप्रवेशे-
नात्मानं सिंहनादं लोकेश्वररूपं भावयेत् श्वेतवर्णं त्रिनेत्रं
जटामुकुटिनं [1]निर्भूषणं व्याघ्रचर्म्मप्रावृतं सिंहासनस्थं महा-
राजलीलं चन्द्रासनं[2] चन्द्रप्रभं भावयेत्। दक्षिणे सित-
फणिवेष्टितं त्रिशूलं श्वेतं, वामे नानासुगन्धिकुसुमपरि-
पूरितपद्मभाजनं, वामहस्ता[3]दुत्थपद्मोपरि ज्वलत्खड्गं,
स्वकाये पञ्चतथागतं स्फुरन्तं पश्येत्। ततो हृद्बीजेनाकृष्य
ज्ञानसत्त्वं प्रवेशयित्वा तथागतान् [4]स्फार्य्याभिषिञ्चेदात्मानं
मौलावमिताभमुद्रणं चिन्तयेत्। ततो मन्त्रं जपेत्
देवतामूर्त्तिना। तत्रायं मन्त्रः ॐ आः ह्रीः सिंहनाद
हुँ फट् स्वाहा। तदनु सुगन्धादिमण्डलं कृत्वा पूजार्थं
पुष्पादिकं ढौकयित्वा[5] अर्च्चयेत्। पुनर्म्मालामन्त्रं जपेत्।
ॐ नमो रत्नत्रयाय नम आर्य्यावलोकितेश्वराय बोधि-
सत्त्वाय महासत्त्वाय महाकारुणिकाय। तद्यथा ॐ
अकटे विकटे निकटे[6] कटङ्कटे करोटे करोटवीर्य्ये स्वाहा।
अनेन मन्त्रेण मण्डलमृत्तिकां गृहीत्वा एकविंशतिवारान्
[7]आवर्त्त्य व्याधिं प्रलेप्य स्वस्थो भवति।

॥ इति[8] सिंहनादलोकेश्वरसाधनं समाप्तम् ॥

---

[1] C विभूषणं।
[2] चन्द्रासनं dropped in A.
[3] N ०दुपस्थितं।
[4] A स्थाप्या०।
[5] A ढौषयित्वा।
[6] A adds कटके and N त्रिकटे after निकटे।
[7] A आवर्त्त्यं।
[8] N omits इति and समाप्तं in the Colophon.

26.

प्रथमं तावत् मन्त्री सुखासनोपविष्टः स्वहृदि पँकार-परिणताष्टदलकमलस्योपरि [1]अकारपरिणामेन चन्द्र-मण्डलं तस्योपरि ह्रीःकारं सरश्मिकं दृष्ट्वा तेन रश्मिना-कृष्याकनिष्ठभुवनवर्त्तिलोकेश्वरं पुरतो नभःस्थलं दृष्ट्वा पापदेशनादिकं कुर्य्यात्। तद्यथा पापदेशना, पुण्यानु-मोदना, पुण्यपरिणामना, त्रिशरणगमनं, आत्म-भावनिर्य्यातना, अध्येषणा, बोधिचित्तोत्पादनं कृत्वा चतुर्ब्रह्मविहारवान् भावयेत्—मैत्रीकरुणामुदितोपेक्षाः। ततः शून्यतां भावयेत् ॐ शून्यताज्ञानवज्रस्वभावात्म-कोऽहम्। प्रतिभासमात्रं[2] स्वकायं[3] व्यवलोक्य हृदि मध्ये पँका[4]रजाष्टदलपद्मस्योपरि अकारेण[5] चन्द्रमण्डलं तस्यो-परि रक्तह्रीःकाररश्मिनाकृष्टसर्व्वतथागतप्रवेशेनात्मानं लोकेश्वररूपं विभावयेत्। शुक्लवर्णं जटामुकुटिनं दक्षिण-हस्तवरदं तदितरशुभ्रपद्म[6]हस्तं अर्द्धपर्य्यङ्किनं सर्व्वालङ्कार-भूषितं अमिताभमकुटिनं द्वात्रिंशल्लक्षणधरं अशीत्यनु-व्यञ्जनं चन्द्रासनं चन्द्रप्रभमात्मानं विभावयेत्। ततो दक्षिणे आर्य्यतारासुधनौ, वामे भृकुटीहयग्रीवौ, पूर्व्वे वैरोचनः, दक्षिणे रत्नसम्भवः, पश्चिमे अमिताभः, उत्तरे अमोघसिद्धिः, आग्नेय्यां लोचना, नैरृत्यां मामकी,

---

[1] A omits अकारपरि०।

[2] A adds तेन रश्मिना after प्रतिभासमात्रं।

[3] A स्वकाय्यं।

[4] A पं रजा०।

[5] A आकार०।

[6] C [illegible]।

वायव्यां पाण्डरा, ऐशान्यां वज्रधात्वी[1]श्वरी। ततो हृद्-बीजरश्मिनाकृष्य ज्ञानसत्त्वं प्रवेशयेत्। चक्षुराद्यधिष्ठानं कायवाक्चित्ताधिष्ठानं कृत्वा अभिषेकं प्रार्थयेत्।

यथाहि[2] जातमात्रेण स्नापिताः सर्व्वतथागताः।
तथाहं स्नापयिष्यामि शुद्धं[3] दिव्येन वारिणा॥

ॐ[4] सर्व्वतथागताभिषेकसमयश्रिये[5] हुँ फट् स्वाहा। लोचनादिदृशदेवतां संस्फार्य्य[6] पूजास्तुतिं कृत्वा मन्त्रमाजपेत्। तत्रायं मन्त्रः ॐ ह्रीः स्वाहा।

॥ खसर्पणसाधनं समाप्तम्॥

---

## 27.

नमो हालाहलाय।

पूर्व्ववच्छून्यतापर्य्यन्तं भावयित्वा—

ह्रीःकारबीजनिष्पन्नं हालाहलं महाकृपम्।
त्रिनेत्रं त्रिमुखं चैव जटामकुटमण्डितम्॥
प्रथमास्यं सितं नीलदक्षिणं वामलोहितम्।
[7]शशाङ्कार्द्धधरं मूर्द्ध्नि कपालकृतशेखरम्॥
जटान्तःस्थजिनं सम्यक् सर्व्वाभरणभूषितम्।
सितारविन्दनिभासं शृङ्गाररससुन्दरम्॥

---

[1] AC ०धाते०।
[2] A यथाभि।
[3] A adds तु after शुद्धं।
[4] A has आः हूँ after ॐ।
[5] A मास्त्रये।
[6] A संस्थार्य्य।
[7] A शशकार्द्ध०।

षड्भुजं सौरवक्त्रं च व्याघ्रचर्म्माम्बरप्रियम् ।
वरदं दक्षिणे पाणौ द्वितीये चाक्षमालिकम्[1] ।
तृतीये शरनर्त्तनं च वामे चापधरं[2] तथा ।
द्वितीये सितपद्मं च तृतीये स्तनमेव च ॥

वामजानुना सितां स्वाभ[3]देवीं दधानं। वामेन कमल-धरां दक्षिणेन भुजेन भगवदालिङ्गनपरां कुसुमशोभित-जटाकलापां। दक्षिणपार्श्वे सर्पवेष्टितं [4]त्रिशूलं, वामपार्श्वे पद्मस्थकपालं नानासुगन्धिकुसुमैः सम्पूर्णं, रक्तपद्मचन्द्रे लीलाक्षेप[5]स्थितं विभावयेत् भगवन्तम्। ततो मन्त्रं जपेत् ॐ वज्रधर्म ह्रीः।

॥ इति हालाहललोकेश्वरसाधनम् ॥

---

## 28.

[6]नमो हालाहलाय ।

सिद्धं हालाहलं नत्वा जगद्व्याधिविनाशनम् ।
महामायामयं तस्य वक्ष्यामि साधनक्रमम् ॥

तत्रादौ तावन्मन्त्री क्वचिन्मनोऽनुकूले पृथिवीप्रदेशे स्थित्वा आद्यनुत्पन्नाः सर्व्वधर्म्माः प्रकृतिपरिनिर्वृता माया-स्वप्नगन्धर्व्वनगरोपमा इत्यधिमोक्षेण आध्यात्मिकमेवमहं-

---

[1] N मालिनं ।
[2] A चापरन्तथा, C चोपरन्तथा ।
[3] A ०नामितामदेवीं ।
[4] B begins, Fol. 43.
[5] A लीलान्तोपस्थितं ।
[6] This *Sādhana* is only to be found in Ab.

ज्ञानमधिष्ठाय दशदिगनन्तपर्य्यन्तलोकधातुव्यवस्थितान् बुद्धबोधिसत्त्वविद्याक्रोधगणानवलम्ब्य ॐ सर्व्ववित् पूर पूर आवर्त्त आवर्त्त हेरित्यनेन विविधपूजामेघान् स्फारयित्वा मनसाभ्यर्च्चाभावेन प्रणम्य धरणीतलविन्यस्तजानुमण्डलो हृदि कृताञ्जलिरेवं ब्रूयात् समन्वाहरन्तु मां बुद्धा भगवन्तो बोधिसत्त्वा महाकृपाविद्यादेव्यो महाक्रोधाः सर्व्वलोकधातुव्यवस्थिताः—

आबोधिशरणं यामि बुद्धं धर्म्मं गणोत्तमम्।
ददामि तेभ्य आत्मानं प्रतिगृह्णन्तु नायकाः॥

अनादिमति संसारे संसरता मयास्मिन् वा जन्मनि यत्कायवाक्यमनोभिः पापकं कर्म्म रत्नत्रयाचार्य्योपाध्यायमातापिताभिक्षुभिक्षुणीसामान्यसत्त्वानां सावद्याभ्याख्यानं संवर्त्तनीयं दारिद्र्यं संवर्त्तनीयं व्याधिं संवर्त्तनीयं। अथवा यत् स्वतः कर्म्म कृतं कारितमनुमोदितं च तत्सर्व्वं युष्माकं पुरस्तात् यदा सद्यः कृतं यच्च तत् सर्व्वं अनिमित्तयोगेनानुपलम्भमानः प्रतिदेशयामि। अनन्तभूयोऽप्येवं करिष्यामि। यच्च प्रथमचित्तोत्पादमुपादाय यावदनुत्तरा सम्यक्सम्बोधिर्यावच्च निरुपाधिशेषो निर्व्वाणधातुरन्तान्तरे सर्व्वबुद्धबोधिसत्त्वविद्याक्रोधगणश्रावकप्रत्येकबुद्धानां अन्येषां च पृथग्जनानां कुशलमूलं तत्सर्व्वमनुमोदयामि। बुद्धप्रेमत्तावदनुमोदनया—

उत्पादयामि परमं बोधिचित्तमनुत्तरम्।
यथा चैयध्विका नाथाः सम्बोधौ कृतनिश्चयाः॥

सर्व्वं चैतत् कुशलमूलं परिणामयामि। सम्यक्सम्बोधौ सम्यक्सम्बुद्धवर्त्तितया परिणामनया ततो वज्राञ्जलि-

विभाव्य ॐ सर्व्वतथागतसंशिताः सत्त्वानां सर्व्वसिद्धयः संपद्यन्तां सर्व्वतथागताश्च मामधितिष्ठेताम्। ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति उदीरयन् स्वशिरसि मुञ्चेत्। अत एव स्वभावशुद्धाः सर्व्वधर्म्मा विमोक्षात् विघ्नोपशमो भवति इति नात्र सन्देहः कार्य्यः। प्रोक्तविकल्पप्रबन्धाद् विघ्नान्।

तदनु स्वहृच्चन्द्रे अकारोद्भवहृदयं स्फुरदमितमयूखं विन्यस्य सर्व्वधर्म्मनैरात्म्यं भावयेत्। तेभ्यः स्वहृदयाक्षरेभ्यो रश्मिमेघान संस्फार्य्य तत् सम्पश्येत् स्थिरचलान् सर्व्वभावान्। हालाहलरूपं निष्पाद्य विचिन्तयेत् तत्रैवं प्रवेश्य मायोपमं सकलं जगदित्यवगच्छन् आत्मानं हालाहलरूपं—

शशाङ्ककोटिसंसृष्टं जटामकुटधारिणम्।
सितारविन्दनिर्भासं नीलकण्ठं त्रिनेत्रकम्॥
महापन्नगसमुद्भूतरक्तपद्मोपरि स्थितम्।
रत्नाचलगुहान्तःस्थं व्याघ्रचर्म्म(ाम्बर)सुवाससम्॥
पर्य्यङ्केन समाधिस्थं(स्थितं) चतुर्भुजविराजितम्।
कुण्डिकाक्षधरं वीरं अमिताभकृतशेखरम्॥
त्रिशूलमूर्द्ध्वखट्वाङ्गं कुलिकाबद्धयष्टिकम्।
चिन्तयेत् तस्य वामेन दक्षिणेन कपालकम्॥

कुसुमपरिपूर्णं कुलिकं च कृतफणं भगवन्तमवलोकयन्तम्।

ततः पञ्चाङ्गविन्यासं मुद्राभिर्मन्त्रसंहताभिः कुर्य्यात्। उत्तानभाजो करयोर्निबन्ध्यपार्श्वे चञ्चलतया शिखायाः पर्व्वद्वितीयं खलु संस्पृशेत्। न्यस्येत तालौ करपार्श्वतश्च मूलमुद्रेयम्।

अस्या एव तु मुद्रायास्तर्ज्जन्या विपरीततः।
वेष्टयित्वा च तालाभ्यां अवष्टभ्य शिरो भवेत्॥
इमामेव न्यसेत् मूर्द्धि विपरीतप्रयोगतः।
शिखा भवति तस्यैव हालाहलनिषेविनः॥
पृथग् मुष्टिद्वयं बद्धा मध्यमे कृतशृङ्खले।
तारे शूचौ च तालौ च पार्श्वतः कवचो भवेत्।
विक्षिप्य तालतामेव कल्पयेदस्त्रकर्म्मिभिः॥

तारा तर्ज्जनी, तालोऽङ्गुष्ठः, धाराऽनामिका, मध्या शिखीति पर्य्यायः। अथासां मुद्राणां मन्त्रा भवन्ति। ॐ सः स्वाहा हालाहलहृदयः। ॐ ज्वलिनि स्वाहा शिरः। ॐ प्रज्वालनदीपाय स्वाहा शिखा। ॐ अघ्याय स्वाहा कवचः सर्व्वाङ्गे। अनन्तशक्तिगर्भा फट् अस्त्रं करद्वये। तदेव स्वयमेवाहं आर्य्यहालाहल इत्यहङ्कारवानात्मानं हालाहलं भावयेद् यावत् खेदो न जायते। सति च खेदे स्वहृच्चन्द्रे स्वज्वालहुँकारं विन्यस्य तन्मयूखावभासिनि च पर्य्यन्तेषु मन्त्रेषु—

मन्त्राक्षराणि विन्यस्य कुर्य्यात् जपं समाहितः।
हृदयं वा जपेन्मन्त्रं मालामन्त्रमथापि वा॥
हृन्मन्त्रकोटिजप्ते तु मालाया लक्षजापया।
सर्व्वथा तस्य सिध्यन्ति सम्पत्तिव्याधयोऽखिलाः॥
यावदिच्छं जपं कृत्वा भावनामपि शक्तितः।
क्षमयित्वा ततो नाथं प्रेषयेत् मूलमुद्रया॥

अथ पटविधानेन भगवन्तमाराधयितुमिच्छति तदा पटे पूर्व्वोक्तरूपं लक्षयेत् इत्ययं पटविधिः।

द्वितीयं कथ्यते—

सुवर्णवर्णं यदि वा त्रिनेत्रं
भुजद्वयोपेतसुनीलकण्ठम् ।
रत्नाचलस्थं सुसमाहितं तनुं
हलाहलं पिङ्गलजटं लिखेच्च ॥
आक्रान्तपादौ (पुच्छौ) वसुनीलरूपा-
वङ्गगतोद्दण्डकृतस्वकार्यौ ।
पार्श्वद्वये नाथमुदीक्षमाणौ
लिखेच्च सर्पौ पुरतः कपालम् ॥
पुष्पैर्विचित्रैः परिपूर्णमेतत्
पदद्वयं हस्तद्वयं समन्तात् ।
(प्रमाणमेतत् कथितं जिनेन)
अधस्तु जानुस्थितधूपहस्तो
निवेशनीयः खलु साधकोऽत्र ॥

अतोऽन्यतमपटं प्रसार्य्य प्रातरेवापतितगोमयेन मण्डलकं कृत्वा मूलमुद्रया मन्त्रसहितया आवाहयेदभिनयेन पटाकृतौ पञ्चाङ्गन्यासं च कुर्य्यात् पूर्व्वोक्तविधिभिरेव मुद्राभिः समन्त्रसहिताभिः। ततो मूलमुद्रयैव पञ्चोपचारेण मानसीभिश्च पूजाभिः सम्पूज्य भगवन्तं सम्बोधयन् मुद्रामुपदर्शयेत् कन्यशृङ्खले(ला) वा सन्धितारापृष्ठे निवेशेतां। शिखाधाराविधिः यौ तर्ज्जन्यौ ख़तसूचकौ। ॐ विस्फुलिङ्गाट्टहासकेशरि इति मन्त्रः। ततः पूर्व्वोक्तरूपमात्मानं विचिन्तयेत्। तद्रूपरहितो वा नवस्तं पूर्व्ववत् मालामन्त्रं त्रयोदश वारानुच्चारयेत। मण्डलकगोमयेन व्याधिं प्रक्षेपयेत्। षण्मासैः सर्व्वव्याधयः

प्रणाम्यन्ति । अथवा लक्षमेकं जपेत् । सर्व्वाशापरिपूरितोऽत्र न कार्य्या विचारणा । तत्रार्य्यमार्य्यहालाहलहृदयमन्त्रः । नमः सर्व्वबुद्धबोधिसत्त्वेभ्यो महापुरुषवृषभेभ्यो नमः आर्य्यावलोकितेश्वर-महेश्वर-महास्थामप्राप्त-आर्य्यमैत्रेय-समन्तभद्र-आर्य्यवज्रपाणिप्रभृतिभ्यो महाबोधिसत्त्वप्रभृतिभ्यो नमस्कृत्वा भगवन्नार्य्यावलोकितेश्वर तव—

हृदयमावर्त्तयिष्यामि सर्व्वकामप्रसाधनम् ।
अधृष्यं सर्व्वभूतेभ्यो भवमार्गविनाशनम् ॥

तद्यथा । हे बोधिसत्त्व प्रियबोधिसत्त्व महाबोधिसत्त्व हे हले आर्य्यावलोकितेश्वर परममैत्रचित्त हितचित्त महाकारुणिक कुरु कुरु महाविद्येति धुरु धुरु धराधर चलेन्द्राचल नमस्तेऽस्तु ह्रीः सर्व्वसत्त्वाभयप्रद हरिहरिहरिवाहनोद्भव भवाभव भवानघ कुरु कुरु कुरु कुरु घुरु घुरु सुरु सुरु मुरु मुरु चुरु चुरु सुप्रसादितामलविमलमूर्त्ति आर्य्यावलोकितेश्वर महाकारुणिक कृष्णाजिनधर अक्षधर दण्डधर जटामकुटावलम्बितप्रलम्बधर मल मल कल कल चल चल तल तल नल नल फल फल हुलु हुलु हुलुल हलाहल हो बोधिसत्त्व महाबोधिसत्त्व नमस्तेऽस्तु हूँ हूँ हूँ कुरु कुरु हृदयमनुस्मर समयमनुस्मर जातिमनुस्मर इदं मे कार्य्यं कृतमनोरथं मे परिपूरय स्वाहा । प्रेषणं च सर्व्ववदिति ।

इति पुण्यजनः सर्व्वो भूयाद् हालाहल इति ।
अहं च मञ्जुघोषः स्यां जगदाशाप्रपूरकः ॥
आबोधि मञ्जुघोषस्य पादाम्बुजरजोरसा ।
प्रज्ञापालितनाम्नायं कथितः पद्मभृद्विधिः ॥

॥ आर्य्यहालाहलसाधनं समाप्तम् ॥

---

## 29.

नत्वा हालाहलं भक्त्या सर्व्वाशापरिपूरकं ।
संक्षेपादुच्यते तस्य साधनं करुणात्मनः ॥

आदौ मनोहरे स्थाने सुलिप्ते[1] चन्दनादिना ।
अवतार्य्य पटादिस्थं भगवन्तं पूजयेदिति ॥

पुष्पादिढौकन[2] मन्त्रः ॐ वज्रपुष्पे हुँ, ॐ वज्रधूपे हुँ, ॐ वज्रदीपे हुँ इत्या[3]दिना । ॐ[4] सर्व्वतथागतपूजामेघ-प्रसरसमुद्रे स्फुर[5] हिमं गगनकं हुँ सर्व्वपूजाढौकनमन्त्रः ।

प्रपूज्य पुरतस्तस्य निषद्य च सुखासने ।
मैत्रीं विभाव्य जगति करुणां च महाकृपः ॥

विन्यस्य हृदये मन्त्रं ह्रीःकारं[6] चन्द्रपृष्ठतः[7] ।
पश्येद्[8]गगनमापूर्णं सम्बुद्धैः सन्ततैः[9] स्फुटम् ॥

ह्रीःकारांशुज[10] पूजाभिस्तान् प्रपूज्य गतश्रमः[11] ।
देशनाद्यं तु पापादेर्विदध्यात् पुण्यवृद्धये ॥

त्रिरत्नशरणाद्यग्र्यं[12] मन्त्रमेनमुदीरयेत् ।
सर्व्वधर्म्माग्रनैरात्म्य[13] द्योतकं करुणामनः[14] ॥

ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति ।

---

[1] A सुलिप्त ।
[2] A ढोघणा० ।
[3] ANC इत्यादि ।
[4] AN omits ॐ ।
[5] A स्थरहिमं, Ab धुरहिमं ।
[6] A ह्रीकलं ।
[7] AC ०पृष्ठकः ।
[8] B पश्येद्गगवम्मा० ।
[9] ANC सम्बुद्धैस्ततसुतैः ।
[10] ह्रीःकारीमुक० ।
[11] C मतभ्रमः, Ab ग्रतभ्रमः ।
[12] A मन्त्रेण मुदी० ।
[13] A धर्म्माग्रनैनास्य ।
[14] A करुणामलः, BC करुणावतः ॥

मन्त्रार्थमामुखीकुर्व्वन् सर्व्वं [1]वस्तु महात्मना ।
[2]ग्राह्यग्राहकनिर्म्मुक्तं भावयेत् ज्ञानमात्रकम् ॥
प्रत्यात्मवेद्यं तं दृष्ट्वा ह्रीःकारं शशिसंस्थितम् ।
तज्जमब्जं सितं [3]ध्यायात् ह्रीःकारान्वितपुष्करम् ॥
ततः संस्फार्य्य बुद्धौघं जगद् बुद्धं विधाय च ।
पुनः प्रवेश्य तत्रैव भूयाद् हालाहलः स्वयम् ॥
त्रिमुखः षड्भुजः शान्तो रत्नाचलगुहाश्रयः ।
रक्तपद्मस्थिते[4] चन्द्रे ललिताक्षेपसंस्थितः ॥
[5]सितपीतमहानीलमूलवामेतराननः ।
व्याघ्रचर्म्माम्बरस्त्र्यक्षः सर्व्वाभरणसुन्दरः ॥
वरदाक्षशरान् सव्ये वामे सत्कामिनीकुचम् ।
सितपद्मं च कोदण्डं बिभ्राणं करपल्लवैः ॥
कपालं वामतो [6]न्यस्य नानापुष्पैः प्रपूरितम् ।
विषभृद्वेष्टितं सव्ये त्रिशूलं च तथाम्बुजे ॥
अमिताभमणिसच्चूडः [7]कपालकृतशेखरः ।
शशिखण्डयुतोत्तुङ्गजटामकुटसञ्चयः ॥
[8]विधूतकल्पनाजालः [9]स्फुरद्बुद्धौघरश्मिकः ।
इत्थं हालाहलो भूत्वा स्वहृत्कण्ठशिरःसु च ॥

---

[1] A सर्व्वंसस्त्र० ।
[2] A ग्राव्यग्रावकनि०, Ab ग्राह्यग्राहकविनि० ।
[3] Ab ध्यायाः ।
[4] B ०सिते ।
[5] For this *Carana* A has सितपीतमहानीस[व्य]वामेतसेननः(?) ।
[6] Ab विन्यस्य ।
[7] A कौपाल० ।
[8] A drops विधूतकल्पनाजालः ।
[9] Ab स्फुरन्बुद्धौ० ।

हुं आः ॐ भावयेच्चन्द्रे नीलारुणसितान् क्रमात्।
हृत्कण्ठयोस्तथा मध्ये ध्येयो ह्रीः चन्द्रसंस्थितः॥
ततः [1]स्थिरचलान् भावान् भावयंस्तांस्तदाकृतीन्।
सर्व्वासत्कल्पनिर्म्मुक्तो जपेन्मन्त्रं समाहितः॥

ॐ हालाहल ह्रीः।

अन्तर्ज्जल्पमतिस्पष्टं न द्रुतं न विलम्बितम्।
यथासुखं जपं कृत्वा विसृष्टौ प्रतिपूज्य च।
संस्तुत्य च दृढीकृत्य समुच्चार्य्य शताक्षरम्॥

[2]तच्चेदं शताक्षरम्— ॐ वज्रसत्त्व समयमनुपालय, वज्रसत्त्वत्वेनोपतिष्ठ, दृढो मे भव, सुतोष्यो मे भव, सुपोष्यो मे भव, अनुरक्तो मे भव, सर्व्वसिद्धिं मे प्रयच्छ, सर्व्वकर्म्मसु च मे चित्तं श्रेयः कुरु, हुं हहहह होः भगवन् सर्व्वतथागत-वज्र मा मे मुञ्च, वज्रीभव महासमयसत्त्व आः।

[3]ॐ कृतो वः सर्व्वसत्त्वार्थः सिद्धिर्दत्ता यथानुगा।
गच्छध्वं बुद्धविषयं पुनरागमनाय च॥

अनेन सम्बोध्य एनं मन्त्रमुच्चारयेत्। ॐ अकारो मुखं सर्व्वधर्म्माणामाद्य[4]मनुत्पन्नत्वात् मुरिति।

ध्यानात् समुत्थितो योगी दानं दद्यात् स्वशक्तितः[5]।

---

1 Ab has सर्व्व after स्थिरचलान्।
2 तच्चेदं शताक्षरं is dropped in ABNC.
3 The *Visarjana* formula ॐ कृतो वः etc. is not found in A.
4 AC ०माद्यनुत्०।
5 A सशक्तितः N सशक्तिकः।

रूपादिकामान् भुञ्जानो निरस्ताशेषकल्पनः।
प्राप्नोत्यनुत्तरां बोधिमचिरात् साधकोत्तमः॥
लिखित्वा साधनं प्राप्तं यन्मया [2]शुभमुत्तमम्।
तेन कृत्स्नं जगद् भूयादचिरेण हालाहलः॥

॥ हालाहलसाधनं समाप्तमिति[3] ॥

---

30.

पूर्व्वोक्तविधानेन विश्वपद्मचन्द्रे रक्तह्रीःकारपरिणतं पद्मनर्त्तेश्वरमात्मानं भावयेत् सत्त्वपर्य्यङ्कनिषण्णं द्विभुजैकमुखं रक्तं सकलालङ्कारधरं अमिताभमुकुटं वामपार्श्वे पाण्डरवासिनीसमाश्लिष्टं आलिङ्गनाभिनयस्थितवामभुजेन रक्तपद्मधरं नर्त्तनाभिनयेन सूचीमुद्रया विकाशयदपरदक्षिणकरम्। ततः ॐ कायवाक्चित्तवज्रस्वभावात्मकोऽहं इति मन्त्रमुच्चारयेत्। तदन्वष्टसु दिक्षु अष्टदेवीं[4] चिन्तयेत्। तत्राष्टदलरक्तपद्म[5]पूर्व्वपत्रे विलोकिनी शुक्ला रक्तपद्मधरा; दक्षिण[6]पत्रे तारा हरिता पलाशपद्मधरा; पश्चिमदले भृकुटी पीता चक्रनीलोत्पलधरा; उत्तरदले भृकुटी शुक्ला पीतपद्मधरा; पूर्व्वकोणदले पद्मवासिनी पीता माञ्जिष्ठ-

---

[1] A omits from प्राप्नोत्यनुत्तरां ...... विश्वपद्मचन्द्रे including the Colophon and part of the next *Sādhana*.

[2] NC सुखमु॰।

[3] NC हालाहलसाधनं only।

[4] A सुदेवीं C कृदेवीं।

[5] A पद्मपत्रे N पद्मपूर्व्वयन्त्रे।

[6] N यन्त्रे।

पद्मधरा; दक्षिणकोणदले वज्रपद्मेश्वरी आकाशवर्णा सितपद्मधरा; पश्चिमकोणदले विश्वपद्मा शुक्ला कृष्ण-पद्मधरा; उत्तरकोणदले विश्ववज्रा विश्ववर्णा विश्व-पद्मधरा। सर्व्वा एताः सत्त्वपर्य्यङ्किन्यो द्विभुजैकमुखाः सौम्याः। कर्णिकायां तु भगवानेव। ततो मन्त्रं जपेत्। मन्त्रः ॐ ह्रीः पद्मनर्त्तेश्वर हुँ।

॥ पद्मनर्त्तेश्वरलोकनाथसाधनम् ॥

31.

[1]नमः पद्मनर्त्तेश्वराय।

तत्र विश्वपद्मोपरि चन्द्रे रक्तह्रीःकारपरिणतं पद्मनर्त्तेश्वरं रक्तवर्णमेकमुखं जटामुकुटिनं त्रिनेत्रं अष्टभुजं सर्व्वालङ्कारभूषितं सर्प्पयज्ञोपवीतमर्द्ध पर्य्यङ्केन ताण्डवं, प्रथमभुजद्वयेन नृत्याभिनयं द्वितीयदक्षिणभुजेन हृदि विकाशयन्तं सूचीमुद्रां वामभुजेन रक्तपद्मं शिरसि धृत तृतीयभुजद्वयेन वज्रवद्दण्ड[2]त्रिशूलधरं चतुर्थभुजद्वयेन अक्षसूत्रकुण्डिकाधरं अष्टदेवीपरिवृतं एवंभूतं पद्मनर्त्तेश्वरलोकनाथं भावयेत्।

॥ पद्मनर्त्तेश्वरसाधनम् ॥

---

[1] This *Sādhana* is only to be found in Na.

[2] MS has वज्रत्रिदण्डि।

32.

पूर्व्वोक्त[1]विधानेन शून्यताभावनानन्तरं विश्वपद्मस्थचन्द्रोपरि सितह्रीःकारं विभाव्य तत्परिणामेन पद्मनर्त्तेश्वराम्नायेनार्य्यावलोकितेश्वरभट्टारकमात्मानं [2]विभावयेत्। एकमुखं अष्टादशभुजमर्द्धपर्य्यङ्किनं अमिताभजटाजूटमण्डलं, सर्व्वकरैर्विश्वपद्मधारिणम्, योगिनीवृन्दपरिवृतं, दक्षिण[3]वामपार्श्वस्थिततारासुधनभृकुटीहयग्रीवं, दिव्यालङ्कारवस्त्रभूषणं। ततो मन्त्रं जपेत्। ॐ ह्रीः पद्मनर्त्तेश्वर हुँ। व्याध्याद्युपशमे महानुशंसः।

॥ इति पद्मनर्त्तेश्वरसाधनम् ॥

33.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं सितह्रीःकारनिष्पन्नं हरि[4]हरिहरिवाहनोद्भवं भगवन्तमार्य्यावलोकितेश्वरं सर्व्वाङ्गशुक्लं जटामकुटिनं शान्तवेशं, दक्षिणकरेण भगवन्तं तथागतं साक्षिणं कुर्व्वन्तं, द्वितीयेन अक्षमाला[5]धारिणं, तृतीयेन दुःकुहकं लोकमुप[6]देशयन्तं, वामेन दण्डधरं, द्वितीयेन कृष्णा[7]जिनधरं, तृतीयेन कमण्डलुधरं, सिंहगरुड़विष्णु[8]स्कन्धसंस्थितमात्मानं ध्यात्वा ॐ ह्रीः हुँ इति मन्त्रं जपेत्।

॥ हरिहरिहरिवाहनोद्भवसाधनम् ॥

---

[1] A पूर्व्वोक्त°। [2] A भाव°। [3] A दक्षिणपार्श्व°।
[4] A हरिहर°। [5] A वरदधारिणं। [6] A °मुपदर्शयन्तं।
[7] A °जिनिन°। [8] C स्कन्धप्रत°।

## 34.

आदौ तावन्मन्त्री सुखासनासीनो जगदभ्युद्धरणाय पापदेशनादिकसप्तविधानुत्तरपूजां कृत्वा यँकार[1]निष्पन्नं वायुमण्डलं धन्वाकारं नीलपताकाङ्कितं, तस्योपरि रेफोद्भवं रक्तवर्णमग्निमण्डलं, त्रिकोणं रक्तरेखाङ्कितं तदुपरि [2]वँकारपरिनिष्पन्नं [3]वारुणमण्डलं वर्त्तुलं शुक्लवर्णं [4]शुक्लपताकाङ्कितं तदुपरि लँकारसम्भवं माहेन्द्रमण्डलं चतुरस्रं पीतवर्णं पीतचिह्नत्रिकवज्रचतुष्कोणशोभितं तदुपरि सुँकारनिष्पन्नं सप्तरत्नमयं अष्टाङ्गं सुमेरुं तस्योपरि पँकारपरिणतं विश्वदलकमलं तस्योपरि [5]आत्मानं विचिन्त्य ॐ ह्रीः हुँ क्रमेण शिरसि कण्ठे हृदि विन्यस्यात्मानं अनादिकाल[6]संचितकर्म्मावरणविगतं[7] हरिहरिहरिवाहनोद्भवं लोकेश्वरमूर्त्तिं सुवर्णरत्नरश्मिज्वालाकुलं कुमाररूपं विचिन्तयेत् मन्त्री। पश्चात् स्वहृदि पुण्यज्ञानविशुद्धा चन्द्रमण्डलं सूर्य्यमण्डलं च तत्र ह्रीःकारविनिर्गतरश्मिज्वालाभिर्ज्ञानसत्त्वमाकृष्य वक्ष्यमाणरूपं संपूज्य पूर्व्वोक्तपूजाभिः ज्ञानसत्त्वसमयसत्त्वयोरेकीकरणात् भगवन्तं हरिहरिहरिवाहनोद्भवं [8]भगवल्लोकेश्वरं स्थिरचित्तेनात्मानं विभावयेत् षड्भुजं शुक्लवर्णं जटामुकुटिनं शान्तवेशं दक्षिणकरेण सम्बुद्धं साक्षिणं कुर्व्वन्तं द्वितीयेनाक्षमालाधरं तृतीयेन दुर्गतिस्थितलोकं [9]शुभमुपदेशयन्तं;

---

[1] AN पङ्कार०। [2] AN चङ्कार०। [3] B वरुण।
[4] BN शुक्लघटमध्याङ्कितं। [5] A मात्मानं। [6] A ०काल०।
[7] A ०द्वियतं। [8] BN omits भगवल्ल०।
[9] ०शुभं omitted in A.

यामेन दण्डधरं द्वितीयेन कृष्णाजिनधरं तृतीयेन कमण्डलुधरं भगवन्तं चिन्तयेत्। तत्र विशुद्धिः। वाय्वग्नि-मण्डलाभ्यां हरिः, वारुणमण्डलेन गरुड़ः, माहेन्द्र-मण्डल[1]सुमेरुभ्यां हरिरिति विशुद्धिः सततं भावयन् योगी सर्व्वसत्त्वार्थकरणसमर्थो[2] भवति, सर्व्वजनप्रियो भवति, महाप्राज्ञो भवति, नीरोगो निरुपद्रवश्च धनाढ्यो भवति, वश्य[3]विषकर्म्मणि महासमर्थो भवति। जपमन्त्रं गुरूपदेशतो ज्ञेयम्[4]।

॥ हरिहरिहरिवाहनोद्भवलोकेश्वरसाधनम् ॥

---

35.

प्रथमं तावत् मनोऽनुकूले स्थाने योगिपटं[5] प्रकाश्य तस्याग्रतो माहेन्द्रमण्डलमध्ये कुङ्कुमेन[6] चन्द्रमण्डलं कारयेत् ॐ वज्ररेखे हुँ इति मन्त्रेण। तदनु जः हुँ वँ पद्मस्थहोरिति मन्त्रेणावाहनं कृत्वा मण्डलमध्ये त्रैलोक्य-वशङ्करलोकेश्वरभट्टारकं पूजयेदनेन मन्त्रेण ॐ त्रैलोक्य-वशङ्कराय वज्रपुष्पे हुँ प्रतीच्छ[7] स्वाहा। ततः ॐ मुनि[8]वज्रे मुरिति विसर्ज्य स्वहृदि रक्तश्चाँकारं विचिन्त्य

---

[1] N सुखहृभ्यां।
[2] A ०णां अर्थो।
[3] A श्राव०।
[4] A द्रायं।
[5] A स्थाने पठं, B स्थाने पटं।
[6] A कुङ्कुमे।
[7] A प्रतिछ।
[8] B मणिवज्रे।

तत्परिणामेन सूर्य्यं तदुपरि रक्तह्रीःकारं तद्रश्मिसमाकृष्टा-मिताभतथागतं संपूज्य पापदेशनादिकं कृत्वा त्रैलोक्यं च[1] वशं विधाय रश्मीन् स्वबीजे प्रवेश्य तत्परिणामेन झटिति लोकेश्वरं सर्व्वाङ्गमहारागरक्तमेकमुखं द्विभुजं त्रिनेत्रं जटा-मकुटमण्डितं वज्राङ्कितपाशाङ्कुशहस्तं रक्तपद्मे वज्रपर्य्यङ्क-निषण्णं दिव्याभरणवस्त्र[2]विभूषितमात्मानं विचिन्त्य त्रिभु-वनमेषद्वयस्थपाशवज्रोपरिस्थित नानानिर्म्माणधारिबुद्ध-बोधिसत्त्ववज्रयोगिनीदेवादिभिरभिषेकं विभाव्य शिरस्य-मिताभं ध्यायात्। ततो हृत्सूर्य्ये ह्रीः हुँ याँ[3] इति जाप्य त्र्यक्षर[4]मन्त्रं ध्यात्वा ॐ शून्यताज्ञानवज्रस्वभावात्म-कोऽहं, ॐ वज्रात्मकाः सर्व्वधर्म्मा वज्रात्मकोऽहं इति वज्रात्मकमन्त्रद्वयं पठेत्[5]। एवमभ्यस्यतो धुनन[6]कम्पनादि-गुण उत्पद्यते। तदनु ॐ ह्रीः त्रः हाँ हारीति यक्षेश्वरी स्वाहा इति पिण्डं दद्यात्। ॐ आँ क्रोँ[7] ह्रीँ सकलगण-वीरवीरेश्वरीणां[8] परिकरै अ अ अवतर अवतर अवतरन्तु दशदिग्लोकपाला इदं बलिं गृह्ण गृह्ण हुँ स्वाहा इति बलिं दत्त्वा देवतायोगेन विहरेदिति।

॥ सरहपादकृतं ओड्डियान[9]क्रमेण त्रैलोक्यवशङ्कर-लोकेश्वरसाधनं समाप्तम् ॥

---

[1] A त्रैलोक्यवशं। [2] AB वस्त्रभू०।
[3] AN योँ, Na आः, C यौँ। [4] A अक्षर०।
[5] A जपेत्। [6] AC कम्पनादिषु नोत्पद्यते।
[7] ACNNa क्रौँ। [8] C वीरेश्वराणां।
[9] ANCNa ओड्यायन०।

[1]नमो लोकनाथाय ।

प्रथमं तावन्मन्त्री[2] मनोऽनुकूले स्थाने योगिपटं प्रकाश्य तस्याग्रतो माहेन्द्रमण्डलमध्ये कुङ्कुमेन चन्द्रमण्डलं रचयेत्[3] अनेन मन्त्रेण ॐ वज्ररेखे हुँ। जः हुँ वँ पद्मस्थहोः अनेन मन्त्रेणावाहनं कृत्वा मण्डलमध्ये त्रैलोक्यवशङ्कर-लोकेश्वरभट्टारकं पूजयेत् अनेन मन्त्रेण ॐ त्रैलोक्य-वशङ्कराय वज्रपुष्पे हुँ प्रतीच्छ स्वाहा। ॐ मुनिवज्रे मुः[4] विसर्ज्जनमन्त्रोऽयम्[5]। पश्चात् स्वहृदि आँकारं चिन्तयेत्। तं परिणम्य सूर्य्यमण्डलं निष्पद्यते। तस्योपरि शक्तिबीजं बालारुणसमप्रभं द्रष्टव्यम्। एतस्य रश्मिभिरमिताभं[6] पूजयित्वा पापदेशनादिकं कृत्वा पुनः शरीरे प्रविशन्तं एतत् सर्व्वं परिणम्य झटिति पद्मोपरिस्थं वज्रपर्य्यङ्किनं[7] विकसितत्रिनेत्रं जटामकुटधारिणं रक्तवर्णं वज्राङ्कितपाशाङ्कुशहस्तं त्रिभुवनमेषद्वये पाशबद्धवज्रो[8]परि स्थिता नाना-निर्म्माणधारिण्यो वज्रयोगिन्योऽभिषेकं प्रयच्छन्ति, तथा बोधिसत्त्वा नानाभरण[9]युक्ताः पूजां कुर्व्वन्ति, विद्या-

---

1 This *Namaskāra* is absent in all MSS except Ab.
2 मन्त्री is dropped in all MSS except Ab.
3 B रचेत्, Ab कारयेत्। 4 A मुनिः।
5 Ab मन्त्रः। 6 Ab adds तथागतं after अमिताभं।
7 ABCN ०पर्य्यङ्कं।
8 A पाशबद्धे तत्र तस्यो० NC पाशबद्धे तस्यो०।
9 AC ०संयुक्ता, N ०सुक्ता।

भरहरिहरहिरण्यगर्भनानायोगिनीगणा नृत्यवाद्यादिकं-[कुर्व्वन्ति] नानाभूतगणादिनानानरशिरःकपालमाला-वृतं तथा नानाच्छत्रचामरादिकं पश्येत्। एतादृशे समये अमिताभस्तथागतः शिरसि द्रष्टव्यः। ईदृशमात्मानं विचिन्तयेत्। पश्चान्नाभेरुपरि सूर्य्यमण्डलं रश्मिमयं विचिन्त्य तस्योपरि वामे शक्तिबीजं हृदि क्रोधबीजं आःकारस्वरभूषितं इति [1]भाव्यमन्त्रः। एतत् सर्व्वं ध्यात्वा वज्रात्मकमन्त्रोच्चारणं कृत्वा वज्रात्मकं चिन्तयेत्। ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहं इति वज्रात्मकमन्त्रः। एतच्चाभ्यासयोगेन धुननकम्पना[2]वेशनं कृत्वा अद्वैतज्ञान-मुत्पद्यते। स योगी द्विरदवत् [3]गर्ज्जति, मदिरामत्त इव पञ्चवर्णं विहरति। यदि पञ्चवर्णं न विहरति तदा तस्य देहे धुननकम्पनावेशनादिकं[4] न तिष्ठति। एवं प्रतीत्यैव[5] पञ्चवर्णं विहर्त्तव्यम्[6] तेन सिद्धिः स्यात्। सिद्धे सति परदेहे धुननकम्पनावेशनं कृत्वा रागद्वेषा-दिकं निषेधयति। यथा सिद्धिरसेन विद्धं ताम्रं कृष्णतां त्यजति तथा शरीरमेवाद्वैतरसेन विद्धं राग[द्वे]षादिकं त्यजति। [7]ह्रीः हुँ याँ जप्यमन्त्रः। ॐ [8]ह्रीः अः हाँ हारीति यक्षेश्वरी स्वाहा हारीतिमन्त्रः। ॐ आँ क्रौँ

---

1 Ab reads इति भट्टारकस्य हृदयमन्त्रः।

2 ANC ०कम्पनावेशं।

3 गर्ज्जति present only in Ab.

4 Ab देशनाद्वैतज्ञानादिकं। 5 N प्रतीत्य। 6 ANC विहर्त्तव्यं।

7 ABC ऊँ ऊँ याँ, AB क्रौँः ऊँ अं, N क्रौँ ऊँ आः।

8 ACN ॐ क्रौँ अः, Ab ॐ अः, B ॐ क्रौः अः।

ह्रीं सकलगणवीरवीरेश्वरीणां परिकरैः अ अ अवतर अवतर अवतरन्तु दशदिग्लोकपाला इदं बलिं गृह्ण गृह्ण हुं स्वाहा बलिमन्त्रः ।

॥ इति सरहपादावतारित[1]ओड्डियानविनिर्गतत्रैलोक्यवशङ्करलोकेश्वरसाधनं समाप्तम् ॥

---

37.

नमो लोकेश्वराय ।

ॐ चिटि चिनटि विक्लोलि विक्लोलि[2] अमुकं सधनपरिवारं मे वशमानय स्वाहा। पूर्व्वसेवायुतं[3] जप्ता पश्चात् साधनमारभेत्। दक्षिणोत्तरपार्श्वे ताराभृकुटीदेवीद्वयसहितं आर्य्यावलोकितेश्वरभट्टारकं रक्तवर्णं रक्तमाल्याम्बरानुलेपनं पाशाङ्कुशधनुर्बाणधरं चतुर्भुजं शृङ्गारैकरसं रक्त[4]कुसुमवताशोकतरोरधस्तादवस्थितमात्मानं विचिन्तयेत् त्रिसन्ध्यम्। [5]लवणाहुतीनां अष्टोत्तरशतं जुहुयात्। सप्ताहात् स्त्रियं पुरुषं वा वशमानयति, त्रिसप्ताहान्महापुरुषम्। लवणसहितेन मदनेन पुत्त-

---

[1] The reading ओड्डि॰ is found in Ab only.
[2] The second विक्लोलि is dropped in Ab.
[3] AC पूर्व्वसेवाश॰, Ab पूर्व्वसेवायाः अयुतं, N पूर्व्वसेवा अयुतं ।
[4] AC रक्तसकुमारिताशोक॰, N रक्तकु[सु]मार्च्चिताशोक॰ ।
[5] A लवणाहूतीनां, C लवणाहूतीनां, N लवणाह्नुतीनां ।

लिकां[1] साधयित्वा प्रतिकृतिं चतुरङ्गुलप्रमाणां कृत्वा निर्धूमे खदिराङ्गारे मन्त्रमुच्चारयन् त्रिसन्ध्यं तापयेत् यस्य नाम्ना स वशो[2] भवति। वज्रोदकभावितयवं परिजप्याष्टोत्तरशतवारं यस्य प्रदीयते[3] स भक्षितमात्रेण वशो[4] भवति।

॥ रक्तलोकेश्वरसाधनं समाप्तम् ॥

---

38.

पूर्व्वोक्तविधानेन तथैव शून्यतानन्तरं रक्तह्रीःकारज-रक्तपद्मं तन्मध्ये रक्तआःकारपरिणतमार्य्यावलोकितेश्वरं रक्तवर्णं ([5]जटामकुटधरं) अमिताभगर्भजटामकुटधरं वाम-करगृहीतरक्तपद्मं तत् च दक्षिणकरेण विकाशयन्तं विविधा-लङ्कारवस्त्रविभूषितमात्मानं निष्पाद्य[6] स्वहृदये ह्रीःकारज-रक्तपद्मदलेषु षोड़शस्वरपरिणतरूपान् शुभ्रभ्रमरान् चिन्तयेत्। ततः साध्यहृदयेऽपि पूर्व्ववत् पद्मं विचिन्त्य स्वहृदिस्थपद्मात् स्ववज्रमार्गेण भ्रमरान् निःसार्य्य ॐ भ्रमराः साध्यहृदि पद्मामृतमाकर्षय जः इति मन्त्रेण साध्यवज्रे प्रवेश्य तत्पद्मस्थामृतं भ्रमरैराकृष्य तान् पुन-

[1] AC मदेन पुत्तिकां।
[2] AC सर्व्वंशो।
[3] AC यत् प्रदीपते।
[4] ABCN वश्यगो।
[5] This जटामकुटधरं seems to be redundant.
[6] AC निर्म्माय।

रपि तद्वक्त्रेण निष्कास्य[1] स्ववज्रमार्गेण तत्रैव प्रवेश्य [illegible]तमधुबिन्दुमुज्झिरतस्तान् पश्येदिति। मन्त्रः ॐ हुं तावद् भावयेदविच्छेदं यावद् दिनानि सप्त। साध्यं च पादयोः [2]पतन्तं ध्यायादिति।

॥ लोकेश्वरस्य वश्याधिकारविधिः ॥

---

## 39.

नमो लोकनाथाय।

प्रथमं तावत् साधकः प्रातरुत्थाय सुखासने सत्त्व-पर्य्यङ्केनोपविश्य हृदये प्रथमस्वरपरिणतचन्द्रमण्डलोपरि पीतह्रीःकारं विभाव्य तन्मरीचिसमूहैर्भगवन्तं भाव्य-मानमानीय तस्मादेव बीजात् स्फारितपुष्पधूपादिभिः संपूज्य तस्य पुरतः पापदेशनादिकं विधाय मैत्र्यादिचतु-र्ब्रह्मविहारभावनां च कुर्य्यात्। तदनु सबाह्याभ्यन्तरं वस्तु शून्यस्वभावं विभाव्य ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति मन्त्रमावर्त्तयेत्। तदनन्तरं नभःप्रदेशे प्रथमस्वरेण चन्द्रमण्डलं तदुपरि पीतह्रीःकारं तेनैव रक्तपद्मं तद्बीजाधिष्ठितं तत् सर्व्वं परिणम्य भगवन्तं पीतवर्णं अर्द्धचन्द्राङ्कितजटामकुटिनं अमिताभोपलक्षित-शिरःप्रदेशं रक्तपद्मोपरिस्थितं कृष्णसारहरिणचर्म्माणि

---

[1] C निस्सास्य, N निष्काश्य। [2] A पठतं तं।

[3] AC स्थापित०।

वज्रपर्य्यङ्किनं समाधिमुद्रोपरि[1] नानारत्नपरिपूर्णकपाल-धारिणं एणेयचर्म्मकृतयज्ञोपवीतिनं[2] व्याघ्रचर्म्माम्बरधरं[3] निराभरणं नीलकण्ठं नीलगुलिकाविशिष्टकण्ठं पार्श्वद्वये परस्पराभिसम्बद्धपुच्छसमणिफणाविशिष्टभगवदवलोकन-[4]परोर्द्धमुखकृष्णसर्पद्वयोपलक्षितमात्मानमेवं विभावयेत्। ततो मन्त्रं जपेत्। तत्रायं मन्त्रः ॐ स्फुलिङ्गाट्ट-हास क्षः।

॥ इत्यपरिमितानुशंसं नीलकण्ठार्य्यावलोकितेश्वर-साधनं समाप्तम् ॥

---

40.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरमाकाशे रेफो-द्भवसूर्य्यस्थहुँकारजविश्ववज्रपरिणतं वज्रप्राकारं वज्रपञ्जरं च विभाव्य तन्मध्ये घोरश्मशानं तस्य च मध्ये रक्ताष्टदल-कमलं तन्मध्ये च नीलह्रीःकारसम्भवं भगवन्तमार्य्याव-लोकितेश्वरं कृष्णवर्णं प्रत्यालीढस्थं सूर्य्यमण्डलस्थितं पञ्चमुखं त्रिनेत्रं द्वादशभुजं सितरक्तदक्षिणमुखद्वयं तथा-पीतहरितवाममुखद्वयं दक्षिणभुजैः डमरुखट्वाङ्गाङ्कुश-पाशवज्रशरधरं वामभुजैस्तर्ज्जनीकपालरक्तकमलमणि-चक्रचापधरं दंष्ट्राकरालसकलवदनं षण्मुद्रोपेतं साट्ट-

---

[1] A ०मुद्रां
[2] B ०वीतं।
[3] AC ०चर्म्माम्बरं।
[4] A ०परार्द्ध०।

[1]मुण्डमालालङ्कृतशरीरं नग्नं सर्व्वाङ्गसुन्दरमात्मानं झटिति प्रत्याकलय्य हृच्चन्द्रे ह्रीःकारमध्यवर्त्ती ॐ आः हुँ मुनिवरवज्रे ह्रीँ [2]हुँ जः इति मन्त्रमक्षसूत्राकारं जपेत्। पञ्चानन्तर्य्यकारिणोऽपि लक्षजापात् सिध्यति।

॥ मायाजालक्रमार्य्यावलोकितेश्वरसाधनम् ॥

---

41.

नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ चल चल चिलि चिलि चुलु चुलु [3]कुलु कुलु मुलु मुलु हुँ हुँ हुँ हुँ फट् फट् फट् फट् पद्म-हस्ते स्वाहा। दिने दिने पञ्च वारान् त्रिसन्ध्यमुच्चारयेत्। गर्द्दभोऽपि ग्रन्थशतत्रयं गृह्णाति। पद्महस्ता धारणीयम्। नम आर्य्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय तद्यथा ॐ धरणीधरे[4] धराधरे भद्रे सुभद्रे स्वाहा। सोमग्रहे सूर्य्यग्रहे वा पञ्चगव्येन प्रक्षाल्य अष्टोत्तरशतमाषान् मुखे प्रक्षिप्य तावज्जपेत् यावन्न मुक्तो भवति। लोकनाथस्य पटप्रतिमाया अग्रतो भूत्वा[6] घृतेन [7]प्रदीपं प्रज्वाल्य चन्दनेन अपतितगोमयेन वा मण्डलकं कृत्वा शुचिसाचार[8]मुत्तरसाधकं द्वारि स्थापयित्वा स्वयं

---

[1] A मुण्डा,॰ N सार्द्धमुण्ड॰। [2] A ऊँ जः।
[3] A झल झल, C झलु झलु। [4] धराधरे omitted in C.
[5] AC ॰घृतवारान्। [6] AC भूतो।
[7] AC प्रदीपोज्वाल्य। [8] A शुचिमा॰ N शुरिसा॰।

चन्द्रसूर्य्यमपश्यन् पूर्व्वसेवायुतं जप्त्वा ब्रह्मचर्य्येण साधयेत्। अश्रुतान्यपि शास्त्राणि वेत्ति तत्क्षणात्।

श्रुतानि न क्षयं यान्ति धारणीबलभावतः।
यस्य मूर्ध्नि प्रदीयन्ते चूर्णीकृत्य च पादयोः॥
स सर्व्वो[1] वशतां याति यावच्चन्द्रदिवाकरौ।
रोगास्तस्य न जायन्ते डाकिनीग्रहतस्कराः॥
लेपनात् सर्व्वव्याधीनां शान्तिर्भवति नित्यशः।
ह्रीःकारबीजसम्भूतं लोकनाथं विभाव्य च॥
द्विभुजं वरदं सव्ये वामे पद्मधरं सितम्।
जटान्तःस्थामिताभं च विश्वाब्जचन्द्रसंस्थितम्।
वज्रपर्य्यङ्किनं नाथं भावयेद् विधिवद् बुधः॥

॥ सोपचारमाष[2]मुखा धारणी समाप्ता॥

42.

[3]ॐ पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं ह्रीः-कारोद्भवं सुगतिसन्दर्शनलोकेश्वरभट्टारकं शुक्लवर्णं षड्-भुजं वरदाभयाक्षमालाधरं दक्षिणे वामे पद्मकुण्डी-त्रिदण्डी[धरं] च रत्नाभरणभूषितं व्रतसूत्रधारिणं जटामुकुटं पद्मोपरि चन्द्रमण्डलस्थितं सौम्यरूपं भावयेत्। तस्य जापमन्त्रोऽयं ॐ ह्रीः स्वाहा।

॥ इति सुगतिसन्दर्शनलोकेश्वरसाधनम्॥

---

[1] A सर्व्वविघ्न॰, C सर्व्व। [2] C मापथ॰।
[3] This *Sādhana* and the following are found only in N.

43.

इति शून्यताभावनानन्तरं श्वेतह्रीः‌कारोद्भवं जटा-मुकुटिनं षड्भुजं प्रथमभुजद्वयेन वरदौ द्वितीयभुजद्वयेन रत्नपुस्तकौ तृतीयभुजद्वयेन अक्षमालाचिद्‌दण्डकं सर्व्वा-लङ्कारभूषितं व्रत(अक्ष)सूत्रधारिणं सौम्यमूर्त्तिं पद्मोपरि चन्द्रमण्डले स्थितं श्वेतवर्णं विभावयेत् । मन्त्रश्च तथैव ।

॥ प्रेतसन्तर्पितलोकेश्वरसाधनम् ॥

---

44.

नमः स्थिरचक्राय ।

श्रीमद्गौर्गरिमा[1] निरस्तसकलभ्रान्तिप्रतानोज्ज्वलं
प्रोद्यद्गौरगभस्तिबिम्बविमलं बुद्धं च[2] बालाकृतिम् ।
बिभ्राणं करवालमुन्नतरुचिं प्रज्ञां च नत्वादरात्
आत्मानुस्मर[3]णाय लिख्यत इदं तच्चक्रतत्त्वं मया ॥
[4]दिक्ष्वनन्तान् सुसञ्चिन्त्य सर्व्वज्ञान्[5] ज्ञानसागरान् ।
सन्त्रस्तानेक[6]सत्त्वौघपरित्राणसमुद्यतान् ॥

[1] A श्रीमज्झिन्तरि॰, C श्रीमद्गौरिमा॰ ।
[2] ACNAb वृद्धश्च ।
[3] Ab ॰णाप्रलि॰ ।
[4] AC निकृष्वानन्ता, Ab दिद्यनन्ता ।
[5] ACNAb सर्व्वज्ञज्ञान॰ ।
[6] A ॰सत्त्वोद्य॰, C ॰सत्त्वोघ॰, N ॰सत्त्वोत्थ॰ ।

तेभ्यो नानाविधां पूजां चेत[1]श्चिन्तामणिश्रुताम् ।
कृत्वा लोकं परित्रातुं[2] प्रयच्छेदात्मविग्रहम् ॥

ततः शुभाभिवृद्धये कुर्य्यादिदं मन्त्री—

सर्व्वाणि पापानि दिशामि भीतः
प्रीत्यानुमोदे जगतः शुभानि ।
रत्नत्रयं वै[3] शरणं प्रयामि
संबुद्ध[4]बोधौ [5]विदधामि चेतः ॥

पश्चात् पुनरिदमारभेत—

ग्राह्यग्राहकहानितो जगदिदं स्वप्नेन्द्रजालोपमं
शुद्धं च प्रकृतिप्रभास्वरतया व्योमोपमामाश्रितम् ।
आत्मानं च मनोविलासकलितं निश्चित्य संक्षेपतो
मुंकारं पुनरंशुजालजटिलं तत्सम्भवं भावयेत् ॥

ततः परावृत्तमखण्ड[6]मण्डलं
हिमार्च्चिषः कुङ्कुमपङ्कपिञ्जरम् ।
स्वरोज्ज्वलन्मालिकया समाकुलं
विचिन्तयेद् दीधितिदीप्तदिङ्मुखम् ॥

ततः पुनर्मुंकृतिबीजसम्भवं
विभावयेद् रागमरीचिमण्डलम् ।
कखादिवर्णैरखिलं[7] समावृतं[8]
तदूर्द्ध्वमुद्दीधितिकुङ्कुमारुणम् ॥

---

[1] Ab चेतश्चि० ।
[2] ACN परित्रायं ।
[3] ACAb मे ।
[4] AC ०बोधिं ।
[5] AC दधामि चेतः, Ab विदधामि चित्तं ।
[6] A ०मखण्डलं ।
[7] ANCAb ०रखिलै
[8] Ab समाहृतं ।

तस्मिंश्च मुःकारमुदीक्ष्य मन्त्री
तत्सम्भवं भास्वर[1]पद्मरम्यम् ।
इन्दीवरं [2]विस्फुरदंशुजालं
विचिन्तयेन्मुःकृतिबीजमध्यम् ॥

तत्सम्भूतमुदंशुबुद्धविसरैरापूरयन्तं जगत्
चन्द्रस्थं भ्रमरान्धभास्वर[3]तरैरुद्भास्वरं[4] चीरकैः ।
धुन्वन्तं निबिडान्ध[5]कारपटलं रक्तांशुजालैरलं
सर्व्वाकारवरप्रदाननिपुणं श्रीमञ्जि[6]रामीश्वरम् ॥

लालित्य[7]शृङ्गाररसाभिरामं
व्याजृम्भ[8]माणाम्बुरुहास्यलक्ष्मीम् ।
वीरं[9] कुमाराभरणं दधानं
ध्यायात् पदं तस्य समीहमानः ॥

एवं विचिन्त्य वागीशं मुःकारं भावयेद् हृदि ।
ज्वलन्तं रक्तवर्णाभं निर्गच्छद्दीप्तिमण्डलम् ॥

तस्मात् सञ्जातमष्टारचक्रं हार्द्दतमोपहम् ।
पूरयेद् रश्मिभिर्विश्वं[10] पश्येत् ज्ञानमयं प्रभुम् ॥

निर्म्मितं बालतिग्माचौं[11] रोचिषां सञ्चयैरिव ।
आकीर्णमक्षरै[12] रक्तै रक्तपुष्पोत्करैरिव ॥

---

[1] A ॰पुट॰ । [2] A विस्फुरणा॰ ।
[3] AC ॰भासुर॰ । [4] ॰द्भासुर॰ ।
[5] A निविड़ार्थ॰ । [6] ANb श्रीमन्नाग॰ ।
[7] A रालिभ्य॰, N रालित्य॰ ।
[8] A व्यात्तुम्भ॰, N व्यज्यन्त॰ C व्यज्जम्भ॰ ।
[9] B बीजं । [10] A ॰श्मिभिश्च ।
[11] A तिग्मार्च्चावाविषां, N तिग्मार्च्चारोचिषां, Ab तिग्मार्च्चौरोचिषां ।
[12] B आकीर्ण्यं चान्त॰ ।

तेनैव[1] तावदक्षराणि चिन्तयेत् चक्रस्यारेषु पूर्वदक्षिण-पश्चिमोत्तरेषु यथाक्रमं अरपचनान्[2] नाभौ मकारं आग्नेयनैरृत्यवायव्यऐशानेषु च पूर्ववन्निष्प्रपञ्चान् तदे-वान्तरान्तरे अकारादीन् स्वरौघान् बहिस्तु ककारा-दीनि व्यञ्जनानि इति निश्चलं निश्चित्य पश्चात्तस्य वर्णसंहतेश्च रश्मिसमूहं हार्दं तमो[3]मण्डलमपनयन्तं[4] स्वशरीररोमकूपविवरेभ्यो निःसृत्य दशदिग्लोकधातुव्यव-स्थिततथागत[5]हृदयज्ञानामृतैः सह[6] समरसीभूय तेभ्यो निर्गत्य तैरेव[7] रोमविवरैः प्रविश्य स्वशरीरमवभासयन्तं चिरं ध्यायात्। स्थिरचित्तस्य पश्चात् स्फुरणसंहरण-न्यायेन तावद् भावयेत् यावत् प्रत्यक्षमाभाति।

मञ्जुश्रियो द्वैत[8]दशां दधानैः
[9]सहैव वर्णैः[10]परिरोचमानैः।
चक्रे स्फुटाभत्वमुपागतेऽस्मिन्
अहर्निशं ध्यानकृताभियोगात्॥

अदृष्टपूर्व्वेष्वपि वाङ्मयेषु
कलाकलापेष्वखिलेषु तस्य।
[11]मतिर्यथेष्टं मणिदीप[12]दीप्ता
प्रवर्त्तते हार्दतमो नुदन्ती॥

[1] AC तेनैव°।
[2] AC आरपचान, Ab अरपचन्, N अरपचान्।
[3] Ab तमोह°।
[4] AC °नयकं।
[5] °तथागत° dropped in Ab.
[6] A सहश्च सरसी°।
[7] A तैनेम्नवाम°।
[8] AC °दश्यन्दधाने, N दशान्दधाने।
[9] A सहं ववर्णैः।
[10] AN वरिरोच°।
[11] Ab यति°।
[12] AC °दीप्त°।

[illegible] चक्रं स्तिमीक्षमानैः
कुतूहलेनापि च पक्षमेकम् ।
परीक्ष्यमाणं सुगतस्वरूपं
प्रबोधयिष्यत्यचिराद् भवेषु[1] ॥
यदीह किमपि पुण्यं चक्रविन्यासजातं
[2]अमनसिजजनानां दीप्यतां[3] तेन चक्रम् ।
नवतरणि[4]रिवास्तमोहसान्द्रान्धकारं
[5]व्रजतु च जनतेयं वाग्विभोः श्रीविलासम् ॥

॥ स्थिरचक्रसाधनं समाप्तमिति[6] ॥

---

45.

स्थिरचक्रमिदं श्रीमन्मञ्जुवज्रस्य तायिनः ।
तं नत्वा बालबोधाय लिख्यते विशदैः पदैः ॥

सुखासनोपविष्टो योगी गुरुबुद्धबोधिसत्त्वानाकाश-[7]स्थितान् विचिन्त्य तेभ्यो मनोमयीं नानाविधां पूजां विधाय पापदेशनादिकं कुर्यात् । ततो विश्वं चित्तमात्रं[8]

---

[1] N ०द्भवत्सु  [2] N मम मनसि ।

[3] A दीव्यन्तां

[4] ANC ०मिवास्यां, Ab ०मिवास्यं, B ०विरास्यन् ।

[5] AC व्रजतु वचन० ।

[6] After this Colophon B gives the date in the following words सं २८५ पौष्यमासेति, *i.e.* in the month of Pauṣa in the year 285 (N.S.) which corresponds to A.D. 1165 and not 1167 as Bendall puts it.

[7] A ०सत्त्वानागं ।  [8] A ०मात्रौ ।

ग्राह्यग्राहक[1]विवर्ज्जितं स्वप्नवत् प्रतिबिम्बवदात्मानं निश्चित्य कुङ्कुमारुणं मुःकारजातं[2] स्फुरदकारादिस्वर[3]रश्मिरक्तं चक्रं पश्येत्। तस्योपरि मुःकारजं भास्वत्ककारादिप्रभारक्तं शशाङ्कमण्डलं भावयेत्। तस्योपरि मुःकारजं[4] स्फुरदमल-मिन्दीवरं मुःकाराधिष्ठितकिञ्जल्कं विचिन्त्य [5]तत्परिणतं कुङ्कुमाभं पञ्च[6]चीरं कुमाराभरणं शृङ्गारैकरसं खड्गपुस्तक-धरं वागीश्वरमात्मानं चन्द्रस्थं ध्यायात्। तस्य हृदये मुः-कारजं स्थिरमष्टारचक्रं रश्मिमयं ज्वलदकारादिमालिका[7]-कलितं बहिः स्फुरत्ककारादिमालिको[8]पवीतम्। तस्य च नाभौ अकारं पूर्व्वारे रेफं दक्षिणारे पकारं पश्चिमारे चकारं उत्तरारे नकारं आग्नेयादिकोणेषु च निष्प्र-पञ्चान[9]क्षरान् कुङ्कुमाभान् विचिन्त्य तच्चक्ररश्मिसमूहं [10]अन्तःशरीरमवभास्य प्रतिरोमकूपविवरैर्न्निःसृत्य दशदि-ग्लोकधातुमवभास्य पुनस्तैरेव रोमकूपविवरैः प्रविश्यान्तः-शरीरमवभासयन्तं चिरं विचिन्तयेत्। ॐ अरपचन मुः इति जपमन्त्रः।

साधनं स्थिरचक्रस्य कृत्वा [11]पुण्यमुपार्ज्जितम्।
तेन भूयात् जगत् सर्व्वं मञ्जुवज्रसमप्रभम्॥

॥ मुक्तकेन स्थिरचक्रसाधनम्॥

---

[1] ANC ०वर्ज्जितं।
[2] A ०कारं, BN कारजं, C कारज०।
[3] A ०रश्मिचन्द्रं, N ०रश्मिचक्रं।
[4] A मुकारं, C अःकारजं।
[5] Ab तत्सर्व्वं०।
[6] B reads ०चीराभरणशृङ्गा०।
[7] B ०कलिकं।
[8] B मालिकालिको०।
[9] A ०कुरान्।
[10] AC मन्त्वःशरीरं।
[11] ACN यत्पुण्यमर्ज्जितं।

## 46.

नमः श्रीवादिराजमञ्जुघोषाय।

प्रथमं तावत् मुखप्रक्षालनादिकं कृत्वा [1]मृदुसुखासनोपविष्टः स्वहृदि पँकारजपद्मस्योपरि अकारेण चन्द्रमण्डलं तस्योपरि मँकाररश्मिनाकृष्याकनिष्ठभुवनवर्त्ति अनादिसंसिद्धमञ्जुश्रीकुमारं पुरतो विभाव्य ततो बाह्यपूजां पुष्पधूपादिकां कृत्वा अभिवन्द्य च पश्चात् पापदेशनां पुण्यानुमोदनां पुण्यपरिणामनां त्रिशरणगमनं बोधिचित्तोत्पादं अध्येषणां आत्मभावनिर्य्यातनां कृत्वा चतुर्ब्रह्मविहारान् भावयेत्। पुनः सकलवस्तुतत्त्वसारसंग्राहकभूतां [2]शून्यतां विचिन्तयेत् [3] ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति। पुनः प्रणिधानमनुस्मृत्य प्रतिभासमात्रं स्वकायं व्यवलोक्य स्वहृदि पद्मचन्द्रस्योपरि मँकारबीजरश्मिना सर्व्वतथागतप्रवेशेनात्मानं मञ्जुश्रीरूपं विभावयेत्। पीतवर्णं व्याख्यानमुद्राधरं रत्नाभरणं रत्नमुकुटिनं वामेनोत्पलं सिंहासनस्थं अक्षोभ्याक्रान्तमौलिनं चन्द्रासनं[4] चन्द्रप्रभं भावयेदात्मानम्। ततो दक्षिणपार्श्वे सुँकारबीजसम्भवं सुधनकुमारं नानारत्नाभरणोज्ज्वलं [5]रत्नमुकुटिनं सर्व्वधर्म्मैकपुस्तककक्षानिक्षिप्तं संपुटाञ्जलिपूर्व्वकं तिष्ठेत्। वामपार्श्वे यमारिः कृष्णवर्णः हुँकारबीजोद्भवः विकृताननः मुद्गरहस्तः पिङ्गोर्द्ध्वकेशः

---

[1] A सुखसुखा०।  [2] शून्यतां is dropped in AC.
[3] N adds कुङ्कुमाभासं चिरं विचिन्तयेत् after विचिन्तयेत्।
[4] A चक्रासनं।  [5] A संरत्न०।

नानाभरणभूषितः। ततो दक्षिणोत्तरपार्श्वे चन्द्रमा-सूर्यप्रभौ पूर्व्वादिदिग्भागे वैरोचनरत्नसम्भवामितामोघसिद्धयः, आग्नेयादिकोणेषु लोचना-मामकी-पाण्डरा-ताराश्चेति। ततो ज्ञानसत्त्वप्रवेशेन चक्षुराद्यधिष्ठानं कायवाक्चित्ताधिष्ठानाभिषेकपूजास्तुतिं च कृत्वा शिरसि अक्षोभ्यमुद्रणं [1]पश्चाद् ध्यानवान्मन्त्रमाजपेत्। तत्रायं मन्त्रः ॐ धर्म्मधातुवागीश्वर मुः स्वाहा।

॥ मञ्जुश्रीसाधनम् ॥

47.

सत्सौख्यं परमं समस्तजगतामिच्छोरनिच्छोः सुखं[2]
स्वीयं स्वल्पमपि स्वभावमहतः सम्यग् गुरोराज्ञया।
प्रज्ञापङ्कजिनीविकाशकरणे दक्षस्य[3] संलिख्यते
मन्दस्वल्पधिया मया भगवतो मञ्जुश्रियः साधनम्॥

श्रद्धां शुभस्य जननीं समुपाश्रितेन[4]
त्यक्ता च येन सकलाकुशलक्रियापि।
तेनैव शुद्धमनसा गुरुतो निशम्य
ध्यानादिकं भगवतः सततं विधेयम्॥

आदौ मनोभिरुचिते निचिते[5] सुगन्धि-
पुष्पादिभिर्ब्बहुविधैर्विजनप्रदेशे।

---

[1] A पश्चाद्धार०।
[2] A इच्छोः सुखं।
[3] AC दक्षिणस्य।
[4] A ०पासितेन।
[5] AC निचिते।

[illegible]कवर्जिते च
निर्वर्त्य[1] कृत्यमपरं च सुखं निषद्य ॥
यत्नतश्चञ्चलं चित्तमेकाग्रीकृत्य निर्भरम् ।
परार्थमाशये कृत्वा भावयेत् तदनन्तरम् ॥

सत्त्वेष्वेक[2]तनुजतोषसमतासंलक्षितां मित्रतां
दुःखादुःखनिदानतोऽपि जगतामभ्युद्दिधीर्षां[3] दयाम् ।
चित्त[4]प्रीतिविशेषलक्षणवतीं सम्मोदिकामन्ततोऽ-
सद्यासङ्गनिवृत्तरूपसहितां ध्यायादुपेक्षां बुधः ॥

तदनु मनसि कृत्वा यावदिच्छाप्रकीर्णं
विमलरुचिहिमार्चिर्मण्डलं शुक्लवर्णम् ।
तदुपरि सुकुमारं निर्म्मलस्वर्ण[5]वर्णं
कमल[6]ममलपत्रं भावयेदष्टपत्रम् ॥

चन्द्राम्भोरुहयोरुदंशुविसरव्यालोलयोरुत्तमा-
मूर्द्धं वर्द्धनशीलरश्मिकुहरं स्वर्णाकृतिं मँकृतिम् ।
पूर्व्वाभ्यां पिहितं हिताय जगतां मन्त्री चिरं भावयेत्
अत्यन्तोत्तम[7]मञ्जुवज्रपदवीमिच्छन् मनुष्योत्तमः ॥

पश्चाज्जातिविपत्तिबाधकजराजाड्यादि[8]दुःखाकुलं
चन्द्राम्भोरुहयुग्ममँकृतिभवैश्छन्नी[9]कृतं रश्मिभिः ।
विश्वं वीक्ष्य [10]निरीक्ष्य चोत्तमसुखे सर्व्वैः समङ्गीकृतं
बुद्धैस्तुल्यमतोऽपि पूर्णमनसं स्वात्मानमालोकयेत् ॥

---

1 A निवृत्य, C निर्धन्य ।
2 A सत्त्वेवक० ।
3 A अभ्युदिधाया०, C अभ्युद्दिधार्षा० ।
4 A विभु० ।
5 AC निर्म्मर स्वर्ण ।
6 AC कमलपत्रं ।
7 A अत्यन्तोकम० ।
8 AC जापादि० ।
9 C ०श्छमी० ।
10 निरीक्ष्य dropped in A.

पश्चाद् दिक्षु दशस्ववस्थिततनूनानीय तै रश्मिभिः
सर्व्वानेव गुरूंस्तथैव सुगतान् श्रीबोधिसत्त्वानपि ।
कृत्वा तान् पुरतो मनोरथमयं निष्पाद्य पूजाविधिं
नानापुष्पसुगन्धिधूपवि[1]विधाकारेण संपूजयेत् ॥
पापादेरपि देशनादिपुरतस्तेषां विदध्यात् ततः
ताने[2] वांशुभिरेकतामुपगतान रोमावलीनां बिलैः ।
पुञ्जाकारतया प्रविश्य हृदये दृष्ट्वा ततस्तद्भवं
ध्यायन् मोहमहाद्रिपाटन[4]पटुं श्रीमञ्जुवज्रं विभुम् ॥
स्वच्छं षोड़शवत्सराकृतिधरं शार्द्दूलपृष्ठस्थितं
व्याख्याव्याकुलपाणिपद्मयुगलं वामाङ्कपर्य्यङ्किनम् ।
दीर्घं नापि न चापि खर्व्वमसमं सौन्दर्य्यराश्याश्रयं
रत्नस्वर्णमणिप्रकारविविधालङ्कारमालाकुलम् ॥
नासत्यं नाप्यसत्यं मुकुरतलमिव स्पष्टबिम्बायमानं
ध्यात्वा वीरं[5] कुमारं सकलजन[6]परित्राणदं [7]वादिनाथम् ।
पश्चादात्मानमेव व्यपगतकलुषं मञ्जुवज्रस्य मूर्त्त्या
ध्यायेद् दीर्घं न यावद् भवति भगवता तुल्यदेहो नौषी ॥
तान्तं [8]रान्तं तथा सान्तं व्यञ्जनक्रमसंहितम् ।
ध्यानात् खिन्नो जपेन्मन्त्रं ओकारं[9] सानुनासिकम् ॥
अपरमिह विशेषं सद्गुरोरेव वाचा[10]
विमलममलबुद्धेः प्रग्रहीष्यन्ति सन्तः ।

---

[1] A सुगन्धिभिर्वि० ।
[2] A स्थाने ।
[3] AC लीराश्विनैः ।
[4] A ०पुटं ।
[5] AC चिरं ।
[6] AC ०परित्राणं ।
[7] AC देवादिनाथं ।
[8] AN नान्तं ।
[9] A सकारं, C सेकारं, N मेकारं ।
[10] C वाचो ।

प्रवरगुरुकृताम्नो ध्यानमन्त्रक्रियायाः
नहि सकलविशेषख्यापनेऽहं समर्थः ॥

मञ्जुश्रियो यदि कुतूहलचेतसापि
संराधनं भगवतः सततं विधत्ते ।
आराध्य सद्गुरुपदं मतिमांस्तथापि
जाड्यान्धकारनिकरं नियतं भिनत्ति[1] ॥

श्रीमन्मञ्जुकुमारसाधनमिदं सम्यग् गुरोराज्ञया
कृत्वा मन्दधिया मया यदमितं[2] पुण्यं समासादितम् ।
तेनायासमपास्य सत्वरमयं श्रीमञ्जुवज्रोपमः
श्रीचिन्तामणिकल्पवृक्षसदृशोऽप्यास्तां समस्तो जनः ॥

॥ श्रीमद्वादिराट्साधनं समाप्तम् ।
। कृतिरियं पण्डितश्रीचिन्तामणिदत्तस्येति ॥

---

48.

नमो मञ्जुनाथाय ।

सत्कुङ्कुमारुणकुमाररूपलक्ष्मीं
संबुद्धरश्मि[3] निहतामितमोहजालाम् ।
पारीन्द्र[4]बद्धललितासनमन्त्रधर्म्म-
व्याख्याकरं नमत कामदवादिराजम् ॥

प्रथमं प्रातरुत्थाय पँ विश्वपद्मे तु[5] हृदि ।
अं-चन्द्रमण्डलस्योर्द्धं ह्रीँकारं कुङ्कुमारुणम् ॥

---

[1] A छिनत्ति ।
[2] AC पदमितं ।
[3] A °निहित° ।
[4] A यानीन्द्, C धारीन्द् ।
[5] A ग्रु, N त ।

दृष्ट्वा वदनशौचा[1]दिं कृत्वा ध्यानालये शुचौ ।
सुखासनं च संविश्य मन्त्रं बुद्धगुणाकरम् ॥
मैत्रीं सत्पुत्रसम्प्रीतिसहस्रगुणितां जने ।
दुःखहेतोर्दुःखाच्च कृपामुद्धर्त्तु[2]कामनाम् ॥
नित्यं सद्गुणसंयोजनेच्छां प्रमुदितां तथा ।
निजकार्य्यमनालोच्योपेक्षामन्यार्थकारिताम् ॥
ध्यात्वा [3]मन्त्री स्फुरद्रश्मि[4]व्यूहेनानीय तान् जिनान् ।
तैर्नभः पूरितं दृष्ट्वा कृत्वा पूजां मनोमयीम् ॥
अभ्यङ्गोद्वर्त्तनस्ना[5]ननानालङ्कारकारिणः ।
स्फुरत्पूजौघसन्मेघान् [6]विश्वक् संस्फार्य्य देवताम् ॥
प्रणम्य निर्म्मितैः कायैरसंख्येयैः पृथक् पृथक् ।
रागविद्वेषसम्मोहैस्त्रिविधं कायमानसम् ॥
संवेगाद् देशयेत् पापं कृतकारितमोदितम् ।
आयत्यां संवरं सत्त्वैः सार्द्धं कुर्य्यात् पुनः पुनः ॥
संबुद्धमञ्जुघोषाद्यैर्दानादिजनितं शुभम् ।
संमोद्याध्येष्य संयाच्य चिरं सद्धर्म्मदेशनाम् ॥
त्रिरत्नशरणं गत्वा बोधिचित्तं [8]सन्मार्गकम् ।
आश्रित्य ॐ शून्यताज्ञान[9]वज्रात्मकोऽहम् ॥

---

[1] N °दिकं, AC दि । [2] A °मुद्धंन्त, N °मुद्धर्त्तुं ।
[3] मन्त्री dropped in AC.
[4] A reads °फणानां यतान् जातानु ।
[5] A नभानालच्चर° ।
[6] A विश्वं संस्थार्य्य देवतीं, C विश्वकास्फार्य्य देवतीं, N विश्वक् संस्फार्य्य देवतीं ।
[7] A °घ्ययात्याय ।
[8] A सन्मार्ज्जकं । [9] AC वज्रस्वभावात्मको° ।

ततो विश्वपद्मस्थं मँकारेन्दूर्द्ध्वसंस्थितम् ।
स्फुरत्पिण्डाक्षरं दृष्ट्वा कृत्वा मञ्जुवरं जगत् ॥
प्रविश्याकृष्य सन्मन्त्री वादिराजं विभावयेत् ।
काश्मीरारुणसत्कायमायानिर्ज्जितमन्मथम् ॥
सिंहसिंहासनाक्रान्तं निर्भ्रान्तं ललितासनम् ।
वामप्रकोष्ठपूर्व्वेषु नीलेन्दीवरधारिणम् ॥
संबुद्धगुणसन्दोहं रत्नालङ्कारसोज्ज्वलम् ।
निर्य्यद्रश्मिस्फुरद्बुद्धसन्दोहालोकमालिनम् ॥
धर्म्मचक्रमहामुद्रानिबद्धकरपङ्कजम् ।
तद्वदिन्दीवरे तादृक् विश्व[2]कृन्मन्त्ररश्मिना ॥
समानीय परं नाथं कूटागारादिभिः समम्[3] ।
सदृशत्वं समा[4]पाद्य संश्राव्य समयं त्रिधा ।
समाकृष्य प्रवेश्याथ बुद्धं सम्यक् वशं नयेत् ॥

ॐ वज्रसत्त्व समयदृश्यहोः समयस्त्वं समयोऽहं समयस्त्वमहं जः हुँ वँ होः । ॐ कायाधिष्ठानं आः वागधिष्ठानं हुँ चित्ताधिष्ठानं । उत्पलमुद्रया पिण्डाक्षरेण ज्ञानाधिष्ठानं च कृत्वा रश्मिसञ्चोदितसंबुद्धकायनिर्गत-देवताकारावर्ज्जित[5]कुम्भाम्बुज्ञानवज्रशिरा भवेत् ।

पूजितो दशदिग्बुद्धैः [6]बुद्धपूजापरायणः ।
सम्भूयोद्भावयेद् भव्यो भवसंसिद्धिशुद्धये ॥

---

[1] A ०निष्ठथं, N ०निस्तब्धं ।
[2] AC ०कृत् ।
[3] AC स्वयं ।
[4] A ०साद्य ।
[5] A कुम्भाव, N कुम्भो अवु० ।
[6] A omits बुद्धपूजापरायणः ... प्रकुर्व्वन्तं ।

भूयो विभाव्य संप्राप्य प्रश्रब्धिं कायचित्तयोः ।
हारदोलक्रमेणाथ मन्त्रजापं समारभेत् ॥

विश्वमशेषगुणोदधिं कृत्वा प्रवेशादि प्रकुर्व्वन्तं [1]विभावयन्
ॐ आः हुँ इत्यानीय क्षमापयेत् ।

स्वयं मञ्जुवरो भूत्वा जगत् पश्यंश्च तन्मयम् ।
यच्च यच्च युज्यते कर्म्म सत्त्वार्थे[2] च तथा न्यसेत् ॥

रत्नत्रयप्रसन्नानां शिष्याणां स्मृतये कृतम् ।
साधनं वादिराजस्य स्याद् ध्रुवं लोकसिद्धये ॥

सर्व्वान् गुरुबुद्धबोधिसत्त्वान् इष्टदेवतामन्तर्भाव्य तदुद्दिश्य मण्डलकमारभेत । ॐ ह्रीः स्वाहा इति हस्तादिप्रक्षालनाचमनमन्त्रः । ॐ हुं आसनाधिष्ठानमन्त्रः । ॐ वज्रभूमे हुँ भूमिपरिग्रहमन्त्रः । ॐ सर्व्वविघ्नानुत्सारय हुँ स्वाहा गोमयादि[4]पानीयमन्त्रः । ततः सम्मार्ज्जननिष्पन्ने ॐ वज्ररेखे हुँ इति रेखाधिष्ठानमन्त्रः । पुनः पुष्पैकं मण्डलके दत्त्वा ॐ सुरेखे सर्व्वतथागता अधितिष्ठन्तु स्वाहा इति पठित्वा हस्तं प्रक्षालयेत् । तदनु पुष्पैकं गृहीत्वा ॐ मणिधरि वज्रिणि महाप्रतिसरे रक्ष रक्ष माँ हुँ फट् स्वाहा इति स्वशिरोदेशे पुष्पं क्षिपन्नात्मरक्षां कुर्य्यात् । पुनः ॐ आः हुँ इत्यात्मरक्षादिमन्त्रः । तन्मण्डलं विश्वपद्मरूपेणालम्ब्य तदुपरि चन्द्रं तदुपरि कुङ्कुमारुणं भगवद्बीजं तद्रश्मिसमाकृष्टमनादिसंसिद्धं भगवन्तं प्रदीपसंक्रमण[5]न्यायेनाकृष्य तत्रैव

---

[1] A भावयेत् । [2] A पुण्यस्य ।
[3] A ०ताया मन्त्र भाव्य, N ०ताया मन्त्रं भाव्य ।
[4] A गामादि० । [5] A ०न्यायेन ।

च प्रवेश्य भगवन्तं निष्पादयेत्। ॐ मञ्जुघोषाय वज्रपुष्पे हुँ, ॐ अक्षोभ्याय वज्रपुष्पे हुँ, ॐ वैरोचनाय वज्रपुष्पे हुँ, रत्नसम्भवामिताभामोघसिद्धयः, लोचनामामकीपाण्डरातारा:। पूर्व्ववत् पुष्पधूपदीपनैवेद्यसुगन्धवस्त्र[1]समारम्भेण [2]अधिष्ठानं दातव्यम्। वन्दनापापदेशनापुण्यानुमोदनां कृत्वा मन्त्रं जपेत्। ततो विसर्ज्जयेत् ॐ वज्र मुः। ॐ अकारो मुखं सर्व्वधर्म्माणामाद्यमनुत्पन्नत्वात्। ॐ आः हुँ फट् स्वाहा इति सार्व्व[3]भौतिकबलिमन्त्रः। ॐ हारीत्यै महायक्षिण्यै हर हर सर्व्वपापानि मे क्षीँ सर्व्वयक्षिणि प्रवेशनि स्वाहा हारीतीमन्त्रः। ॐ अग्रपिण्डासनेभ्यः स्वाहा अग्रपिण्डमन्त्रः। ॐ उत्सृष्टपिण्डासनेभ्यः स्वाहा उत्सृष्टपिण्डमन्त्रः। ॐ आः सर्व्वतथागताभिषेकसमयश्रिये हुँ हुँ प्रतिमादेः स्नानमन्त्रः।

॥ वज्रयोगिनीभाषितं वादिराजमञ्जुश्रीसाधनं समाप्तम् ॥

---

[1] A समारम्भ, NC समालभन। [2] C तेनाधिष्ठाय।
[3] A ०तोभातिका।

## 49.

नमो मञ्जुश्रिये ।

पूर्व्वोक्तविधानेन शून्य[1]ताभावनानन्तरं विश्वपद्मोपरि चन्द्रमण्डले रक्त[2]श्लौँकारं दृष्ट्वा तद्रश्मिभिः समानीत-तथागतज्ञानमत्रैव प्रवेश्य तत्परिणामेनोत्पलं तन्मध्य-चन्द्रस्थं तद्बीजं तद्विनिर्गतरश्मिभिर्वादिराड्मञ्जुश्रीरूपं जगन्निष्पाद्य निजबीज एव प्रवेश्य तत्परिणतमात्मानं झटिति मञ्जुश्रियमभिनिष्पादयेत् । द्विभुजैकमुखं पीतं ललिताक्षेपमुद्रया सिंहासनस्थं व्याख्यानमुद्रासलील-करद्वयं रत्नमकुटिनं दिव्यालङ्कारभूषितमुत्पलवाम-भुजाधिष्ठितमूर्त्तिकमक्षोभ्यमकुटिनं एवं समयसत्त्वमुत्पाद्य हृद्बीजसमाकृष्टज्ञानसत्त्वं पुरतो दृष्ट्वा समयस्त्वं दृश्यहोः समयस्त्वं समयोऽहं समयस्त्वमहमिति समयचोदनां कृत्वा जः हुँ वँ होः इति चतुर्बीजाक्षरैरा[4]कर्षणादिकं कार-येत् । मन्त्रस्त्वयमेव वर्णसन्दोहराजः ।

॥ इति वादिराट्साधनं समाप्तम् ॥

---

[1] AC ०तानन्तरं ।
[2] A ०ककारं, C ०क्लीँकारं ।
[3] A has समयसत्त्वं पुरतो दृष्ट्वा after दृष्ट्वा ।
[4] AC ०कर्षादिकं ।

50.

पूर्व्वोक्तविधानेन प्रथमं हृदीन्दुमध्ये बीजं[1] षष्ठस्य पञ्चमं पञ्चमस्वरेण पूरितं शून्य द्वयदेवेनाक्रान्तं[2] तद्बीजरश्मिज-गुरुबुद्धबोधिसत्त्वान् दृष्ट्वा पूजयित्वाभिवन्द्य च अनेन मन्त्रेण ॐ वज्रपुष्पे हुँ, ॐ वज्रधूपे हुँ, ॐ वज्रदीपे हुँ, ॐ वज्रगन्धे हुँ,[3] ॐ वज्रनैवेद्ये हुँ। ततो रत्नत्रयं मे शरणमित्यादि पठेत्, प्रणिधानपूर्व्वकं[4] सर्व्वधर्म्मनैरात्म्यं भावयेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततो—

बीजं मायोपमाकारं त्रैधातुकमशेषतः।
दृश्यते स्पृश्यते चैव यथा माया हि सर्व्वतः।
न चोपलभ्यते चैव सर्व्वस्य जगतः स्थितिः॥

इत्यधिमुच्य ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहम्। पूर्व्वोक्तबीजनिष्पन्नं श्रीमञ्जुवज्रं पञ्चवीरक[5]-शेखरं कुमारं सर्व्वाभरणभूषितं कुङ्कुमारुणं वामेनोत्पलं दक्षिणेन लीलया स्थितं सिंहासनस्थमात्मानं कुमार-रूपेण चिन्तयेत्। अस्य मुद्रा भवति—हस्तद्वयं सम्पुटाञ्जलिं कृत्वा तर्ज्जनीद्वयाभ्यामनामिकानखौ पिधाय उत्पलविकचसंस्थिता। हृदूर्णाकण्ठमूर्द्धं वा लक्षजापः ॐ वागीश्वर[6] मुः।

॥ मञ्जुघोषसाधनम् ॥

---

[1] बीजं dropped in A.
[2] A ०द्ववेदवना०।
[3] ॐ वज्रगन्धे हुँ not to be found in A.
[4] AC पूर्व्वंध०।
[5] AC पञ्चवीरचे०।
[6] AC वागीश्वरं।

## 51.

नमः श्रीवादिराड्मञ्जुघोषाय[1] ।

नत्वा ज्ञानमयं नाथं सर्व्वसिद्धिप्रदायकम्[2] ।
तत्साधनमहं वच्मि क्रियातन्त्रानुसारतः ॥

प्रथमं तावन्मन्त्री मनोऽभि[4]रुचिते स्थाने यथासुखमुपविश्य दुःखार्णवे पतितं सत्त्वधातुं दृष्ट्वा प्रणिधिं कुर्य्यात् । दुःखिता अमी सत्त्वाः संसारे संसरन्ति ते मया मञ्जुघोषेण भूत्वा सर्व्वसत्त्वा[5] अनुत्तरपदे प्रतिष्ठापयितव्या इति । ततः [6]पटादिगतं भगवन्तं मञ्जुघोषं गुरुबुद्धबोधिसत्त्वांश्च पुरतोऽवलम्ब्य पुष्पादिभिः सम्पूज्य प्रणिपत्य पापदेशनामकरणसंवरं पुण्यानुमोदनां आत्मभावनिर्यातनां त्रिशरणगमनं बोधिचित्तोत्पादं च कुर्य्यात् अनेन गाथाद्वयेन—

रत्नत्रयं मे शरणं सर्व्वं[8] प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥

उत्पादयामि वरबोधिचित्तं
निमन्त्रयामि अहं सर्व्वसत्त्वान् ।
इष्टां चरिष्ये वरबोधिचारिकां
बुद्धो भवेयं जगतो हिताय ॥

ततो मार्गाश्रयणम् । ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहं इत्यर्थानुगमेन वारत्रयमुच्चार्य्य स्वभावशुद्धमधिमुच्य सर्व्वधर्म्मनैरात्म्यं भावयेत् । त्रैधातुकं शून्यम-

[1] *Namaskāra* only found in Ab
[2] Ab प्रसाधकं ।
[3] ANC वच्ये ।
[4] A रुचिस्थाने ।
[5] सर्व्वसत्त्वा found only in Ab.
[6] Ab पटादिकं ।
[7] A ०त्पादनेन गाथा, N ०त्पादनश्च ।
[8] N ०म्यहं ।

[illegible] ग्राह्यग्राहकवर्ज्जितं दृष्ट्वा स्वहृदये[1] अकारेण चन्द्रमण्डलं तस्योपरि मुंकारं तप्तचामीकराभं तदुद्भूत[2]गभस्तिसमूहैः सर्व्वलोकधातुप्रसरानवभास्य यथाभव्यतया सत्त्वानामर्थं कृत्वा सर्व्वतथागतान् सञ्चोद्य तस्मिन् बीजे प्रवेश्य तत्सर्व्वं निष्पाद्य[3] मञ्जुघोषस्वरूपमात्मानं भावयेद् द्रुतकनकनिभं[4] द्विभुजमेकमुखं सिंहस्योपरि पद्मचन्द्रासने[5] अर्द्धपर्य्यङ्कनिषण्णं चिचीरं रत्नमुकुटिनं चन्द्रप्रभामण्डलं कुमाराकाररूपिणं सर्व्वालङ्कारभूषितं शृङ्गाररससंयुक्तं ईषद्धसितं द्वाभ्यां हस्ताभ्यां धर्म्मचक्र[6]मुद्राधरं अवसव्य[7]भुजासक्तप्रज्ञापारमितासहितेन्दीवरं वामजङ्घाश्रित[8]यमान्तकं महाक्रोधं नीलवर्णं विकटदंष्ट्राकरालं पिङ्गलकुटिलकेशमारक्तमण्डलाक्षं[9] [10]भयानकं भृकुटीघोरमुखं कपालमालाविभूषितशिरसं सव्यकरेण भगवतो जङ्घावलग्नं वामे दण्डधरं एवं विभाव्य कायवाक्चित्तेषु चन्द्रमण्डले ॐ आः हुँ इति [11]त्र्यक्षरं सितरक्तनीलवर्णं यथाक्रमेण विन्यस्य ततः स्तनान्तरितचन्द्रमण्डले मुंकारं विचिन्त्य ततः[12] पूज्यपूजकयोरभेदमा[13]लम्ब्य नानाविधदेवताभिः संस्तूयमानमात्मानं दृष्ट्वा स्फुरणसंहरणेन तावद् भावयेत् यावत् खेदो न जायते

[1] Ab स्वहृद्यंका० ।
[2] ANC तदुद्भव० ।
[3] AN निष्पत्या ।
[4] Ab द्विभुजेक० ।
[5] Ab ०सनार्द्धपर्य्य० ।
[6] C ०मुद्रां दधानं ।
[7] ANC सव्य० ।
[8] A ०पद्मान्तकं, Ab ०यामान्तकं ।
[9] ANC ०मण्डलाङ्गं ।
[10] भयानकं ...... ०विभूषितशिरसं found only in Ab.
[11] ANC अक्षरं ।
[12] N तत् ।
[13] AC ०भेद्यमव० ।

एवं [1]भावयतो नित्यं बुद्धबोधिप्रसिद्धये[2] ।
इह[3] जन्मनि प्राप्नोति मञ्जुनाथमहाकृपाम्[4] ॥

भावनाखिन्नः स्वहृदि चन्द्रमण्डले मन्त्रं विन्यस्य जपेदासक्त[5]मानसः । तत्रायं जपमन्त्रः ॐ धर्मधातुवागीश्वर मुः । एवं जपं कृत्वा भावनां चाप्यखेदतः उत्थातु[6]कामश्चेत् पुनस्तथैव संपूज्य संस्तुत्य कुशलं परिणाम्य क्षमापयेदनया गाथया—

यत् कृतं दुष्कृतं किञ्चित् मया मूढधिया पुनः ।
क्षन्तव्यं तत् त्वया नाथ यतस्त्राताऽसि देहिनाम् ॥

जगद्धिताय प्रणिधानं कुर्य्यात् । ततः—

अनेन कुशलेनाहं बुद्धत्वमधिगम्य च ।
तारयेयं जगत् कृत्स्नमगाधाद् भवसागरात् ॥

ततः सर्व्वधर्म्मसमतामध्यालम्ब्य सर्व्वं मञ्जुघोषमयं पश्यन् [7]स्वदेवतागर्वमुद्वहन् यथासुखं विहरेदिति । एवं [8]चतुःसन्ध्यं त्रिसन्ध्यं वा करणीयमिति ।

इति साधन[9]माधाय [10]यदवापि [11]फलं मया ।
[12]तेनायं [13]त्रिभवो लोको भूयान्मञ्जुवरोऽखिलः ॥

॥ [14]आर्य्यश्रीमद्वादिराड्मञ्जुश्रीसाधनं समाप्तमिति ॥

---

[1] AN भावयते ।
[2] ANC प्रसिध्यति ।
[3] Ab इहैव ।
[4] ANC ०कृपं ।
[5] Ab जपेदति० ।
[6] A उत्थितु० ।
[7] AN देवता० ।
[8] A चतुःसन्ध्येन्द्रियं लक्षया० ।
[9] C ०माराध्य ।
[10] A पदं ।
[11] A कलं ।
[12] C तन्मयं ।
[13] A त्रिभुवो ।
[14] Ab reads आर्य्यवादिराटसाधनं समाप्तमिति ।

52.

प्रथमं तावन्मन्त्री सुगन्धोपलिप्तं नानापुष्पावकीर्णं भूमिभागं कृत्वा तन्मध्यसुखासने समुपविश्य त्रिशरण-गाथामुच्चारयेत् । पश्चात् स्वहृदये अकारं पश्येत् तत्परिणामेन चन्द्रमण्डलं तन्मध्ये मुःकारं चिन्तयेत् । ततो मुःकारात् पञ्चवर्णान् रश्मिमेघान् स्वरोमकूपेभ्यो निश्चारयेत् । तैश्च रश्मिभिर्म्मञ्जुघोषरूपैः संछन्नं गगनं पश्येत् । ततस्तान् पुष्पादिभिः पूजयेत् । ततः पापदेशनां पुण्यानुमोदनां प्रणिधानादिकं च कुर्य्यात् । ततश्चतुर्ब्रह्म-विहारं भावयेत् । पश्चात् तत् सर्व्वं शून्यं ध्यात्वा ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति मन्त्रमुच्चारयेत् । ततः पुनरपि स्वहृद्यकारं पश्येत् । तत् परिणम्य चन्द्र-मण्डलं तन्मध्ये मुःकारं तत्परिणामेन मञ्जुघोषरूप-मात्मानं पश्येत् सिंहस्थं कनकगौरवर्णं सर्व्वालङ्कारभूषितं व्याख्यानमुद्राव्यग्रकरं वामपार्श्वे उत्पलधरं अक्षोभ्यमकुटिनं दक्षिणे सुधनकुमारं वामे यमान्तकं पश्येदिति । भावनायाः खिन्नो मन्त्रं जपेत् ॐ वागीश्वर मुः ।

॥ वादिराट्साधनं समाप्तम् ॥

---

[1] A रश्मीन् मेघान् ।
[2] N तच्च ।
[3] A ०व्यग्र० ।
[4] A दक्षिणेन ।
[5] A भावनया ।
[6] A वागीश्वरं ।

53.

प्रज्ञाख्यार्च्चनपापदेशनशुभामोदादिमैत्र्यादिकं
मन्त्रोपाधिकसर्व्वधर्म्मतथतां चन्द्रद्वयान्तर्गतम् ।
पीताम्भोजं बिभर्त्ति पीतविलसन् मँकारबीजं ततः
चन्द्रादेः परिणामतो झटिति स स्याद् वादिराजः स्वयम् ॥
ततः[1] प्रज्ञाकरं तान्तं रान्तं[2] सान्तं सुपण्डितम् ।
ईश्वरिणं जपेन्मन्त्रं अर्द्धेन्दुबिन्दुनादिनम् ॥

॥ प्रज्ञावृद्धिनिधिवादिराट्साधनं समाप्तम्[3] ।
। कृतिरियं पण्डितश्रीहरिहरस्य ॥

54.

लोकानुग्रहकारिणे कुमाराकारधारिणे ।
मञ्जुश्रिये नमस्तुभ्यं तथतापथदेशिने ॥

मञ्जुश्रीकल्पोक्तविधिना वादिराट्साधनं निगद्यते । प्रथमं तावत् चतुरस्रं चतुर्द्वारं नानारत्नखचितवितानोपशोभितं मुक्तामयं ध्वजपताकादिमण्डितं[4] मण्डपं विचिन्त्य तत्र मध्ये पट्टमसूरकं[5] तत्रोपविश्य इदानीं बोधिचित्तमुत्पादयेत् । यावन्तः सत्त्वाः सत्त्वसंग्रहेण संगृहीता[6] ते

[1] A तथा ।
[2] AC नान्तं ।
[3] समाप्तं omitted in N.
[4] A नाश्रितं ।
[5] A पदममूरकं, N पटमसूरकं ।
[6] A ०सत्त्वसर्व्वं ।

सर्व्वे मया मञ्जुश्रीज्ञाने प्रतिष्ठापयितव्या इति यद्वा अनित्याः क्षणिका[1] निरात्मानः चित्तविठयिताः[2] स्वप्नेन्द्र-जालसदृशाः प्रतिभासमात्रा आदिशान्ताः प्रकृतिपरि-शुद्धा अभावा अजाता अनुत्पन्नाः तथताभूतकोटिशून्याः[3] सर्व्वधर्म्मा इति शून्यताया अधिवचनम्। तृष्णावशात् अमी सत्त्वा अविद्यान्धीकृता अकर्म्मविपाकदर्शिनः तेभ्यो गम्भीरं प्रतीत्यसमुत्पादकर्म्मक्रियावताराय धर्म्मं देशयिष्यामीति करुणाया अप्यधिवचनम्। अत एवाह भगवान् समाजादौ—

शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम्।

अस्योत्पादादुत्पादितं बोधिचित्तं बोधिसत्त्व इत्युच्यते। ततः सर्व्वबुद्धबोधिसत्त्वान् मनसैव सम्पूज्य ततः स्वहृदि हुँकारं रक्तवर्णं सूर्य्यकोटिशतसहस्रज्वलनभासुरा-कारमात्मानं ज्ञानदेहमवलोक्य तेनैव सूर्य्यमण्डलं विभाव्य तदुपरि चन्द्रमण्डलं कुङ्कुमाभं तच्च परमाक्षरमनेक-ण्यकोटिशतसहस्रनिर्य्यातनं मँकारं पञ्चवर्णसमायुक्तं दिग्व्योमपर्य्यन्तं समीक्ष्य ततो ज्ञानोच्छ्रेकात् मञ्चोद्य भगवन्तं मञ्जुश्रियं तप्तकाञ्चनाभं पञ्चवीरकुमारं धर्म्म-चक्रमुद्रासमायुक्तं प्रज्ञापारमितान्वितनीलोत्पलधारिणं सिंहस्थं ललिताक्षेपं सर्व्वालङ्कारभूषितं शृङ्गार[4]सागर-तरङ्गप्रभया त्रैधातुकमापूरयन्तं अनवरतगद्यपद्यसंस्कृत-[5]बहुलानेकरुतधर्म्मं देशयन्तं स्फुरणसंहरणपूर्व्वकमानीय

---

[1] A चणिक०

[2] A चित्तविपठिला।

[3] A पञ्चतथा०।

[4] ०सागर० dropped in A.

[5] A बकुलनक०, C बकुलामेक०।

[illegible] ॐ मञ्जुवर हुँ इत्यनेन दृढीकृत्य [illegible] स्वभावात्मकोऽहमिति भावयेत्। ततो भावनया [illegible] जपेन्मन्त्रं ॐ मञ्जुवर हुँ। एषा भगवतो विधिः शुचि-साचारसम्पन्नः सन् सप्त लक्षाणि जपेत्।

॥ वादिराट्साधनं समाप्तम् ॥

---

55.

नमोऽरपचनाय।

शशधरमिव शुभ्रं खड्गपुस्ताङ्कपाणिं
 सु[1]रुचिरमतिशान्तं पञ्चचीरं कुमारम्।
पृथुरतिवरमोक्षं पद्मपत्रायताक्षं
 कुमतिदहनदक्षं मञ्जुघोषं प्रणम्य॥

लघुतरमुपदेशं चक्ररत्नस्य कुर्या-
 मरपचनसुसिद्ध्यै जन्मिनो येन नूनम्।
निखिलपदवीं[2] बोद्धीं प्राप्नुवन्त्यग्रबुद्धि-
 मविरतमभियोगाद् भावयन्तोऽर्द्धवर्षम्॥

सुरभिकुसुमाकीर्णे गन्धतोयोपसिक्ते
 समशुचिसुमनोज्ञे मन्त्रविद् भूमिभागे।
क्वचिदतिमृदुरम्ये विष्टरे चोपविश्य
 सुखरतिमनिमित्तं भावयेद् बोधिचित्तम्॥

---

[1] Ab सुरुचित०।  [2] Ab ०बोधिं।

[illegible]भावशुद्धं समुदीर्य मन्त्रं
विभाव्य शून्यं निखिलं समन्तात् ।
परार्थसार्थं पुनरात्मदेहं
प्रभास्वरं तं सकृदेव पश्येत् ॥

अथान्तरीक्षे स्वहृदीन्दुमण्डलं
स्वरेण [2]चाद्येन विभाव्य भास्वरम् ।
अथात्र धीःकारमुदीक्ष्य पाण्डरं
तं मञ्जुघोषं विदधीत निर्म्मलम् ॥

शशाङ्ककोटिद्युतिमादधानं
न्यसेच्च सर्व्वाभरणोज्ज्वलं तम् ।
ध्यानैकनिष्ठं कमलोपरिस्थं
सरागमीषद्धसितं मनोज्ञम् ॥

स्वहृदि वरमकारं विस्फुरन्तं समीक्ष्य
तमतुलघृणिजालं चक्रमष्टाररूपम् ।
तदुपरि शशिबिम्बं भावयेत् तेन मन्त्री
शशधरकरगौरं मञ्जुघोषं तमेव ॥

विहसितसकटाक्षां दक्षिणे चारुरूपां
गुरुतरकुचयुग्मां केशिनीं तस्य पश्येत् ।
सुरुचिरललिताङ्गीं वामतश्चोपकेशीं
सकलगुणनिधाने भावयेत् ते च नाभ्याम् ॥

न्यस्येत् पुरस्तात् खलु जालिनीप्रभं
सुशुभ्ररेफोद्भवमेव निर्म्मलम् ।

---

ANC ०सिद्धं ।
AbNC विक्र० ।

[2] Ab वाद्येन ।

पँकारजं रश्मिमयं मनो[1]हरं
  चन्द्रप्रभं तं विदधीत पृष्ठतः ॥

ज्वलन्गभस्तीन्यथ चाक्षराणि
  पृथुप्रभावानि विभावयेच्च ।
अज्ञानशैलं विधमन्ति तानि
  कुर्व्वन्ति सुज्ञानमनाविलं च ॥

चक्रं भ्रमत् शीघ्रमधो विचिन्त्य
  मोहान्धकारं विधमत् समस्तम् ।
सदैव तन्निश्चलमेव पश्येत्
  शशाङ्कबिम्बं बृहदंशुजालम् ॥

शशाङ्कतो वै पृथुरश्मिमेघं
  निःसृत्य पश्येद् दशदिग्व्रजन्तम् ।
सत्त्वानलङ्कृत्य तथात्मदेह-
  मागत्य चान्त्ये प्रविशन्तमिन्दौ ॥

सदरपचनमन्त्रं संजपन् मन्त्रिमुख्यो
  दृढमतिरुपदेशात् भावयन्नाशु भूमीः ।
वरविमलमनोज्ञाः पारमीश्चापि सर्व्वाः
  प्रहतविमतिदोषाः प्राप्नुयात् ता जिनानाम् ॥

वरगुरुरतिवज्रैरग्रसद्धर्म्म[2]तेजैः
  सुगतगणपुरस्तात् योऽभिषिक्तो विधानात् ।
सुमतिरजितमित्रस्तेन संग्रन्थितं हि
  सदरपचनचक्रं जन्मिनां बुद्धिसिद्धौ ॥

---

[1] Ab ०रमं ।  [2] N ०गर्ब्बैः ।

संग्रन्थ्य चक्रं सुविधानमग्र्यं
पुण्यं मयाऽऽप्तं विपुलं समन्तात्।
यत् तेन लोको निखिलो[1]ज्झिताघः
सन्मञ्जुघोषोऽस्तु सुखैकनिष्ठः॥

॥ अरपचनसाधनम्॥



56.

नमोऽरपचनाय।

प्रथमं तावत् मन्त्री मनोऽनुकूले प्रदेशे सुखासनोपविष्टः स्वहृद्यादिवर्णोद्भवेन्दौ चतुर्थस्य चतुर्थं बीजमौकारान्तं बिन्दुद्वयसंयुतं विभाव्य ततस्तत्करनिकरैरपसारितक्लेशान्धकार[2]हृदयो मैत्रीकरुणामुदितोपेक्षेति चतुर्ब्रह्मविहारं भावयेद् वक्ष्यमाणक्रमेण। का मैत्री? या सर्व्वसत्त्वेष्वेकपुत्र[3]प्रेमता। का करुणा? या त्रिदुःखदुःखितानां सत्त्वानां संसारसागरादुद्धरणकामता। का मुदिता? उत्पादितकुशलमूलपरभोगैश्वर्य्यादिषु हृष्टचित्तता। कोपेक्षा? सर्व्वत्र प्रति[4]घानुनयपरहितधर्म्मतायां स्वरसवाहिनी प्रवृत्तिरिति चतुर्ब्रह्मविहारभावनानन्तरं स्वहृद्बीजरश्मिभिरेव निर्गतसमस्ताकाशदेशव्यापि-

---

[1] A omits ज्झिताघः......बीज॰ including the colophon and part of the next *Sādhana*.

[2] Ab ॰कारं।

[3] AC ॰मेकता।

[4] N ॰घातन॰।

गुरुबुद्धबोधिसत्त्वान् स्फुरणसंहरणाकारेण जगदर्थक्रिया-करुणैकपरान् दृष्ट्वा स्वहृद्बीजकिरणैरेव दिव्यगन्धपुष्प-प्रकरादिकं निश्चार्य्य मण्डलपूर्व्वकं कृताञ्जलिना गुरु-बुद्धबोधि[1]सत्त्वचरणकमलविन्यस्तमूर्ध्ना प्र[2]णामनमा वन्दना। तद्रश्मिरेव निर्गतपुष्पधूपदीपगन्धचूर्णचीवर[3]च्छत्रध्वज-घण्टापताकादिभिस्तेषां च बाह्याध्यात्म्यपूजादिभिः संपूजनं पूजा। ततः पापदेशनादिकं कुर्य्यात्—

[4]द्वेषाच्च रागादथ मोहतोऽपि
कायेन वाचा मनसाऽन्यतोऽपि।
पापं कृतं कारितमेव यत् तत्
सर्व्वं जिनानां पुरतो दिशामि॥

इति पापदेशना।

[5]पुण्यं च यत् सर्व्वतथागतानां
अन्यच्च सम्बोधिसमाश्रितानाम्।
प्रत्येकबुद्धस्य च सद्गुरूणां
[6]सर्व्वं जिनानां स्वनुमोदयामि॥

इति पुण्यानुमोदना।

समस्तकाल[7]त्रयवर्त्तिबुद्धा-
ननन्तदिग्व्यापिकृपागुणौघान्।

---

[1] Ab °सत्त्वानां।    [2] ANC °णामो।

[3] ANC omit °च्छत्र°।

[4] Ab reads differently— यत्पापं मयोपार्जितं सर्व्वजन्मसु रागज-द्वेषजमोहजं वा कायेन वा मनसा वा वचोभिर्वा तत्सर्व्वं प्रतिदेशयामि।

[5] Ab reads differently—यत्पुण्यं च सर्व्वतथागतानां बोधि-सत्त्वश्रावकप्रत्येकबुद्धानां सद्गुरूणां च तत्सर्व्वं पुण्यमनुमोदयामि।

[6] सर्व्वं पुण्यं in N.    [7] Ab यावन्ति।

प्रहीनदोषार्य्यगणान् सधर्म्मा-
नवेत्य भक्त्या शरणं प्रयामि ॥

इति त्रिशरणगमनम् ।

संश्रित्य जैनं परिशुद्धमार्गं
ब्रह्मेन्द्ररुद्रप्रभृतिष्वनर्घम् ।
इत्थं मयोपार्ज्जितपुण्यवृन्दाद्
उत्पादयाम्येष सुबोधिचित्तम् ॥

इति जिनमार्गाश्रयणबोधिचित्तोत्पादौ । एवं सप्तविधानुत्तरपूजानन्तरं गुरुवचसा बाह्याध्यात्म्यशून्यतां विभाव्य पुन[1]स्तद्दृढीकरणार्थं ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति गाथामुच्चार्य्य तदनु स्वचित्तं प्रतिभासमात्रं स्वच्छाप्रतिघरूपमादिस्वरोद्भवेन्दुमण्डलाकारेण स्वचित्तं विचिन्त्य तदुपरि पूर्व्वोक्तबीजं तदिन्दुबीजपरिणतं खड्गं स्फुरद्रूपं तदनु मुष्टिमध्ये शशधरोपरि पूर्व्वोक्तबीजं ततः खड्गबीजपरिणतं मञ्जुघोषं शरत्काण्डसमप्रभं दशदिगालोककरनिकरधरं द्विभुजं कुमाराकृतिं सव्येन समस्ताज्ञानोच्छेदनैकपरप्रज्ञाखड्गव्यग्रकरं अवसव्येनोपायभूतसकलशास्त्रकलापुण्यैकपुस्तकव्यग्र[2]पाणिं सर्व्वालङ्कारभूषितं रक्ताम्बरधरं ध्यानैकनिष्ठं प्रबुद्धपद्मानन्नं क[3]मलदलेक्षणं उत्पादितमहापुरुषलक्षणं इन्द्रनीलमणिसन्निभाकुञ्चितपञ्चचीरं सिताष्टदलकमलेन्दौ वज्रपर्य्यङ्केनोपविष्टं सर्व्वतथागतज्ञानस्वरूपं मञ्जुश्रीरूपमात्मानं विभाव्य, एवं समयसत्त्वाहङ्कारवान्

[1] Ab ॰स्तदेव ।
[2] Ab हस्तः ।
[3] ANC ॰मले॰ ।

योगी स्वहृदि अँकारनिष्पन्नं शुभ्रमष्टारचक्रं स्फुरत्किरणगणैरशेषाज्ञानविध्वंसनकरं दक्षिणावर्त्तक्रमेण[1] स्वं भ्रमद् दृष्ट्वा तदुपर्य्यन्तरीक्षे आदिवर्णोद्भवेन्दुमण्डलं तदुपरि पञ्चाक्षरं यथाक्रमेण ज्वलदनलसङ्काशं सरश्मिकं समस्ताज्ञानोच्छेदकरं गुरूपदेशतो विभाव्य देवताकारनिष्पादनानलसो मन्त्री स्फुरणादिकं कृत्वा जपं कुर्य्यात्। अथवा हृदीन्दुमध्ये शुभ्राकारनिष्पन्नमरपचनाख्यं सितं सर्व्वालङ्कारभूषितं हृष्टं ध्यानैकनिष्ठं वज्रपर्य्यङ्केनोपविष्टं दक्षिणवामकराभ्यां [2]असिपुस्तकौ धारयन्तं इन्द्रनीलसकलाकुञ्चितपञ्चचीरधरं स्फुरदिन्दुसमाननं वदतां वरं स्वबीजेन्दुयुक्तहृदयं विभाव्य, तस्य पुरतः शुक्लरेफोद्भवजालिनीप्रभं [3]अरपचनवद् द्विभुजादियुक्तं स्वहृदीन्दौ स्वबी[4]जाधिष्ठितं दृष्ट्वा तदनु पृष्ठतः सितपकारनिष्पन्नं चन्द्रप्रभं स्वहृदीन्दौ बीजसंयुक्तमवलोक्य ततो दक्षिणे[5] शुभ्रचकारनिष्पन्नां केशिनीं सितां सर्व्वालङ्कारभूषितां पीनपयोधरां [6]सव्यावसव्येनासिपुस्तकधरां स्वहृदीन्दौ बीजान्वितां विचिन्त्य एवं [7]उत्तरेण शुक्लनकारनिष्पन्नामुपकेशिनीं च स्वहृदीन्दौ बीजसमन्वितां विभाव्य सर्व्वानरपचनसदृशान् विचिन्तयेत्। इत्थं देवतागणहृद्बीजकिरणस्फुरणसंहरणैर्जगदज्ञानद्वन्दमुच्छेदयन् धर्म्मामृतसकलशास्त्रशिल्पकलापैः सर्व्वसत्त्वान् सन्तर्पयन् मुहुर्मुहुः स्वच्छाप्रतिघरूपमात्मानं विभाव्य गुरूपदेशतः समा-

---

[1] AN शुभ्रं दृ°, C शुभ्रमनु दृ°। [2] AC °मणिपु°।
[3] ANC omit अरपचनवत् द्विभुजादियुक्तं। [4] Ab °जान्वितं।
[5] Ab °णातः। [6] ANC omit.
[7] ANC omit.

स्थितो मन्त्री जपं कुर्य्यात्। प्रणवादिपञ्चबीजाक्षरमध्ये समयसत्त्वबीजात्मन्त्रः। यदा [1]उत्थानाशयो [2]भवेत् तदा स्वमन्त्रं गुरूपदेशादुच्चार्य्य तदनु शताक्षरगाथां पठेत्। ॐ वज्रसत्त्व समयमनुपालय, वज्रसत्त्वत्वेनोपतिष्ठ, दृढो मे भव, सुतोष्यो मे भव, सुपोष्यो मे भव, अनुरक्तो मे भव, सर्व्वसिद्धिं मे प्रयच्छ, सर्व्वकर्म्मसु च मे [3]चित्तं श्रेयः कुरु हुँ हहहह होः [4]भगवन् सर्व्वतथागतवज्र मा मे मुञ्च वज्रीभव महासमयसत्त्व आः इति शताक्षरमन्त्रपठनानन्तरं स्फुरणादिकं विसृज्य समयसत्त्वगर्व्वेण सर्व्वैर्य्यापथेषु विहरन् समाहितो योगी सम्यग्ज्ञानसागर[5]पारगो भूत्वा अचिरेणैव कालेनानुत्तरां बोधिं प्राप्नोतीति।

संलिख्य साधनं शुभ्रं मुक्तकेनेह [6]मुक्तगे।
पद्माकरस्य यत् पुण्यं तदस्तु भवमुक्तये॥

॥ मुक्तकेनारपचनसाधनं समाप्तम्॥

---

[1] AC उत्थानना०।
[2] Ab भवति।
[3] Ab चित्तश्रियः।
[4] A omits.
[5] AC ०प्राप्तो।
[6] ANC व्यक्तये।

57.

मध्ये मञ्जुश्रि[1]यं न्यस्येद् रक्तवर्णं पूर्व्वेण जालिनीप्रभं हरितवर्णं [2]रेफाक्षरेण दक्षिणेन केशिनीं पीतवर्णां पकारेण पश्चिमेन चन्द्रप्रभं चन्द्रवर्णाभं चकारेण नकारेण उपकेशिनीं रक्तवर्णां लिखेत्। वरदमुत्पलकरं मञ्जुश्रियं वामेन पद्मधरं वरदं जालिनीप्रभं उत्पलवरदहस्तामुपकेशिनीं वरदपद्महस्तं चन्द्रप्रभं रक्तपद्मधरां केशिनीं वरदकरां च। नाभिमूले चक्रमष्टारं भ्रमन्तं वह्निसमप्रभं तदुपरि चन्द्रमण्डलं तस्योपरि चतुरारं चक्रं चक्रान्तर्गतान्यक्षराणि ध्यायेन्मन्त्राक्षराण्येव देवताबिम्बम्। तेषां हृदये तान्येवाक्षराणि। ततः सकलान् वर्णान् सर्व्वरसगुणोपेतान् दशदिग्व्यापकानिति यावत्।

॥ [3]आर्य्यमञ्जुश्रीभट्टारकभावनोपदेशः ॥

---

[1] AC यम्पश्येत्। [2] AC रेफोद्भवेन।
[3] AC आर्य्य चा०।

58.

सद्योऽनुभवमञ्जुश्रीसाधनं साधु कथ्यते ।
प्रज्ञार्थि[1]जनार्य्यैः प्रज्ञाविषव्यामोहहानये ॥

प्रथमं [2]तावद् योगी क्वचिन्मनोऽनुकूले प्रदेशे अकारस्वरोद्भवेन्दुस्थितधीःकारबीजविनिर्गताङ्कुशाकाररश्म्याकृष्टारपचनादेः पूजादिकं विधाय शून्यतां भावयेत्। ततश्चित्ताकारपरिणतकुमुदबन्धुस्थितधीःकाराभिनिर्वर्त्तिता[3]निमित्तनिस्त्रिंशं पश्येत्। तदग्रे आदिस्वरपरिणताब्जोपरि असिबीजं सर्व्वमेतत् परिणम्य खड्गपुस्तकधारिणमाकुञ्चितपञ्चचीरं रक्तवस्त्र[4]युगयुतं शृङ्गारवेशधारिणं स्मितविकसितवदनं शशाङ्ककान्तितुल्यशोभं विश्वदलकमलस्थ[5]बद्धपर्य्यङ्कं सद्योऽनुभवारपचनरूपमात्मानमीक्षेत। ततः स्वहृद्यादिस्वरपरिणतमस्पृशदष्टारचक्रं तदुपर्य्यङ्कुशीमात्रेण स्वरादि[6]संभूतमस्पृशन्तमिन्दुमण्डलं तत्र च चन्द्रबीजजनितमसिं तत्कोटिचन्द्रं च पूर्व्वोक्तखड्गबीजविराजितं खड्गादिपरिणामेन च तथैव मञ्जुघोषं विभावयेत्। तदग्रे च रेफजखड्गादिस्व[7]रमोषधीशस्थितरेफं विभाव्य खड्गादिपरिणतं जालिनीकुमारं भगवद्रूपं पश्येत्। तथा पृष्ठे तथैव पञ्च[8]माद्यक्षरेण चन्द्रप्रभं दक्षिणे तथैव चकारेण केशिनीं स्तनभरविराजितां नाथरूपां वामे चोपकेशिनीं नकारेण तथैव च सर्व्वेषां स्वहृन्निशाकरे सितं स्वस्व-

[1] A ०जनदोः, NC ०जनाद्यैः ।
[2] AC भावये० ।
[3] ANC ०निष्पित० ।
[4] AC ०युतयुतं ।
[5] AC ०मर्ङ्कप० ।
[6] Ab ०संस्कृत० ।
[7] ANC ०रजो० ।
[8] Ab ०मात्त्व० ।

बीजं विचिन्तयेत्। ततो नायकहृद्बीजविनिर्गतां[1]स्वाकृष्टज्ञानसत्त्वेन सहैकतां च चक्रं च शीघ्रं भ्रमत् चन्द्रस्थदेवताचतुष्टययुक्तं चात्मानं [2]स्थितं अशेषवाङ्मयं स्फुरणसंहरणं च ध्यायात्। ध्यानात् खिन्नो जपेन्मन्त्रम्। तत्रायं मन्त्रराजः अरपचनधीः इति।

सद्योऽनुभवमञ्जुश्रीसाधनं पुण्यमाचितम्।
यत् कृत्वा तेन लोकोऽस्तु मञ्जुघोषसमः सदा॥

॥ सद्योऽनुभवारपचनसाधनम् ॥

---

59.

बीजेभ्यः स्फारयेद् रश्मीनुच्छ्वासेनाथ रश्मिभिः।
निःश्वा[3]सौघैर्ज्ञानसत्त्वं बीजेष्वाकृष्य संहरेत्॥

विश्रम्य ज्ञानस[4]त्त्वाद्यबीजकस्फारसंहृतौ।
श्वासस्य स्थिरधीः कुर्य्यात् निर्गमागमयोः क्रमात्॥

असि[5]विधुवरबीजं चन्द्रबिम्बोपरिस्थं
क्रमगतिपरिणद्धं विद्रुतापत्तिशुद्धम्।
तदनु च मतिपुञ्जं मञ्जुघोषादिरूपं
भवति सु(कु)मतिचक्रं कोटिमोक्षप्रदं च॥

---

[1] C ॰तास्वा॰।
[2] ANC स्थिरं।
[3] AC ॰साद्यै॰।
[4] N ॰त्त्वाद्यं।
[5] AC ॰विधर॰।

विषौ बीजासितन्सुष्टिचन्द्रबीजानि रोचिषाम् ।
रश्मीकृत्य गतायाते चिन्तयेत् पञ्च देवताः ॥

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं विश्वपद्मसूर्य्ये पीत[1]वँकारबीजपरिणतं झटिति वज्रानङ्गमञ्जुश्रीभट्टारकमात्मानमभिनिष्पादयेत् पीतवर्णमेकमुखं त्रिनेत्रं षड्भुजं [2]जटाधरं द्विरष्टवर्षं सशृङ्गारं प्रत्यालीढपदं खड्गबाणदर्पणधरं दक्षिणकरत्रयं कार्मुककुवलयकंकेल्लिधारिवामकरत्रयं दिव्याभरणवसनभूषितमक्षोभ्यमुकुटिनं ध्यात्वा मदनप्रयोगेन भावयेत् । तथाहि—

इषुणा तु कुचं विद्धा अशोकैस्ताडयेद् हृदि ।
खड्गेन भीषयेत् साध्यां दर्पणं दर्शयेत् ततः ।
उत्पलेन पदं बद्धा आकर्षयेत् स विह्वलाम् ॥

मुक्तकेशामिति । ॐ अमुकीमाकर्षय मञ्जुघोष ह्रीः जः ।

॥ इति वज्रानङ्ग[3]भट्टारकसाधनं समाप्तम् ॥

---

[1] AC चँका० ।
[2] A चन्द्रज० ।
[3] N omits ०भट्टारक० ।